# सारस्वती सुषमा

अनन्तश्रीविभूषितानां श्रीश्री १००८ जगद्गुरुशङ्कराचार्याणां
यतिचक्रचूडामणीनां श्रीमज्जयेन्द्रसरस्वतीस्वामिपादानाम्

## अमृतमहोत्सवविशेषाङ्कः



सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः
वाराणसी

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

**अनन्तश्रीविभूषितानां श्रीश्री १००८ जगद्गुरुशङ्कराचार्याणां यतिचक्रचूडामणीनां श्रीमज्जयेन्द्रसरस्वतीस्वामिपादानाम्**
**अमृतमहोत्सवविशेषाङ्कः**


प्रधानसम्पादकः

**प्रो. वेम्पटिकुटुम्बशास्त्री**

कुलपतिः

सम्पादकः

**प्रो. नरेन्द्रनाथपाण्डेयः**

निदेशकः

अनुसन्धानसंस्थानस्य

शिक्षण-शोध-प्रकाशन-संस्थानस्य च






६२ वर्षे | वार्षिकं मूल्यम् - १०० रूप्यकाणि

१-४ अङ्काः | जून-सितम्बर-दिसम्बर-मार्च, २००७-०८ ई.

# प्रस्तावना

क्षण:! महिष्ठ: क्षण:! अमृतमय: क्षण:! **सारस्वत्या: सुषमाया:** कृतकृत्यताया धन्यतायाश्च क्षणोऽसौ। यत्कारणम्—'सञ्चरद् ज्ञानमि'ति, 'सम्भाषद्दैव'मिति जेगीयमानानां श्रीमदाद्यशङ्करभगवत्पादप्रतिष्ठापित-श्रीकाञ्चीकामकोटिपीठस्य अविच्छिन्नाचार्यपरम्परायाम् अष्टषष्टितमा-नामाचार्याणां ब्रह्मलीनानाम् अनन्तश्रीविभूषितानां **श्रीचन्द्रशेखरेन्द्रसरस्वतीश्रीपादानां 'तीर्थीकुर्वन्ति तीर्थानि'** इत्युक्तिमक्षरश: सार्थकयतां त्रिभुवनसारभूते परमपावनकाशीक्षेत्रे त्रिभुवनपावन्या गङ्गाया: सर्वोत्तमतीर्थे मणिकर्णिकायां पावनप्रथमपदार्पणस्य अमृतमहोत्सवमभिलक्ष्य तत्स्मृतौ एषा प्राकाश्यं नीयत इति। यत्कारणञ्च तत्तादृशानां तेषामेवाचार्याणां करकमलसञ्जातानां छायेवताननुगच्छतां नवषष्टितमानामाचार्याणाम् **अनन्तश्रीविभूषितानां श्रीजयेन्द्र-सरस्वतीश्रीपादानाम् अमृतमहोत्सवायोजनमभिलक्ष्य** शुभतमेऽस्मिन् सन्दर्भे प्राकाश्यं नीयत इति च। द्विगुणितमस्या: सौभाग्यम्।

समग्राऽपि विंशशताब्दी साक्षी विराजते राष्ट्रेणानेन धार्मिक-सांस्कृतिक-पारम्परिकशिक्षाक्षेत्रेषु संसाधितस्य सुमहतोऽभ्युत्थानस्य, विकासस्य, उच्चयस्य च विषये द्वाभ्यामेताभ्यामाचार्याभ्यां कृतस्यावदानस्य प्रयत्नस्य च। आसेतुहिमाचलम्, आपुरी-सोमनाथञ्च वेदशास्त्रपुराणागमानामध्ययनाध्यापन-कर्मणि आभ्यामाचार्याभ्यां रचित एव कोऽप्यप्रतीक्षित इतिहास:। विन्ध्याद्दक्षिणभारते विशिष्य च आन्ध्र-तमिलनाडु-कर्णाटक-महाराष्ट्रराज्येषु द्वयोरनयोराचार्ययोर्धर्मोपदेशप्रभावाद् भूयोभूय: कृताया: पादयात्राया: प्रभावाद् आपण्डितम् आपामरञ्च समग्रजनताया धार्मिक-सांस्कृतिकजीवने संख्यादृष्ट्या गुणदृष्ट्या च अत्यद्भुत: परिणाम: सुसंलक्ष्यते। परमाचार्याणां नामश्रवणमात्रेणेदानीमपि जनताया हृदयानि विकसितानि भवन्ति, नेत्रे चार्द्रे भवत:, कण्ठश्चावरुद्धो भवति, हस्तद्वयं स्वयं विनैव पुरुषप्रयत्नमञ्जलिबद्धं भवति। बहूनां वेदशास्त्रनिष्णातानां मतेन समग्रस्य सन्न्यासधर्मस्य आचार्यधर्मस्य च मूर्तं स्वरूपमासन् परमाचार्या:। भगवान् रामचन्द्र इव एकरूपं तेषां शतवर्षपूर्णमायुर्व्यतीतमासीत्। समस्तमपि भारतराष्ट्रं तथा अन्यान्यपि वैदेशिकानि राष्ट्राणि अवनतशिरस्कान्येव तेषां सन्निधावासन्।

'ईश्वरः नास्ति', 'ईश्वरः नास्त्येव', 'ईश्वरः सुनिश्चितं नास्त्येव' इति शिलापट्टं श्रीमठस्य सम्मुखे प्रतिष्ठाप्य संक्षोभयतां जनानां **'क्रिया केवलमुत्तरम्'** इति न्यायेनाचार्यौ प्रतिपक्षिभिरपि अनूह्यं क्रियात्मकमुत्तरं दत्तवन्तौ यत्कारणं समग्रे दक्षिणदेशे सहस्रशो जीर्णशीर्णदेवालयानां पुनरुद्धारो जातः, स्थगितानि नित्यधूपदीपनैवेद्यानि भूयस्या मात्रया पुनः प्रारब्धानि। शतशो भव्यमन्दिराणां नूतनतया आविर्भाव आसीत्। वेदागमाध्येतॄणां संख्या दशगुणिता अभवत्। लौकिकेष्वपि जनेषु सदाचारप्रवृत्तिर्गणनीयतयाभिवृद्धासीत्। श्रीमठस्य पार्श्वे विद्यमानमस्जीदकस्य विषये आचार्या भूयोभूयः कृतज्ञताभावपूर्णं कथयन्त आसन् यत् 'केनापि कार्यभारेणाहम् ईश्वरविषयकात् चिन्तनात् शिथिलोऽपि भवेयम्, तथाप्येते दिने पञ्चवारं माम् ईश्वराभिमुखं कृत्वोपकुर्वन्ति' इति। सर्वधर्मसमभावनया स्वधर्मस्य मनसा वाचा कर्मणाऽनुष्ठानं जनतायां सुप्रतिष्ठितमकुरुताम्। अतिविशदं तयोरवदानम् अतिसंक्षेपेण कतिपयवचोभिः प्रतिपादनं दुष्करं कर्म। साहसमात्रमेतत्।

तत्तादृशयोराचार्ययोर्यशोविताने पुष्पितामिमां **सारस्वतीं सुषमां** तयोरेव पदकमलयोरक्षरार्चनारूपेण समर्प्य मोमुदीति मनः। सन्दर्भे चास्मिन् अतिपुण्यतमे यया कयाचन विधया प्रत्यक्ष-परोक्षरूपिणी कर्तृता मामाश्रितेति धन्यञ्चात्मानं मन्ये।

संस्कृतसेवकः

**वाराणस्याम्**
फाल्गुनशुक्लैकादश्याम्,
२०६६ तमे वैक्रमाब्दे
(२५.०२.२०१० तमे खैस्ताब्दे)

**(प्रो. वेम्पटि-कुटुम्बशास्त्री)**
कुलपतिः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

# सम्पादकीयम्

सारस्वती-सुषमाया द्वाषष्टितमवर्षस्य १-४ अङ्का विशेषाङ्करूपेण प्राकाश्यं नीयमाना भगवत्पादशङ्कराचार्यपरम्पराया: काञ्चीपीठसम्बद्धाया ऊनसप्ततितमं क्रममलङ्कुर्वतां श्रीमदाचार्यचरणानां पावनम् अमृतमहोत्सवम् अभिलक्ष्य प्रवर्तत इत्यस्माकं कृते मोदस्यावसरो भवति। अस्मिन् विशेषाङ्के एकविंशतिलेखा विदुषां गभीराशयं प्रकाशयन्तो ग्रन्थकलेवरं पूरयन्ति, एको लघुग्रन्थोऽपि श्रीकृष्णस्तवरूप:—

**एतद्ध्यातुरचित्तानामिच्छतामकुतोभयम्।**
**भवाम्बोधिप्लवो दृष्टो हरिचर्यानुवर्णनम्।।**

इति भागवतसूक्तिप्रतिपादितभवाम्भोधिप्लवरूपेण हरिचर्यानुवर्णनपरोऽत्र घटकतया प्रविष्टोऽद्वैतसिद्धान्तप्रतिपादकानामाचार्यचरणानां सिद्धान्तानुशीलनार्थं मन:शुद्धयेऽपेक्षितभक्तिप्रवाहेण मलापसारणपूर्वकं चित्तशुद्धिकरोऽत्र योजितो जीवब्रह्मैक्यसाक्षात्काराय भक्तेरावश्यकताम् आचार्यचरणैरनुभूतां बोधयति। भगवत्पादशङ्कराचार्यैरीश्वरकृपाया: स्वरूपसाक्षात्कारार्थमज्ञाननिवृत्तेरावश्यकत्वमुक्तं 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' इति सूत्रे।

यद्यप्येवं वक्तुं शक्यते यद् उपास्योपासकभेदे हि उपासना प्रवर्तते। अद्वैते च भेदस्यानङ्गीकाराद् अद्वैतस्वीकारे उपासनापक्षपात: कर्तुं न शक्यते, तथापि उपासनाया अज्ञानकालीनायाश्चित्तसंस्कारकतयाऽद्वैतसाक्षात्कारे उपयोगात् ज्ञानकालीनायाश्च लोकसंग्रहार्थमपेक्षितत्वान्न भवत्युपेक्षणीयता तस्या:। अत एव कर्मज्ञानभक्तिरूपाणां त्रयाणां मार्गाणां विचारप्रसङ्गे ज्ञानमार्गम् अधितिष्ठतामपि कृते भक्तिरूहनीया उच्यते गीतायां व्याख्यातृभि:। भगवत्पादशङ्कराचार्याणां परम्परायान्तु सर्वत्र मठेषूपासनानां क्रोडीकारो दृश्यते, स च भक्ते: साधकत्वं सूचयति। किञ्च ब्रह्मप्रमानन्तरं घटादीनां लौकिकपदार्थानां बाधे भेदस्य निवृत्तिर्भवति, तत: पूर्वं भेदस्याबाधितस्य सत्त्वादुपासनायां बाधकाभावस्य वक्तुं शक्यतया नास्ति हानि:। अत एव सोपानपञ्चके आचार्यचरणै: सामान्यजनानां कृते ब्रह्मावगते: क्रमो दर्शित: कर्मभक्त्यादे:।

आचार्यचरणानां श्रीमज्जयेन्द्रसरस्वतीस्वामिपादानां प्राकट्यदिवसस्य पञ्चसप्ततितमावृत्त्यवसरेऽस्माभिस्तेषां स्वागतमभिनन्दनं चरणयोर्नतिपुरस्सरं क्रियमाणं भगवच्छङ्करपूजनं भवति, शिष्यपरम्परायां तेषां प्रवाहरूपेण प्रतिष्ठितत्वस्य सत्त्वात्। आचार्यविद्यावंश्या इमे 'प्रवर्तितो दीप इव प्रदीपादि'ति कालिदासोक्तिमनुस्मरद्भिरस्माभिराचार्याभेदेन पूज्या भवन्ति।

**'गुरुलोपो न कर्तव्यः स्वच्छन्दो यदि वा भवेत्'** इति गुरुगीतोक्तिदिशा गुरूणां स्मरणस्य सदा कर्तव्यतायाः प्राप्तत्वादस्माभिरत्र विशेषाङ्के भगवत्पादानां स्मरणं शब्दमर्यादया क्रियमाणं न सम्प्रदायमर्यादामतिक्रामति वाङ्मय्याः सपर्याया अत्रापि सत्त्वात्, भगवत्पादानां स्मरणेऽपि सपर्याक्रमस्य त्यागाभावात्। **'प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः'** इति चिरन्तनोक्तिरस्मान् पूज्यपूजायां प्रवर्तयति। वाग्जन्यसाफल्यमधिगन्तुमत्र केषाञ्चिद् गुणानां कीर्तनं गुणाढ्यानां भगवत्पादानां कृते सूर्यस्य कृते दीपदर्शनमिव भवदपि अविगीतशिष्टाचार-विषयत्वान्नानादरणीयतां प्राप्नोति।

आशासे, श्रद्धाभरमन्थरोऽप्ययं प्रयासोऽस्माकं समेषां कल्याणाय भविष्यतीति।

नरेन्द्रनाथपाण्डेयः

**वाराणस्याम्**
फाल्गुनशुक्लैकादश्याम्,
२०६६ तमे वैक्रमाब्दे
(२५.०२.२०१० तमे खैस्ताब्दे)

**(प्रो. नरेन्द्रनाथपाण्डेयः)**
निदेशकः
शिक्षण-शोध-प्रकाशन-संस्थानस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये

# विषयानुक्रमणी


१. **आचार्यसनाथं काञ्चीपीठम्**
प्रो. नरेन्द्रनाथपाण्डेयः १-१६

२. **काञ्चीमठः, आचार्यपरम्परा च**
डॉ. शरदिन्दुकुमारत्रिपाठी १७-२२

३. **प्रत्यभिज्ञादर्शने स्वातन्त्र्यस्यावधारणा**
प्रो. कमलेशझाः २३-५२

४. **यत्र विश्वं भवत्येकनीडम्**
डॉ. राममूर्तिचतुर्वेदी ५३-६२

५. **मत्स्यमहापुराणे विविधव्रतवर्णनानि**
प्रो. यदुनाथप्रसाददुबे ६३-७४

६. **पुराणेषु जीवस्य क्रमिकविकासविमर्शः**
डॉ. आशुतोषमिश्रः ७५-८८

७. **शक्तिविचारः**
डॉ. उदयनाथझाः 'अशोकः' ८९-१३४

८. **तन्त्रशास्त्रस्य पुरुषार्थानुबन्धित्वम्**
डॉ. परमात्मादुबे १३५-१४२

९. **व्याकरणे तदन्तविधिः**
डॉ. रमाकान्तपाण्डेयः १४३-१४६

१०. **लिपीनां प्रकारानुशीलनम्**
प्रो. शारदाचतुर्वेदी १४७-१५८

११. **नीतिशब्दव्युत्पत्तिस्तन्मूलकोऽर्थश्च**
डॉ. हेतरामकछवाहः १५९-१७०

१२. **अध्यासो नाम ख्यातिः**
डॉ. दिव्यचेतनब्रह्मचारी १७१-१८०

१३. **रसस्य प्रत्येयताप्रतिपादकस्थले काव्यप्रकाशस्याधुनिकव्याख्यातॄणां प्रमादः**
डॉ. विजयपालशास्त्री १८१-१८६

१४. **काव्यस्वरूपभेदविमर्शः**
डॉ. मङ्गलारामः १८७-१९६

१५. **उत्तररामचरितस्याङ्गिरससमीक्षा**
डॉ. हरिवंशकुमारपाण्डेयः १९७-२१२

१६. **निजानन्दविलासे अवस्थात्रयनिरूपणम्**
रामेश्वरि-विल्ला-एस. २१३-२१८

१७. **रसप्रतीतेर्न स्मृतिगुणवृत्त्यनुमितिगतार्थता**
डॉ. प्रभुसिंहयादवः २१९-२२४

१८. **सार्वजनीनशाश्वतमूल्यानां रत्नाकरो रामायणं महाकाव्यम्**
डॉ. धनञ्जयवासुदेवद्विवेदी २२५-२३८

१९. **योगशास्त्रे चित्तम्**
श्रीशशिमौलिनाथपाण्डेयः २३९-२४६

२०. **महायानसूत्रेषु अनात्मवादः**
डॉ. केदारनाथशर्मा २४७-२५२

२१. **जैनदर्शने जीवस्वरूपम्**
डॉ. वीरसागरो जैनः २५३-२६४

**लघु-ग्रन्थमाला**

**१. श्रीगुरुप्रपत्तिः** १-४०
प्रो. वेम्पटिकुटुम्बशास्त्री

**२. श्रीकृष्णास्तवः** १-९२
ले. 'पद्मश्री'पण्डितश्रीरघुनाथशर्मा
सं. प्रो. नरेन्द्रनाथपाण्डेयः

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ६२ वर्षे | ज्येष्ठ-भाद्र.-मार्ग.-फा.पू., वि.सं. २०६४ | १-४ अङ्काः |
|---|---|---|


# आचार्यसनाथं काञ्चीपीठम्


**प्रो. नरेन्द्रनाथपाण्डेयः**

आचार्यः

प्राचीनराजशास्त्रार्थशास्त्रविभागस्य

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये

वाराणस्याम्




॥ ॐ नमो भगवते नित्यानन्दाय ॥

शङ्करं वर्णसङ्घानां पालकञ्चार्थसंहतेः।

अर्धनारीश्वरं वन्दे देवदेवं जगद्गुरुम्॥

अवतीर्णं कलौ पूर्णशक्तिभिर्विनयस्थितेः।

अगम्यं लोकबुद्धीनां पावकं दिव्यविग्रहम्॥

भगवत्पादशङ्कराचार्याणां जन्मादिविषये तत्परम्पराविषये च अलेख्यया लेखभाषया लेखनीं व्यापारयितुमिच्छन्तो वयमिदानीं पुण्यप्रकर्षवशाल्लब्धावसरा मोदमनुभवामः। शरीरभाजामेतादृशानां न केवलं साक्षाद्दर्शनमेव, अपि तु पावन्यां स्मृतावविकलमुपस्थानमपि त्रिपथगेव पुनाति लोकत्रयम्। अस्मिन् वर्षे भारतेति नाम्ना प्रसिद्धे जनिमन्तोऽजनिमन्तोऽपि जनिमिच्छन्तो भगवत्पादच्चरणरेणुसंस्पृष्टां भुवं दर्शं दर्शं स्पर्शं स्पर्शञ्चात्मानं भगवत्पादप्रतिपादितराद्धान्तसंस्कारितान्तःकरणतया प्रत्यगभिन्नब्रह्मात्म-साक्षात्कारेण शोकमोहादितरणपूर्वकं जीवन्मुक्त्यानन्दाविर्भावात् कृतार्थयितुं वाञ्छन्ति। अत एव देवा अपि अस्यां भूमौ प्राप्तभगवत्साक्षात्कारपरम्पराश्रितायां जन्माभिलाषुका भवन्ति।

भगवन्त आद्यशङ्कराचार्यास्त्रिदेवेष्वन्यतमस्य लोकशङ्करस्य शङ्करस्यावतारभूता: ख्रीष्टाब्दाद् अष्टाधिकपञ्चशतवर्षेभ्य: प्राक् लोकलावण्यया स्वमूर्त्या केरलप्रान्तस्य कालटिग्रामे प्रादुर्बभूवुरिति वर्तते प्रमाणसंवादोऽत्र। तेन चावतारभूरेषा आत्मनो धन्यतां ख्यापयन्त्यद्यापि स्पर्धते भूम्यन्तरेभ्य:। भगवद्गुणानां लोककल्याणाय कासुचिन्मूर्तिषु लोककल्याणकरीषु प्राप्तिर्ह्यवतारशब्देन व्यपदिश्यते तेन दशाव्ययस्यापि भगवत: शिवस्य षडङ्गोपेतस्य सार्वज्ञ्याचिन्त्यशक्तित्वादिसम्बन्धो भासमान आचार्यप्रवराणां मनीषाप्रकर्षमवताररूपताञ्च सूचयति। अप्रमेये भगवति लोककल्याणाय धृतविग्रहे कियन्त ऐश्वर्यसूचका गुणा आविरभूवन्निति परिमातुं न क्रमतेऽस्माकं मनीषा, तथापि कतिपयावसरेषूच्छलन्त्य: शक्तयो लोकैस्तदानीं विभाव्यमाना चिन्तयित्वा भगवतोऽलौकिकत्वं ख्यापयितुं क्रमामहे।

लोककल्याणायावतीर्णा विभूतिविशेषा: स्वशरीरमगणयन्तोऽपि प्राणिन: सुखयन्त: यशो वितन्वत इति सुप्रसिद्धं भगवद्विभूतीनां उपकारपरायणानां भगवत्तेजोंऽशसम्भवानां सुचरितविषये। अत्र तु शङ्करभगवद्विग्रहे साक्षाद्भगवानेवावततार, तत्र किं वक्तव्यं विभूतीनां समुच्छ्रयणविषये। अणिमाद्या: सिद्धयस्तत्र किङ्करीभूता भगवन्तमुपासीना जगज्जन्मादिशक्तीरलक्ष्यमाणास्तिरयन्ति लोकानां उपदेशादिसौकर्य्यसम्पादनाय।

श्रीहरेर्ज्ञानकलयावतीर्णामितबुद्धिव्यासवाङ्निक्षेपभूतब्रह्मसूत्रव्याचिख्यासया धर्मसन्तिष्ठापयिषया च केरलप्रान्तस्यालवायनगरस्य नातिदूरे कालटिग्रामे आर्याम्बागर्भसम्बन्धात् शिवगुरोरात्मजरूपेण भगवान् शिवो लोकानां शञ्चिकीर्षयाऽऽचार्यभगवत्पादशङ्कर रूपेणाविर्बभूवेति प्रमाणसंवादात् प्रमिमते ऐतिह्यविद:। अनन्तरं द्विजत्वप्राप्तये विद्यागुरूणां विद्याविर्भावसिद्धये च वैदिकमर्यादाऽनतिक्रमपुरस्सरपञ्चमवर्षोपनीत्युत्तरगुरुकुलवासगुरुसेवाधिगतसकलविद्याविलासप्रकाशचमत्कृतलोकसर्ववासहृदयकृतनिवासामरप्रकाशानां बालानामप्यबालसत्त्वानां वेदवेदाङ्गमीमांसादिचतुर्दशविद्याप्रकाशस्त्रिवर्षात्मकेऽतिलघुकालखण्डे जात इति कथनं लोकातीततां भजमानं न बुद्धिपथमारोहत्याञ्जस्येन, तथापि भगवच्छ्रीकृष्णबलरामयोर्विद्याधिगमप्रसङ्गो भागवते व्याख्यात:—

> सर्वं नरवरश्रेष्ठौ सर्वविद्याप्रवर्तकौ।
> सकृन्निगदमात्रेण तौ संजगृहतुर्नृप।। (१०/४५/३५)

इति श्लोकेन दिङ्मात्रेण दर्शितः प्रमाणत्वेन गृह्यमाणस्तिरयति संशीतिलेशमप्यलोकानां तेषां विद्याधिगमप्रकारस्यालौकिकस्य श्रवणे ग्रहणे च।

एवं गुरुकुलप्राप्तविद्यो भगवान् लीलाजलचरगृहीतचरणानुप्राप्तमात्रनुमतिः संन्यासरतिः प्रेषोच्चारणपूर्वकं गृहीतसंन्यासदीक्षः 'सर्ववन्द्येन यतिना प्रसूर्वन्द्या हि यत्नतः, इति स्मृतिसूचितमात्रतिरिक्तसर्वलोकप्रणम्यतां गतः सञ्चिचरिषया सम्पूर्णामेव भारतभुवं स्वचङ्क्रमणेन जन्मना पावितामप्यतिपावयाम्बभूव। एवमातुरसंन्यासविधिना त्यक्तसर्वैषणोऽपि भगवान् लोकगुरुरपि स्वगुरुं चिकीर्षन् नर्मदाकाननगुहाकृतवासं गोविन्दभगवत्पादशिष्यं भगवन्तं गौडपादं रङ्क इव महानिधिं प्राप।

दशश्लोक्यात्मस्वरूपवर्णनपरया गुरोः परिचिचीषां प्रोपशमय्य महावाक्योपदेशप्राप्ताचार्यानुग्रहोऽन्तेवासितां प्राप्य वर्षत्रयेण विशेषतो वेदान्तानुशीलनेन प्राप्तविद्याप्रकर्षो गुरोराज्ञामूरीकृत्य ब्रह्मप्रकाशिकां काशिकामागत्य प्रस्थानत्रय्यन्तर्भूतानामुपनिषद्-ब्रह्मसूत्र-भगवद्गीतानां प्रतिपदव्याख्यानेन शङ्काशङ्कूत्पाटनपटु भाष्यं विरचय्य लोकस्योपायनीकृतवान्। तदर्थञ्चाप्राप्तद्वादशवर्षोऽपि वर्षीयसश्छात्रानध्यापयन् ब्रह्मविद्यासम्प्रदायं प्रवर्तयामास। आचार्यविद्यावंश्याश्चत्वार आचार्याः सुरेश्वर-हस्तामलक-तोटकपद्मपादनामानश्चत्वार इव पुरुषार्था लोकैरिष्यमाणा आचार्यप्रवर्तितपीठ-परम्परामूलभूताः शृङ्गगिरि-द्वारका-बदरिकाश्रम-पुरीपीठानां क्रमेणाद्या आचार्या बभूवुः। श्रीभगवत्सुरेश्वरपादपूता सम्पूर्णा काञ्चीपीठाचार्यपरम्परा शङ्करभगवत्पाद-शिष्याँस्तानद्वितीयान् द्वितीयक्रमे पीठपरम्परायाः स्वीकरोति।

परमाचार्यचरणानां शङ्करभगवत्पादानां द्वात्रिंशद्वर्षपरिमितजीवनकालस्य एकादशवर्षाणि शृङ्गगिरौ व्यतीतानि महत्त्वपूर्णतमान्यद्वैते प्रकरणग्रन्था-नामन्येषाञ्च रचनादृष्ट्या। शृङ्गगिरिरेव शङ्करदिग्विजयस्य कृत आरम्भपर्यव-सानयोः स्थानसूचकत्वेन प्रसिद्धिं गतो भगवत्सान्निध्यप्राप्तगौरवप्रकर्षोऽद्यापि मानसपटले विराजतेतमाम् आचार्यशङ्करपरम्पराप्राप्तैतिह्यज्ञानप्रकर्षानुशीलन-तत्पराणां सचेतसाम्। तथापि काञ्च्या महत्त्वमनितरसाधारणं शङ्करभगवत्पाद-दृष्टिपतितं तद्वासपावितदिगन्तरालं न शक्यते अपलपितुमिति प्रपञ्चयामः।

दिग्विजययात्राप्रसङ्गे भगवान् शङ्करः काञ्चीं प्रापेति श्रूयते। दिग्विजयो हि भारतभूमौ सर्वासु दिक्ष्ववस्थितानां प्रत्यक्षाणामप्रत्यक्षाणामपि भगवत्पाद-दृष्ट्याऽतिरोहितानामुन्मदानां विनयेनान्वयार्थं कश्चन प्रयासो जनकल्याणाय

धर्मसंस्थापनार्थाय च भगवता कृतोऽनुमीयते, न तु लौकिकराज्ञामिव जल्पकविदुषामिव वा स्वस्याहङ्कृतितुष्टिसूचकः प्रयास उच्यते। निगीर्णरजस्तमसां प्राप्तसत्त्वोद्रेकप्रकर्षाणां परार्थजीवनानाम् अन्तःकरणेषु लोककल्याणमतिरिच्य कस्यापीच्छाविशेषस्योदयस्य वक्तुमशक्यत्वात्। लब्धभगवद्व्यासप्रसादो भगवान् दिग्विजयाय निर्गतो रजस्तमोमूलोपासनाप्राधान्यं कर्मप्राधान्यं कापालिकादिमतप्राधान्यं च निरसितुम्। तदानीं प्रचलितासु शैव-वैष्णव-शाक्त-सौर-कुमार-गाणपत्यमतानुसारिणीषूपासनापद्धतिषु विरोधोपशमपूर्वकसौमत्यस्थापनाय च। सर्वासु दिक्षु विहृत्य मण्डनमिश्रसदृशान् कर्मानुशीलनतत्परान् ब्रह्मानुशीलनपूर्वकजीवपरैक्योपदेशप्रधानान् विधाय कापालिकादिमतानि निरस्य पञ्चदेवोपासकान् वेदानुयायिनः सर्वान् शिव-विष्णु-सूर्याम्बिकागणेश-सुब्रह्मण्योपासकत्वेन पूजापद्धतिषु दृढरतीन् विधायान्तःकलहमुत्सार्य लोकमनःप्रसादनोत्सादितविग्रहभेदकलहः, प्रतिष्ठापितोपासनापद्धतिश्रद्धाप्राधान्यः,

'यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्'।। (७.२१)

इत्यादिगीतावचःसंवादः प्रतिष्ठापितपीठचतुष्टयाधिकारिशिष्यचतुष्टयः कृतवेदान्तसिद्धान्तप्रचारः, दूरीकृतमीमांसासारः, विरचितस्तोत्रादिसमूहः, प्रपञ्चसाररचनप्रकाशित-तन्त्रपूजासारः काञ्चीं पुनः प्राप।

काञ्ची ब्रह्मपुरी धार्मिकजनबहुला दिग्विजयचिकीर्षोर्भगवतः पद्भ्यां कथमाक्रान्तेति जिज्ञासाविशेषो यद्यपि सर्वज्ञस्य भगवत आगमनेनाऽनल्पकारणसूचकेनोत्थानपराहतो भवति, तथापि भगवन्माहात्म्यख्यापनाय स्थानमाहात्म्यस्याप्यनुषङ्गतः सूचनाय मोक्षपुर्यां मुक्तस्य भगवतः पुनरागमनं सप्रयोजनं प्रतिपाद्यते। जगन्मातुर्मन्दिरनिर्माणं श्रीचक्रप्रतिष्ठा काञ्चीपुर्या नूतनप्रकारेण स्वान्तःसंवादेन निवेशनार्थं रेखाचित्रसमर्पणञ्चेति त्रीणि कार्याणि भगवता साक्षात्कृतानि पुर्या माहात्म्यं ख्यापयन्ति।

दिग्विजयप्रसङ्गे भगवता काञ्चीपुरी स्वपादरजोभिः पूर्वं पाविता, तथापि स्थानमहत्त्वाकलनसञ्जातलोककल्याणबुद्धिः सम्प्रतिष्ठितपराम्बाभगवतीकामाक्षीदेवतालयनिविष्टश्रीचक्रस्तस्मिन्नेव मन्दिरे कैलासयात्राप्राप्तपञ्चशिवलिङ्गान्यतमयोगचन्द्रमौलीश्वरलिङ्गकृतस्थापनः, दिग्विजययात्रान्तोरीकृतकाञ्चीनिवासः, विरचितत्रिपुरसुन्दरीवेदपादस्तवविलासः, सोपानपञ्चककृतब्रह्मविद्यामार्गप्रकाशः, स्वविरहितां पुरीं चन्द्रमौलीश्वरलिङ्गपूजाविधिविशेषं श्रीचक्रोपासनापद्धतिं च

सर्वज्ञात्मने स्वशिष्याय प्राप्तसुरेश्वररक्षणाय प्रदाय अस्यामेव पुर्यां वयसो द्वात्रिंशे वर्षे रसाक्षिरसाक्षिमिते कलियुगाब्दे वैशाखपूर्णिमायां धारणाध्यानमङ्गलां लोकाभिरामां स्वतनुं ब्रह्मरन्ध्रादुत्क्रम्य तत्याज।

भगवाञ्छङ्करः परापरोभयविद्याविज्ञः, साक्षात्कारात्मिकां विद्यां धारयमाणः प्राप्त-ऋतम्भरप्रज्ञोऽतिस्निग्धां पुरीमिमां 'गुणैर्हि सर्वत्र पदं निधीयते' इत्युक्तिसूचितगुणाढ्यामध्यासाञ्चक्रे इति श्रावं श्रावं शङ्करदिग्विजयप्रसङ्गेषु दर्शं दर्शं च पुर्या उत्कर्षकारणज्ञानविषये सोत्कर्षं भवति चेतः। अत उत्कत्वशमनाय गुणगणवर्णनव्याजेन लेखनी साफल्यमेष्यतीति प्रयत्यते तत्र।

**पुर्या वैशिष्ट्यम्**

'पॄ'पालनपूरणयोरिति धातोर्निष्पन्नः पूःशब्दः पुरीपर्यायो वर्तते। पुर्यां पुरि च पालकत्वपूरकत्वयोर्दर्शनात्। अयं तु 'पुर्' अग्रगमने इति धातोर्निष्पन्नोऽग्रं ज्ञानं सूचयति, पूर्वार्थञ्च क्रोडीकरोति। ज्ञाने अग्रता च लौकिकघटादि-विषयज्ञानान्यतिरिच्य ब्रह्मविषयता स्वीक्रियते चेत् पुर्या ब्रह्मप्रापकता सूचिता भवति। अत एव—

> अयोध्या मथुरा माया काशी काञ्ची ह्यवन्तिका।
> पुरी द्वारावती चैव सप्तैता मोक्षा दायिकाः।।

इति मोक्षपुरीप्रतिपादकवचने अयोध्या-मथुरा-माया-काशी-काञ्ची-अवन्तिका-द्वारवतीनां सप्तानां पुरीत्वेन व्यपदेशः कृतो वर्तते। अन्यथा ब्रह्मप्रकाशकत्वाभावे आसां मोक्ष उपयोगाभावात् मोक्षप्रदायकत्वव्यपदेशो विरुध्येत।

यद्यञ्चनमञ्चः कस्य सुखस्याञ्चः काञ्चः सुखाभिव्यक्तिरित्युच्यते तदा इदमर्थेऽणि ङीपि च 'काञ्ची' इत्यस्य सिद्धौ सुखाभिव्यक्तिस्थानसम्बद्धत्वं पुर्यां गच्छति। 'ब्रह्मसुखमत्र पूज्यते' इति कथनेन नित्यसुखरूपब्रह्माभिलाषिता तत्रत्यानां मनसि वर्तत इति लब्धो भवति। तेनात्रत्यजनानां नरकादिदुःख-प्रापकानृतवदनहिंसादिषु प्रवृत्त्यभावः सूचितो भवति। अत एव 'काञ्ची' सत्यव्रतक्षेत्रमुच्यते।

सत्यव्रतक्षेत्रमिति कथनेनात्रत्यनिवासिनां सत्यमेव व्रतं वर्तत इति ज्ञायते। न केवलं यथाभूतार्थकथनं भूतहितं वा सत्यम्; अपि तु सति ब्रह्मणि साधूनामहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहादीनां जातिदेशकालसमयानवच्छिन्नानां

महाव्रतरूपतां गतानां सर्वेषामिह सद्ब्रह्मप्रापकत्वेन सत्यत्वं स्वीक्रियते, एषामज्ञानावरणनिवर्तनेन सद्भूतब्रह्मप्रापकत्वात्। एवं नाम्नैवात्रत्यनिवासिनां त्यक्तसर्वैषणानां भगवत्परायणानां शीतोष्णादिद्वन्द्वैरनभिभूतसत्त्वानां कलहाय-मानलोकविलक्षणशान्तिपथमधितिष्ठताम्, कर्मानुष्ठानतत्पराणामप्यकर्म-निष्ठानाम्, द्विजानामप्यद्विजत्वप्राप्त्यर्थं यतमानानाम्, सार्वभौमव्रतानामप्य-सार्वभौमश्र्यनुरक्तानाम्, भूलोकवासिनामप्यभूलोकस्पर्धितचरितानाम्, मानवा-नामप्यमानवसत्त्वानाम्, अविच्छिन्नपरम्पराप्राप्तसत्त्वोद्रेकाणाम्, लोकानामप्य-लोकशीलानाम्, ब्रह्मचर्यतपोऽपरिग्रहादिभिस्सर्वभूतदयया यथालाभसन्तुष्ट्या सर्वेन्द्रियोपशान्त्या च भगवन्तं सर्वभूतमहेश्वरं तोष्टुकामानाम्, तपोवन-निवासिनामिवालौल्यमनसां लोभानृतहिंसादिभावानभिभूतमनसां सत्यव्रत-परायणत्वं गम्यते।

मन्ये, क्षेत्रमहिम्नैवाकृष्टमनस आचार्या शङ्करभगवत्पादा अनुष्ठितावतार-प्रयोजना गुरुपरम्परानुभूतसमाधिसुखमनुभवन्तोऽपि तत्सुखाभिलाषुका इवात्रागत्य लोकशिक्षणार्थं स्थानप्रभावादलोकसुखमनुभवन्तो बभूवुः। न केवलमाचार्या एव भुवो भारावतरणायावतीर्णो नारायणांशो भगवान् बलरामोऽपि पवित्राभिः स्वपादरेणुभिस्तीर्थयात्राप्रसङ्गे पावयामास भुवमिमां स्थानमहत्त्वचिख्यापयिषया। काञ्च्या वैभवविशेषप्रद्योतनविपद्ग्रस्त-जनोद्धरणहेतुभूतं भगवत्याः कामाक्ष्या मन्दिरं वर्तते। यद्यपि भगवती दहराकाशरूपिणी अत्र सर्वदाऽऽकाशे प्रतिष्ठिता वर्तते, तथापि रजस्तमोबहुलानां प्राकृतजनानां चक्षुर्गोचरतां नापतन्ती अपि पञ्चभूतक्षेत्रेष्वन्यतमे पार्थिवे काञ्चीक्षेत्रे पार्थिवीं प्रतिमां भगवत्पादशङ्करसान्निध्यप्राप्तप्रतिष्ठां भगवत्पादोपज्ञपूजापद्धतिं दर्शनसञ्जातपुण्यनिवहानेकजन्मार्जितपापतिरस्करिणीं पारम्पर्याविच्छेदप्राप्तपूजासम्भारोपचारसेवां द्व्यधिकसहस्राब्देषु व्यपगतेष्वपि नूतनप्राकट्याभिलाषमिव प्रकटयन्तीं बिभ्राणा सामान्यतो जनानां पुण्यप्रकर्षे चक्षुर्गोचरतां प्रकृष्टतरे च सुकृते मनोगोचरताम् अनेकजन्मार्जितपुण्यप्रकर्षे फलोन्मुखे दिव्येन्द्रियग्राह्यताञ्च भजमाना ऐहलौकिकं पारलौकिकञ्चाभीष्टं साधयन्ती वर्तते।

वैशिष्ट्यमिदमेतस्य देवायतनस्य यद् भगवत्या दहराकाशरूपिण्याः स्वायुधभूषितभौतिकविग्रहरूपेण स्वयं प्रतिष्ठां गताया आवरणार्थं शीतवातोष्णादित्राणार्थञ्च देवायतनं पश्चान्निर्मितिकर्मतामभजत्। अत्र च प्रमाण-

रूपेण ब्रह्माण्डपुराणस्य हयग्रीवागस्त्यसंवादवर्णनपराध्याये ऊनचत्वारिंशे चतुर्दशश्लोको वक्तुं शक्यते—

ललिता सैव कामाक्षी काञ्च्यां व्यक्तिमुपागता।
सरस्वतीरमागौर्यस्तामेवाद्यामुपासते।।

इति हि तत्रत्यं वचनम्।

अत्र स्वयं व्यक्तिमुपागतेति कथनेन भौतिकविग्रहस्यापि स्थपत्यादि-निर्मितत्वं प्रतिषिद्धं स्थानमहत्त्वं भगवत्या व्यक्तौ निमित्तं सूचयति।

कामाक्षीमन्दिरस्यापरं वैभवं भगवत्याः पुरतः श्रीचक्रप्रतिष्ठापनं वर्तते। क्रियते गतिरनेनेति व्युत्पत्तौ निष्पन्नश्चक्रशब्दो श्रियः श्रियाश्लिष्टस्य विष्णोर्ज्ञानं चक्रशब्देन सूचयति, गत्यर्थानां धातूनां ज्ञानार्थकत्वात्। चक्रमिदं चक्रराजनाम्ना प्रथितं ललितासहस्रनामस्तोत्र उल्लिखितमपि भगवताचार्येण नूतनतया आविष्कृतमिव विराजते तत्र सम्प्रदायविच्छेदेऽपि सम्प्रदायाविर्भावनसामर्थ्यस्य तत्र सत्त्वात्। भगवती त्रिपुरसुन्दरी चक्रराजनिलयोच्यते ललितासहस्रनामस्तोत्रे। व्यापिकाया ब्रह्मरूपिण्या भगवत्याश्चक्रे निलयनमुच्यमानं चक्रराजपूजास्तुति-नमस्कारादिभिर्निलीनायास्तस्या आविर्भावमपि सूचयति। कलौ चक्रराजपूजां भोगमोक्षप्रदायिनीं मन्यमान आचार्यः स्वहस्तनिर्मितं चक्रं भगवत्याः पुरतः स्थापयामास।

भगवद्विष्णोर्दयितं सुदर्शनं चक्रमिव सर्वविघ्नहरं सर्वसम्पत्करं चक्रराजं निर्मातुं भगवान् शङ्करः काञ्चीं प्राप्य शालग्रामशिलायां साक्षाद्विष्णुरूपायां श्रीचक्रं निर्ममे। एवं चक्रराजमाध्यमेन चक्रनिलीनाया भगवत्याः श्रीविष्णुना साकं नित्याश्लेष अस्माकं चक्षुर्गोचरतां नीतः श्रियाश्लिष्टो विष्णुश्चिरकालं यावल्लोकानां साक्षात्कारविषयतां गत्वोद्धरेत्तानिति धिया च विधिना स्थापनपूर्वकमचलीकृतः। न केवलं चक्रराज एवात्र प्रतिष्ठापितो भगवता कामाक्षीमन्दिरं मध्येकृत्य सम्पूर्णमेव नगरं चक्राकृत्या निर्मितमासीद् भगवत्पादस्येच्छानुसारम्।

काञ्च्या वैभवान्तररूपेण भगवता कैलासात् शिवधाम्न आनीय स्थापितं स्फाटिकं शिवलिङ्गं वक्तुं युज्यते। कैलासपर्वतं भगवच्छिवनिवासभूतं गतो भगवत्पादशङ्करः पार्वतीपरमेश्वरयोः साक्षाद् दर्शनं प्राप्तवानिति श्रूयते, तत्रैव पञ्चस्फटिकशिवलिङ्गप्राप्तिरपि श्रूयते। तेषु वरलिङ्गं नेपालस्थितपशुपतिनाथ-मन्दिरे तैः स्थापितम्, मुक्तिलिङ्गं केदारनाथक्षेत्रे स्थापितम्, तृतीयलिङ्गं

भोगलिङ्गनाम्ना ख्यातं शृङ्गगिरौ स्थापितम्। शृङ्गगिरितः काञ्ची प्रति प्रस्थितेन चिदम्बरम्-स्थाने मोक्षलिङ्गं स्थापितम्। एवं लोककल्याणार्थं प्राप्तेषु पञ्चसु लिङ्गेषु मुक्तिलिङ्गं मोक्षलिङ्गञ्च मोक्षप्रदत्वाद् भगवतः शिवस्य कृपया प्राप्यमाणेष्वर्थेषु मोक्षस्य प्राधान्यं सूचयतः। वरलिङ्गं पशुपतिनाथमन्दिरे विद्यमानं वरस्येप्सितस्य प्रदायकं प्रतिभाति नामाक्षरैः। भोगलिङ्गं शृङ्गगिरौ स्थापितं भोगप्रदायकं प्रतिभाति। एतेन भवति सन्देहो यत् कल्याणकारी भगवान् शिवोऽपि ज्ञानवितरणशीलः किमिति भोगं प्रयच्छति? कामनासत्त्वे मोक्षमार्गविहितसाधनानामनुष्ठानासम्भवात् कामप्रदानेन जनान् निष्कामान् विधायान्ते तेषां मनसां मोक्षे निवेशसम्भवात् तथा क्रियते भगवतेति स्वीकारे शङ्कोपशमः कर्तुं शक्यः।

परन्तु काञ्च्यां भगवता योगलिङ्गस्य उपासनया परमात्मना सह योगसाधकस्य स्थापनं विहितं मठस्थापनकाले इति श्रूयते।

**शारदामठप्रादुर्भावः**

शिवावतारभूतो भगवत्पादशङ्करो ज्ञानप्रदो वाचामधिष्ठात्रीं शारदां सबहुमानं सर्वदा आद्रियाचञ्चक्र इति तेषां सारस्वतसमर्चया वेदान्त-व्याख्यानबहुलप्रचुरतरसाहित्यरचनया प्रमाणान्तरनिरपेक्षरूपेण प्रमीयते। काञ्चीपुर्यां शरीरहानपूर्वकं ऐहिकलीलासंवरणं तैः कृतमित्यत्र प्रमाणसंवादे सति तेषां लोकोत्तरजीवनानां, परोपकारपरायणतया निरन्तरं जिज्ञासुगम्यानां, सर्वलोकसमधिगतोपदेशानामावसथभूतः स्थानविशेषः कुट्यादिरूप-स्तैर्वासार्थमङ्गीकृतो मठविशेष आसीदिति मन्तव्यम्, मठस्य छात्रादिनिलयरूपत्वाद् अनाच्छादने वासाभावात्। अयं मठः शारदामठरूपेण प्रसिद्धिं गतः। अत्र च कारणमेवं वक्तुं युज्यते। पुरा काञ्चीकश्मीरयोः सारस्वतक्षेत्ररूपेण प्रसिद्धिरासीत्। कश्मीरप्रान्ते शारदादेवीमन्दिरे सर्वज्ञपीठम् आसीत्। चतुर्द्वारमण्डपाभ्यन्तरस्य पीठस्योपरि अध्यासनं सर्वज्ञेन विदुषा तत्रत्यसर्वविदुषां पराजयेन कर्तुं शक्यते स्म। काञ्ची। दक्षिणकश्मीरनाम्ना प्रसिद्धं स्थानमासीदतोऽत्रापि कश्मीरवत् सर्वज्ञपीठारोहणं भगवता कृतम्। एवं स्थानद्वये सर्वज्ञपीठयोः पावनता भगवत्पादसम्पर्काज्जाता। एतद्विषयेऽग्रे विचारयिष्यते।

**लिङ्गस्थापना**

भगवता काञ्च्यां स्ववासार्थं निर्मिते कुटीरे कैलासप्राप्तलिङ्गेष्वन्यतमस्य योगचन्द्रमौलीश्वरलिङ्गस्य स्थापनं विहितम्। लिङ्गं हि लीनं प्रच्छन्नं सर्वव्यापकं

ब्रह्म गमयति। नित्यापरोक्षस्य ब्रह्मण: पारोक्ष्यसद्वितीयत्वाभ्यां न भवति नित्यानुभूतिविषयस्यापि कृतकृत्यताप्रयोजकत्वम्। उपासनया लिङ्गार्चनादिरूपया स्वस्वरूपभूतत्वेनापरोक्षतया शक्यते ब्रह्म साक्षात्कर्तुमिति हेतोर्भगवता योगचन्द्रमौलीश्वरलिङ्गमत्र स्थापितम्। भगवत्कृपयैव भवति स्वरूपसाक्षात्कार इति वर्तत आचार्याणामाशय:। अत एवास्माभिरेवमुच्यते। अत्र च प्रमाणभूतं 'पराऽभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' (ब्र.सू. ३.२.५) इति सूत्रस्थं भाष्यम्। तथा हि—'किं पुनर्जीवस्येश्वरसमानधर्मत्वं नास्त्येव? न नास्त्येव, विद्यमानमपि तत्तिरोहितमविद्यादिव्यवधानात्। तत्पुनस्तिरोहितं सत्परमेश्वरमभिध्यायतो यतमानस्य जन्तोर्विधूतध्वान्तस्य तिमिरतिरस्कृतस्येव दृक्शक्तिरौषधवीर्यादीश्वरप्रसादात् संसिद्धस्य कस्यचिदेवाविर्भवति, न स्वभावत एव सर्वेषां जन्तूनाम्, इति।

अत्र भाष्यवाक्ये परमेश्वरमभिध्यायतो यतमानस्येति कथनं परमेश्वराभिध्यानेन सह ज्ञानप्राप्त्युपायानामनुष्ठेयतां सूचयति। अथवा इदमपि वक्तुं शक्यते यत् परमेश्वराभिध्यानरूप एव यत्न:, तादृशयत्नानुष्ठानं यतमान-शब्देन बोध्यते। यद्यप्येवं वक्तुं शक्यते यत् श्रवणमनननिदिध्यासनाद्यभावे केवलेन परमेश्वराभिध्यानेन स्वरूपसाक्षात्कारो भवितुन्नार्हति तथाप्येतत् कथनं सुविचारितरमणीयं न प्रतिभाति,

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्।
अव्यक्ता हि गतिर्दु:खं देहवद्भिरवाप्यते।। (१२.५)

इति भगवद्गीतावचनेन विरोधात्। अत्राव्यक्तज्ञानरूपैकफलार्थं क्लिश्यमानयोर्द्व-योर्निर्गुणसगुणोपासकयोर्निर्गुणोपासकस्याधिकं कष्टं प्रतिपाद्यते। देहवद्भिर्देहाभि-मानवद्भिरव्यक्तगतेर्दु:खेनावाप्तव्यता हेतुरूपेणोच्यते। अद्वैतिभिर्देहे आत्मबुद्धि: तादात्म्याध्यासाद् अनुभूयमाना, अध्यासे निवृत्ते निवर्तत इति वक्तव्यम्। अध्यासनिवृत्तिश्च कष्टेन भवति तदेव ज्ञानम् उच्यते। एवं भवत्यस्य ज्ञानहेतुता। अत: 'अधिकतर' इत्यत्र तरप्प्रत्ययस्य निर्धारणार्थकस्य प्रयोगेण सगुणोपासकानामपि निर्गुणसाक्षात्कारो भवतीति ज्ञायते। अयं साक्षात्कारप्रकारो विस्तरेण मधुसूदनस्वामिवर्यैरत्रत्यस्वव्याख्याने वर्णितस्ततोऽधिगन्तुं शक्यते। अत एव सर्वज्ञेन भगवतोपासनस्य सततानुष्ठेयत्वसिद्धये लिङ्गस्थापनं विहितम्।

**सर्वज्ञपीठारोहणम्**

काञ्चीपुर्यामपि कश्मीरवत् सर्वज्ञपीठमासीदिति पूर्वमुक्तम्। तत्पीठोपरि भगवत आरोहणं सर्वज्ञपीठारोहणमुच्यते, तथैवार्थसङ्गते: सत्त्वात्। सर्वज्ञो

भगवानत्रत्यपीठमारुरोहेति तथ्यं वर्तते; किन्तु सार्वज्ञस्य परीक्षणानन्तरमेव न ततः प्रागित्यपि श्रूयते। सर्वा दिशो विजित्य शास्त्राणि व्याख्याय विभिन्नस्तोत्राणि विरचय्य निष्पादितसर्वप्रयोजनो भगवान् काञ्च्यां वासमभिननन्द। तत्र च कश्चन वर्धननामा पण्डितपरिवृढः सर्वज्ञकल्पसप्तवार्षिकस्वपुत्रसहायोऽन्यविद्वत्परिवृतः शास्त्रार्थविचाराय प्राप्तः। अन्यैर्विद्वद्भिः सह पण्डितपरिवृढस्य वाचि निष्पन्दीभूतायामपि वाग्विहारेण सप्तवार्षिकः सर्वदमनो महादेवो दिनत्रयं यावत् भगवन्तं तोषयित्वाऽन्ते साक्षात् शङ्करं पराजेतुमसमर्थो मूकतां गतो गृहीतसंन्यासदीक्षो भगवत्पादस्य पञ्चम-शिष्यरूपेण प्रसिद्धिं गतः।

एवं भगवतः सार्वज्ञ्यं परीक्ष्य विस्मयाविष्टचेतसो विद्वांसो भगवन्तं सर्वज्ञपीठमारोढुं सम्प्रार्थ्य सम्प्रसाद्य च मनोरथसिद्ध्या कृतार्था बभूवुः। वर्षत्रयं यावच्छङ्करभगवत्पादाः काञ्च्यां शरीरहानात्पूर्वमूषुः, स्वसन्निधानेन च पूजापद्धतिं व्यवहारपद्धतिञ्च पावयामासुः। भूलोकत्यागात् पूर्वञ्च योगलिङ्गपूजायाः श्रीचक्रपूजाया देव्यास्त्रिपुरसुन्दर्याः पूजायाश्च भारं सर्वज्ञात्मनि आचार्यसुरेश्वर-कृतरक्षे न्यस्यास्माल्लोकादुपरता बभूवुः। भगवत्पादाः सुरेश्वराचार्या अस्यपीठस्य प्रथमे आचार्याः, इमे च द्वितीया इति पीठपरम्परायां वर्तते क्रमः।

**कामकोटिपीठम्**

शङ्करधिक्कृतिश्रवणतिरस्कृतपाञ्चभौतिकविग्रहा भगवती सती योगमार्गोत्क्रान्तप्राणस्पन्दना निर्जीवतां प्राप्तापि स्वस्नेहाकृष्टशर्वा शर्वगणयज्ञ-विध्वंसपूर्वकखण्डितदक्षगर्वा अपर्वापूर्वपूर्णा न कदाचिदप्यपेयाय भगवतोऽर्द्धनारीश्वरस्य हृदयादिति निर्जीवशरीरोद्वहनमन्थरस्य शङ्करस्य चङ्क्रमणेनोन्मततासूचकेन प्रमीयते। अनन्तरं शङ्करोन्मादमोचनप्रयासे विष्णुचक्रविखण्डिताङ्गाया भगवत्या अङ्गानामनङ्गदर्पनाशकानां शवत्वेऽप्य-शुचीनां सम्पातजनितसंयोगप्रकर्षं लभमानानि स्थानानि शक्तिपीठानि शक्त्याराधनप्रसङ्गप्रसिद्धान्येकपञ्चाशत्संख्याकानि बभूवुः। तेष्वन्यतमपीठरूपेण प्रसिद्धेयं काञ्ची यत्र भगवत्या काञ्च्युपलक्षितस्य कटिभागस्य पतनमभूदिति हेतोः कामकोटिपीठरूपेणाम्नानमेतत्स्थानस्य समूलं भवति पुराणसंवादात्। स्कन्दपुराणवर्णितशिवपार्वतीसंवादे पितृकल्पनाम्ना प्रसिद्धे सप्तदशे कल्पे सतीदेव्या योगमर्यादया शरीरहानादिकं श्रूयते। अतोऽस्य पीठस्य महत्तरे कालव्यवधानेऽप्यव्यवधानेन लोकमनःसु पीठरूपेणोपस्थितिः कालव्यवायरहितं कमपि स्मारकं स्मारयति। अन्यथा सर्वनिराकृतौ काले महति व्यतीते

कथमतीतस्मृतिः स्यात् ऋतम्भरप्रज्ञानां प्राप्तयोगप्रदीपानां स्मर्तॄणाम् अभावे। अत एतन्मन्तव्यं भवति परमेश्वरेच्छया काले काले प्रादुर्भूता ऋषयः, ऋषिकल्पाश्च योगप्रदीपप्राप्तसर्वस्मृतयः स्थानानि स्थानमहत्त्वसहितानि लोकस्मृतौ प्रयच्छन्ति, येन सर्वदा लोकमनःसु स्थानानि स्थानसम्बद्धाः कथाश्चातिप्राचीना अपि नूतनतया आविर्भवन्त्यो भवन्ति। अतोऽविच्छिन्नपारम्पर्येण स्मर्यमाणा पीठसम्बद्धा विभूतयोऽस्माकं श्रद्धा आकृष्यस्वस्मिन् योजयन्ति, जीवानां च भगवत्पराङ्मुखानां विषयचित्तानामपि स्थानपूजाद्वारोद्धारायाभिनवानवसरान् ददति।

एवं सतीसम्बन्धात् पौराणिकम्, आचार्यभगवत्पादशङ्कर-सम्बन्धादैतिहासिकम्, विद्यासम्बन्धात् सारस्वतञ्च महत्त्वं बिभ्राणेयं काञ्ची भगवत्यास्त्रिपुरसुन्दर्याः प्रसादात् कामप्रकर्षमाटीकमाना काम्यत्वाभावेऽकामतां सूचयन्ती आवर्जयति मनांसि लोकानां 'श्रीसुन्दरीसेवनतत्पराणां भोगश्च मोक्षश्च करस्थ एवे' त्युक्तदिशा भोगमोक्षप्रदपीठसमावेशेन। न केवलं पीठमेवाविच्छिन्न-पारम्पर्यप्राप्तस्मृतिजीवनं श्रूयते; अपि तु शङ्करभगवत्पादोपज्ञं पारम्पर्यं सर्वज्ञात्मानमद्वितीयं तृतीयत्वेन स्वीकुर्वदद्यापि राजतेतमाम्।

**वर्तमानाः शङ्करभगवत्पादप्रतिमूर्तयो जगद्गुरवः श्रीमज्जयेन्द्रसरस्वतीपादाः**

न केवलमतीतगौरवमिदं पीठपारम्पर्यम्; अपि तु विद्याजीवनानाम्, तपःसम्भृतिलोकसमृद्धिकराणाम्, निरन्तरसेवमानशिष्यपरिचरनिकरविद्वत्तल्ल-जानन्यशरणानाम्, उदारचरितानाम्, सम्पूर्णामेव भुवं कुटुम्बीकृत्य वर्तमानानाम्, व्यवहारतो लक्ष्यमाणविधूतजीवपरभेदानाम्, परापरविद्यारक्षण-प्रसङ्गप्राप्तपरिशीलितचतुर्वेदविदां तिरस्कृतभिदाम्, निरन्तरपर्यटन-व्याजोपदेशतिरस्कृतकलिदोषाणाम्, अदोषाणामपि दोषज्ञदोषज्ञानाम्, सर्वलोकसेव्यानामप्यमरपरिवृढसेवकानाम्, कसुखसुखितानामपि लोकदुःख-दुःखितानाम्, जीवन्मुक्तानामपि असंख्यजनश्रद्धाभरसहितानन्यानुरागपाश-बद्धानाम्, सफलजीवनानामपि परार्थतिरस्कृतजीवनानाम्, वेदपारम्पर्याविच्छेद-संरक्षकाणामपि वास्तववेदानित्यत्वरतीनाम्, आर्यगृह्याणामप्यार्यानार्य-सकलजनहिताभिलाषुकाणाम्, निवृत्तिनिरतानामपि प्रवृत्तिपरायणानाम्, इन्द्रिय-जयरूपेण मनोनिग्रहोपायेनाविष्कृतः स्वात्माभेदेन साक्षात्कृत इन्द्रः परमैश्वर्यसम्पन्नः परमात्मा येनेति नाम व्युत्पत्तिसूचितपरमात्मसाक्षात्कृति-जनितानन्दोदधिनिमग्नतया संसारानासक्तमतीनां यतीनां **श्रीजयेन्द्र-सरस्वतीपादानां** सततोज्जृम्भणेनप्राप्तसततस्पन्दनप्रकर्षमपि उल्लसतीति महान्

प्रमोदस्यावसरोऽद्यतनानां काञ्चीपुरीवासप्रहर्षं लभमानानां धरणीतलञ्च स्वजीवनस्पन्दनेन परम्परया परमात्मकृतिविषयतां नीयमानानाम्।

**आचार्यपादानां सङ्कल्पोज्जृम्भणानि**

आत्मसारताग्रहणेन लोकासारताफलेन मायाविलसितप्रपञ्चेऽसारे तिरस्कारबुद्धीनामपि आचार्यचरणानां स्तब्धजलधितोये आवर्ततरङ्गादिसूचक सनिमित्तसंक्षोभवत् शान्ताविकारब्रह्मस्वरूपपयोधिनिमग्नचित्तवृत्तीनामपि भगवत्पादानाम् अकामानामपि मनसि परदुःखप्रहाणेच्छया लोकसंग्रहेच्छया च व्युत्थानकाले सङ्कल्पाः काले काले प्रादुर्भूय मूर्तिमलभन्त, इदानीं प्रादुर्भवन्तश्च केचन मूर्तिजिघृक्षया योगिवर्य्याणाम् आनाशये मनसि शयाना उज्जृम्भणमपेक्षमाणाः कालं प्रतीक्षन्ते।

ये सङ्कल्पा मानवताया विकलायाः सेवार्थम् उज्जृम्भणं प्राप्तास्तेषां मूर्तिरूपेण काश्यां हनुमद्घट्टस्थितं कामकोटीश्वरमन्दिरम्, श्रीशकङ्करभगवत्पाद-प्राकट्यभूमौ 'आदिशङ्करकीर्तिस्तम्भः', प्रयागे परमाचार्यनिर्मिते विमानमण्डपे देवविग्रहाणां स्थापनम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालये काश्यां वाग्देवीमन्दिरम्, अन्यानि चैवंविधानि देवस्थानानि वक्तुं शक्यन्ते। आचार्यचरणानां करकमलाभ्यां येऽन्ये प्रकल्पाः प्रक्लृप्ता अस्माकं कल्पनाविषयास्तेऽन्यलेखविषयीकृता इत्युपरम्यते, केचनोच्यन्ते च सुगमतया स्मृतिपथमागताः। आचार्यचरणानां प्रेरणया बहुत्र मूर्तीनां संस्कारा जाताः, नटराजमन्दिरे च अलङ्करणयोजनेनालङ्कृतिर्भगवतः सम्पादिता तैः।

काश्यां हिन्दूविश्वविद्यालये महामनसां मदनमोहनमालवीयमहोदया-नामिच्छाऽनतिक्रमेण पूर्णतां प्राप्ते विश्वनाथमन्दिरे मूर्तीनां स्थापनमेषां पावनसान्निध्ये आचारसम्पन्नैर्वैदिकैर्विहितमिति विश्वविद्यालयस्य महते कल्याणाय कल्पितो भवति।

कीर्तिस्तम्भादिनिर्माणेन लोके भगवत्पादानां कीर्तिस्थापनप्रयासो यद्यपि सत्कर्मरूपेण ख्यायते, तथापि भगवत्पादप्रतिपादितसिद्धान्तानां तद्रचितग्रन्थ-माध्यमेन रक्षणं प्रचारणं च वास्तवं तेषां स्मारकं तत्कीर्तेर्जीवनाधायकञ्च भवतीति कृत्वा वेदविदुषां चतुर्मुखब्रह्मणोऽध्ययनपरम्परया प्राप्त वेदानां शास्त्रज्ञानाञ्च शास्त्रसमर्चाप्राप्तनैपुण्यानां समवायस्तेषां प्रेरणया नियतेऽन्तराले विशिष्टावसरेषु च आयोज्यमानो लोकानां संशयोच्छेदद्वारा निष्कम्पप्रवृत्ति-सम्पादनेन धर्मरक्षार्थो भवति। एवम् अधीतिबोधाचरणप्रचारणैः शास्त्ररक्षका

विद्वांसो बहुभि: प्रकारै रक्ष्यन्त आचार्यचरणैरिति तेषां जीवनं सर्वथा शास्त्रसमर्चनमेव भवति।

प्रदीपात् प्रवर्तितो दीप इव परमाचार्याणां प्रकाशभूता इमे छायया देहसंलग्नया देहानुवर्तनमिव परमाचार्यानुवर्तनं कुर्वाणास्तेषां यशोगौरवं वर्धयन्तोऽभूवन्, भवन्ति च। उत्तमश्चिन्तितं कुर्यादित्युक्तिदिशा भगवत: समीहितं साधयन्त इमे यात्राश्रममविचार्य सर्वत्रलोककल्याणार्थं भ्रमन्त:—

आषोडशात्तुबाल: स्याद्यावत् क्षीरान्नवर्तक:।
मध्यम: सप्ततिं यावत् परतो वृद्ध उच्यते।।

इत्युक्तिदिशा वयस: पञ्चसप्ततितमे वर्षेऽपि आरोप्यमाणं वार्धक्यं तिरयन्त: 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं शमा:' इत्युपनिषत्सिद्धान्तं सार्थयन्त औपनिषत्पुरुषसाक्षात्कारेणात्मनो धन्यतां ख्यापयन्तो दर्शनव्याजेन लोकानां पापानि हरन्त:—

ब्रह्मानुभवपर्यन्ता बुद्धिर्यस्य व्यवस्थिता।
तद्दृष्टिपतिता: सर्वे मुच्यन्ते सर्वकिल्विषै:।।

इत्युक्तिदिशा अप्राप्तदर्शनावसरानपि दर्शनार्थं प्रेरयन्तोऽविच्छिन्नपरम्परया आद्यशङ्करभगवत्पादं स्मारयन्तो विराजन्ते।

सर्वजनहिताय आद्यशङ्करभगवत्पादोपदिष्टं सोपानपञ्चकं सोपानारोहणन्यायेन मोक्षप्राप्त्युपायप्रतिपादकं शाङ्करसिद्धान्तनिष्ठैरनिष्ठैर्वाऽपि मोक्षाभिलाषुकैरवश्यध्येयं भगवत्पादपरम्परामुद्वहन्त इमे आचार्या: पूर्वेषां मतम् अन्यगुणाँश्च धारयन्तो मनीषापञ्चकं हृदि आवर्तयन्त: सोपानपञ्चकमुपदिशन्ति वाचाऽऽचरणेन च। सोपानक्रमेणार्थानामनुष्ठेयताप्रदर्शकमिदं पञ्चकं, यद्यपि 'यदहरेव विहरेत् तदहरेव प्रव्रजेद् गृहाद् वा वनाद् वेति मन्त्रार्थेन, उत्तमानान्तु विज्ञानं गुरुशास्त्राद्यनपेक्षणादित्युक्त्या च तिरस्कृतार्थकं प्रतिभाति तथापि तीव्रवैराग्यरहिता अनुत्तमा लोके बाहुल्येन विद्यमाना उपदेशप्रयोजना: शास्त्राणि सफलयन्तीति विचार्य लोकहिताय भगवद्भिरूपदिश्यमानं पञ्चकं विव्रियते।

वेदस्य नित्यमध्ययनम्, वेदोक्तकर्मणामनुष्ठानम्, काम्यकर्मणां फलरूपबन्धनप्रदातृणां त्याग:, वैराग्यदीपनार्थं भवसुखे दोषानुसन्धानम्, आत्मप्राप्तीच्छाया दृढत्वसम्पादनम्, एतत्प्रयोजनसिद्धये च गृहत्याग इति प्रथमं सोपानम्। यद्यप्येवं वक्तुं शक्यते यद् ईशस्यापचितिविधानं पापौघपरिधूतिश्चेति

कर्तव्यद्वयं प्रथमसोपानवर्णनपरश्लोके चर्चितमत्र नोक्तमिति तथापि अपचितेः कर्मानुष्ठानफलरूपत्वात् फले पृथक् पुरुषव्यापारस्यानपेक्षिततत्वात्तन्नोक्तम् इति ध्ययेम्। अत्र कर्तव्यांशस्यैव प्रामुख्येणोपदेशाद् रोचनार्था फलश्रुतिरिति न्यायेन फलस्य कर्मप्राशस्त्यदीपनपुरस्सरं प्रवर्तकत्वात्। भगवान् श्रीकृष्णोऽपि 'मा फलेषु कदाचने'ति वदन् फलस्य पुरुषेच्छानधीनत्वमाह।

नित्यकर्मणां करणेन प्रत्यवायपरिहारो भवति, अकरणे प्रत्यवायजनकानि तानीति कृत्वा नित्यानि नैमित्तिकानि च दुरित-क्षयार्थमनुष्ठेयानि भवन्ति। अत एवोच्यते नित्यनैमित्तिकानां दुरितक्षयहेतुता,

नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्।
ज्ञानं च विमलीकुर्वन्नभ्यासेन च पाचयेत्॥

इति वचने।

सर्वेषां कर्मणां वेदोदितत्वात् नित्यनैमित्तिकप्रायश्चित्तानां सर्वेषामनुष्ठानं 'तदुदितं कर्मस्वनुष्ठीयताम्' इत्यनेनोक्तं भवतीति कृत्वा पृथङ् नोक्तम्।

सतां सङ्गकरणम्, भगवतो भक्तेर्दृढत्वसम्पादनम्, शमादिसम्पत्तिः, कर्मणामाशुत्यागः, सद्विदुषः प्रति उपसर्पणम्, तत्पादुकासेवनम्, एकाक्षर, ब्रह्मणोऽर्थनम्, उपनिषद्वाक्यानां गुरुभ्यः श्रवणमिति द्वितीयं सोपानम्।

सत्सङ्गाद् भक्तेर्दृढता भवति। अतः सत्सङ्गकरणम्, भगवतो भक्तेर्दृढत्वकरणञ्चोभयं यौगपद्येनोक्तमत्र। सद्विदुष उपसृप्यता तत्पादुकासेवनञ्चेत्युभयं कथमुच्यत इति न चोद्यम्, गुरौ दृढतर-श्रद्धाद्योतकत्वात् पादुकासेवनस्य पृथगुपन्यासात्। श्रद्धायाः प्राधान्यञ्च 'तस्य श्रद्धैव शिरः ब्रह्मपुच्छं प्रतिष्ठा' इति श्रुत्या बोधितमनपलपनीयं वर्तते।

'श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः' इति गीतोक्तं ज्ञानं ब्रह्मपदवाच्यम्, 'ब्रह्मैकाक्षरमर्थ्यताम्' इत्यनेन जिज्ञास्यतया प्रस्तूयते।

गुरुमुखात् श्रवणानन्तरं महावाक्यार्थविचारः, उपनिषत्प्रतिपाद्यपक्ष-समाश्रयणम्, दुस्तर्काद्विरामपूर्वकं श्रुतिसम्मततर्काश्रयणम्, अहं ब्रह्मास्मीति प्रतिदिनं विभावनम्, गर्वपरित्यागः, देहेऽहंमतेस्त्यागः, बुधजनैर्ज्ञानिभिः; सह वादस्य त्यागश्चेति सर्वाणि तृतीयसोपानरूपेणोक्तानि।

दुस्तर्कः श्रद्धाविघातकस्तत्त्वप्रतिबन्धकश्च हेयतयोपदिश्यते। यद्यपि वादकथा तत्त्वबुभुत्सया भवति, तथापि तत्त्याग उच्यमानः 'आज्ञापालनं कर्तव्यं

न तत्र प्रतिप्रश्नः कार्यः' इति बोधयति। गुरोर्मौनव्याख्यानेन संशयनिवृत्तेः श्रुतत्वात्। यदपि प्रणिपातपरिप्रश्नसेवानां, ज्ञानोपदेशार्थमावश्यकत्वमुक्तम्, तत् स्वाभिप्रायप्रकाशनार्थम् आवश्यकतयोक्तम्। सेवया प्रणिपातपुरःसरं परिप्रश्नेन प्रेरितो बुधो यत् किञ्चिदपि कर्तव्यत्वेनोपदिशति, तत्र प्रश्नाभावो जल्पत्यागेनोच्यते, केवलं मौनेनाज्ञापालनं कर्तव्यमिति तदाशयः। ज्ञानप्राप्तौ गुरोरेव महत्त्वं विद्यते, एतद्बोधनाय च श्रुतिराचार्यवान् पुरुषो वेदेत्युपदिशति।

क्षुद्व्याधेश्चिकित्सनं भिक्षौषधभक्षणेन कर्तव्यम्, स्वाद्वन्नयाचनाभावे विधिवशात्प्राप्तेन सन्तोषः, औदासीन्यस्याभीप्सनम्, जनकृपानैष्ठुर्यत्यागः शीतोष्णादिद्वन्द्वविसहनम्, वृथा वाक्योच्चारणाभावश्चेति चतुर्थसोपान-रूपेणोक्तानि।

व्याधिस्त्यानसंशयप्रमादालस्यादयो योगान्तरायरूपेण योगशास्त्रे उक्ताः। अन्तरायाश्चित्तस्य विक्षेपाश्चित्तवृत्तिभिः सह भवन्ति। तत्र प्रथमान्तरायरूपेण व्याधिरुक्तः। अत्र तु क्षुधाया व्याधित्वमुच्यते, तेन योगान्तरायतोक्ता भवति। क्षुधाया अन्तरायता चाधिकान्नभक्षणेऽभक्षणे वाऽनुभूयमाना भिक्षान्नभक्षणे न भवति सप्तगेहान्यपीडयन् भिक्षार्थं गच्छतो भिक्षोरप्रतीक्षस्य। प्रचुरस्वाद्वन्न-लाभाभावेऽधिकभक्षणस्य सम्भवाभावात्। उत् ऊर्ध्वम् आसीनस्य भाव औदासीन्यमुच्यते रागद्वेषाभ्यामौदासीन्यं विहन्यतेऽतस्तदुपरि अवस्थानं ह्यौदासीन्यम्, तेन मनसि विचलनं न भवति।

अत एवोच्यते श्रीमद्भगवद्गीतासु—

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति।। इति। (२.६४)

वृथा वाक्योच्चारणाभावो, वाक्योच्चारणस्याहङ्कृतिवर्धकत्वादुच्यते सम्पाद्यतया। प्रायो मनो वादादौ प्रवृत्तं वादनिरोधे क्लिश्यति। वृथा वाक्योच्चारणेऽहङ्कृतिवर्धनं भवति। क्लेशः पश्चात्तापश्चानुभूय एतस्मिन्ननुष्ठीयमाने इति निषिध्यते एतत्।

एकान्ते सुखमासनम्, परतत्त्वे चेतसः समाधानम्, पूर्णात्मनः समीक्षणम्, जगतो बाधितत्त्वदर्शनम्, सम्यग्ज्ञानबलेन सञ्चितानां प्राक्कर्मणाम् प्रविलापनं ज्ञानबलादेव उत्तरैः कर्मभिरश्लेषसम्पादनम्, प्रारब्धभोगः ब्रह्मात्मना च स्थितिकरणम्, सर्वाण्येतानि पञ्चमसोपानरूपेणोक्तानि।

एकान्ते सुखेनानायासेन आसनस्य विधिश्चेतस: समाधानार्थम् आवश्यकतया अपेक्षिता वर्तते। तेन हि परतत्त्वे चेत: सम्यक्तया स्थापितं भवति। पूर्णात्मन: समीक्षणम्, स्वस्य पूर्णत्वचिन्तनम्। अपूर्णत्वस्फूर्तौ मनो न प्रसीदति मन:प्रसादाभावे चात्मा तत्र न प्रतिबिम्बते। आत्मनो भासनेन जगद् बाधितं भवति। पूर्णत्वसमीक्षणेन आत्मभासने जगतो बाधिततत्वदर्शनं कर्तुं शक्यत इति भवति समीक्षणं बाधिततत्वदर्शने हेतु:। सम्यग् ईक्षणं समीक्षणमुच्यते, तच्च असङ्गस्यापरिच्छिन्नस्य नित्यस्य ईक्षणम्, तेन जगतो बाध: कथं भवतीति विचार एव वक्तुं शक्यते यद् आवृते हि आत्मनि जगदवभासमानं भवति। समीक्षणेनावरणतिरोधाने बाधितं भवतीति रज्जुसर्पदृष्टान्तेनावगन्तुं शक्यते।

सोपानपञ्चकार्थव्याख्यानपुर:सरमद्वैतब्रह्म प्रतिपादयन्त आचार्या देशिकतां प्रापु:। देशिकत्वं हि अतिसर्जनेन सूच्यते। अतिसर्जनं नामाऽतिक्रम्य सर्जनं तच्च प्राकृतगुणानां सामान्यतो भासमानानामकल्याणकराणां देहादावात्म-बुद्ध्यादीनां हानपूर्वकम् आत्मनो ब्रह्मरूपेण भावनम्। भावनया हि ब्रह्म आत्मत्वेनोपगतं भवति। इयमुपगति: प्रत्यगात्मब्रह्मसाक्षात्काररूपा आचार्याणां कृपोपदेशाभ्यां शिष्येष्वात्मप्राप्तियोग्यतां सम्पादयताम् उपसदनमन्तरा न भवतीति उपसत्तिर्विधीयते, अनन्तरं शिष्येषु श्रद्धालुषु गुणाधानं कुर्वते। एवं देशिकपुङ्गवपरम्परेयं त्रिदेवेभ्योऽप्यधिका वर्तते, तेभ्योऽधिकयो-र्निग्रहानुग्रहयोर्गुणयोर्धारणात्। उक्तं हि गुरुगीतायाम्—

यस्मिन् सृष्टिस्थितिध्वंसनिग्रहानुग्रहात्मकम्।
कृत्यं पञ्चविधं शश्वद् भासते तं नमाम्यहम्।।

एवं ब्रह्मविष्णुरुद्रकृत्यविशेषान् सृष्टिस्थितिसंहाररूपान् स्वकर्तव्यत्वेन स्वीकुर्वाणो गुरुस्तद्रूपतां भजते। तदुक्तं गुरुगीतायाम्—

अत्रिनेत्र: शिव: साक्षाद् द्विबाहुश्चापरो हरि:।
अचतुर्वदनो ब्रह्मा श्रीगुरु: कथित: प्रिये।। इति।

एवम् आचार्यप्रवरा इमे भगवत्पादपरम्परायां प्रवाहाविच्छेदेन सम्बद्धा: शङ्करभगवत्पादकृत्यानि लोकेच्छानुरोधेन स्मर्यमाणानि निष्पाद्य भगवत्पादानाम् अनुशासनं पालयन्तो नमस्ततिभि: सम्मान्यन्ते भगवत्कृपया च **अमृतमहोत्सवं** कृपाशीर्वचोभि: सनाथयन्तो विराजन्त इत्यस्माकं महत्सौभाग्यं दिदृक्षूणां तेषाम्।

●

# काञ्चीमठः, आचार्यपरम्परा च

**डॉ. शरदिन्दुकुमारत्रिपाठी**
सहायक-आचार्यः
संस्कृत-विभागः, कला-सङ्कायः
काशीहिन्दूविश्वविद्यालयः
वाराणसी



भारतवर्षस्य महत्त्वपूर्णेषु तीर्थस्थलेषु मोक्षप्रदायिकासु च पुरीषु काञ्चीपुर्याः परिगणनं वर्तते।

अयोध्या मथुरा माया काशी काञ्ची अवन्तिका।
पुरी द्वारवती चैव सप्तैता मोक्षदायिकाः।।

अपि च 'नेत्रद्वयं महेशस्य काशी काञ्ची पुरीद्वयम्' इति ब्रह्माण्डपुराणस्य वचनानुसारं भगवतः शिवस्य नेत्रस्वरूपे स्तः पुर्यौ इमे। काञ्चीशब्दस्य व्युत्पत्तिः कः अञ्चति यत्र, अर्थाद् ब्रह्म यत्र देदीप्यमानं भवति तत्स्थानं काञ्चीति।

क इति ब्रह्मणो नाम तेन तत्राञ्चितो हरिः।
तस्मात् काञ्चीति विख्याता पुरी पुण्यविवर्धिनी।।

श्रीमद्भागवते वर्णितमस्ति यत् तीर्थयात्राक्रमे बलरामो द्रविणदेशस्य पुण्यमयं वेङ्कटाचलं मन्दिरं जगाम, ततश्च सः काञ्चीमगमत्।

द्रविणेषु महापुण्यं दृष्ट्वाद्रिं वेङ्कटं प्रभुः।
कामक्रोष्णीं पुरीं काञ्चीं कावेरीं च सरिद्वराम्।।

एवमेव कामाक्षीविलास-मार्कण्डेयसंहिता-श्रीशङ्कराभ्युदय-पतञ्जलिचरित-नैषधीयचरितप्रभृतिषु ग्रन्थेषु काञ्चीपुर्याः पर्याप्ता चर्चा विद्यते।

इत्थं सर्वत्र प्राचीनार्वाचीनवाङ्मये चर्चितस्य काञ्चीपीठस्य संरक्षणं व्यवस्थापनञ्च गुरुपरम्परया प्रचलति। अद्यत्वे पीठस्यास्य ऊनसप्ततितमा आचार्याः सन्ति पूज्याः श्रीजयेन्द्रसरस्वतीमहाराजाः।

आद्यशङ्कराचार्यादारभ्य इदानीं यावत् काञ्चीकामकोटिपीठाधीश्वराणां परम्पराया अभिधानावलिः—

१. पूज्यपादश्रीमदाद्यशङ्कराचार्यः।

२. पूज्यपादश्रीसुरेश्वराचार्यः।

३. पूज्यपादसर्वज्ञात्मेन्द्रसरस्वतीस्वामी।

४. पूज्यपादश्रीसत्यबोधेन्द्रसरस्वतीस्वामी।

५. पूज्यपादश्रीज्ञानानन्देन्द्रसरस्वतीस्वामी।

६. पूज्यपादश्रीसुधानन्देन्द्रसरस्वतीस्वामी।

७. पूज्यपादश्रीअनन्तानन्देन्द्रसरस्वतीस्वामी।

८. पूज्यपादश्रीकैवल्यानन्देन्द्रसरस्वतीस्वामी।

९. पूज्यपादश्रीकृपाशङ्करेन्द्रसरस्वतीस्वामी।

१०. पूज्यपादश्रीसुरेश्वरेन्द्रसरस्वतीस्वामी।

११. पूज्यपादश्रीशिवानन्दचित्कनेन्द्रसरस्वतीस्वामी।

१२. पूज्यपादश्रीचन्द्रशेखरेन्द्रसरस्वतीस्वामी।

१३. पूज्यपादश्रीसच्चित्कनेन्द्रसरस्वतीस्वामी।

१४. पूज्यपादश्रीआविद्याकनेन्द्रसरस्वतीस्वामी।

१५. पूज्यपादश्रीकाशीपतिगङ्गाधरेन्द्रसरस्वतीस्वामी।

१६. पूज्यपादश्रीउज्ज्वलशङ्करेन्द्रसरस्वतीस्वामी।

१७. पूज्यपादबालगुरुश्रीगौडसदाशिवेन्द्रसरस्वतीस्वामी।

१८. पूज्यपादश्रीयोगीतिलकसुनेन्द्रसरस्वतीस्वामी।

१९. पूज्यपादश्रीविद्याकनेन्द्रसरस्वतीस्वामी।

२०. पूज्यपादश्रीमूकशङ्करेन्द्रसरस्वतीस्वामी।

२१. पूज्यपादश्रीसार्वभौमचन्द्रशेखरेन्द्रसरस्वतीस्वामी।

२२. पूज्यपादश्रीपरिपूर्णबोधेन्द्रसरस्वतीस्वामी।

२३. पूज्यपादश्रीसच्चित्सुखेन्द्रसरस्वतीस्वामी।

२४. पूज्यपादश्रीचित्सुखेन्द्रसरस्वतीस्वामी।

२५. पूज्यपादश्रीसच्चिदानन्दगणेन्द्रसरस्वतीस्वामी।

२६. पूज्यपादश्रीप्रज्ञानगणेन्द्रसरस्वतीस्वामी।

२७. पूज्यपादश्रीचिद्विलासेन्द्रसरस्वतीस्वामी।

२८. पूज्यपादश्रीसच्चित्कनेन्द्रसरस्वतीस्वामी।

२९. पूज्यपादश्रीपूर्णबोधेन्द्रसरस्वतीस्वामी।

३०. पूज्यपादश्रीबोधेन्द्रसरस्वतीस्वामी।

३१. पूज्यपादश्रीब्रह्मानन्दगमनेन्द्रसरस्वतीस्वामी।

३२. पूज्यपादश्रीसच्चित्कनेन्द्रसरस्वतीस्वामी (द्वितीयः)।

३३. पूज्यपादश्रीसच्चिदानन्देन्द्रसरस्वतीस्वामी।

३४. पूज्यपादश्रीचन्द्रशेखरेन्द्रसरस्वतीस्वामी (द्वितीयः)।

३५. पूज्यपादश्रीचित्सुखेन्द्रसरस्वतीस्वामी (द्वितीयः)।

३६. पूज्यपादश्रीचित्सुखेन्द्रसरस्वतीस्वामी (तृतीयः)।

३७. पूज्यपादश्रीविद्याकनेन्द्रसरस्वतीस्वामी (द्वितीयः)।

३८. पूज्यपादश्रीअभिनवशङ्करेन्द्रसरस्वतीस्वामी।

३९. पूज्यपादश्रीसच्चिद्विलासेन्द्रसरस्वतीस्वामी।

४०. पूज्यपादश्रीमहादेवेन्द्रसरस्वतीस्वामी।

४१. पूज्यपादश्रीगङ्गाधरेन्द्रसरस्वतीस्वामी।

४२. पूज्यपादश्रीब्रह्मानन्दघनेन्द्रसरस्वतीस्वामी।

४३. पूज्यपादश्रीआनन्दघनेन्द्रसरस्वतीस्वामी।

४४. पूज्यपादश्रीपूर्णबोधेन्द्रसरस्वतीस्वामी।

४५. पूज्यपादश्रीपरमशिवेन्द्रसरस्वतीस्वामी।

४६. पूज्यपादश्रीशान्तानन्दबोधेन्द्रसरस्वतीस्वामी।

४७. पूज्यपादश्रीचन्द्रशेखरेन्द्रसरस्वतीस्वामी (तृतीयः)।

४८. पूज्यपादश्रीअद्वैतानन्दबोधेन्द्रसरस्वतीस्वामी।

४९. पूज्यपादश्रीमहादेवेन्द्रसरस्वतीस्वामी (द्वितीयः)।

५०. पूज्यपादश्रीचन्द्रचूडेन्द्रसरस्वतीस्वामी।

५१. पूज्यपादश्रीविद्यातीर्थेन्द्रसरस्वतीस्वामी।
५२. पूज्यपादश्रीशङ्करानन्देन्द्रसरस्वतीस्वामी।
५३. पूज्यपादश्रीपूर्णानन्दसदाशिवेन्द्रसरस्वतीस्वामी।
५४. पूज्यपादश्रीमहादेवेन्द्रसरस्वतीस्वामी (तृतीय:)।
५५. पूज्यपादश्रीचन्द्रचूडेन्द्रसरस्वतीस्वामी (द्वितीय:)।
५६. पूज्यपादश्रीगङ्गाधरेन्द्रसरस्वतीस्वामी (द्वितीय:)।
५७. पूज्यपादश्रीपरमशिवेन्द्रसरस्वतीस्वामी (द्वितीय:)।
५८. पूज्यपादश्रीआत्मबोधेन्द्रसरस्वतीस्वामी।
५९. पूज्यपादश्रीबोधेन्द्रसरस्वतीस्वामी (द्वितीय:)।
६०. पूज्यपादश्रीअद्वैतात्मप्रकाशेन्द्रसरस्वतीस्वामी।
६१. पूज्यपादश्रीमहादेवेन्द्रसरस्वतीस्वामी (चतुर्थ:)।
६२. पूज्यपादश्रीचन्द्रशेखरेन्द्रसरस्वतीस्वामी (चतुर्थ:)।
६३. पूज्यपादश्रीमहादेवेन्द्रसरस्वतीस्वामी (पञ्चम:)।
६४. पूज्यपादश्रीचन्द्रशेखरेन्द्रसरस्वतीस्वामी (पञ्चम:)।
६५. पूज्यपादश्रीमहादेवेन्द्रसरस्वतीस्वामी (षष्ठ:।
६६. पूज्यपादश्रीचन्द्रशेखरेन्द्रसरस्वतीस्वामी (षष्ठ:)।
६७. पूज्यपादश्रीमहादेवेन्द्रसरस्वतीस्वामी (सप्तम:)।
६८. पूज्यपादश्रीचन्द्रशेखरेन्द्रसरस्वतीस्वामी (सप्तम:)।
६९. पूज्यपादश्रीजयेन्द्रसरस्वतीमहाराजा: (१९५४ त: वर्तमाना:)।

भगवत्पादशङ्कराचार्यस्य परम्पराया निर्वाहकेष्वाचार्येषु एते एकोनसप्ततितमा आचार्या: परमाचार्याणामन्यतमाश्च शिष्या:। निजवयस ऊनविंशे वर्षे संन्यासाश्रमं प्रविश्य सम्पूर्णस्यापि भारतवर्षस्य भ्रमणम्, दारबूरो-नामके स्थाने आद्यशङ्कराचार्यस्य प्रस्तरप्रतिमाया: स्थापनम्, कोयम्बतूरे कामाक्षीदेव्या: मन्दिरनिर्माणम्, कालडिनगरे आचार्यगाथा-गुम्फितस्य कीर्तिस्तम्भस्य संस्थापनम्, रामेश्वर-कन्याकुमारी-बद्रीनाथ-श्रीशैलम्-तिरुपति-जगन्नाथपुरी-कुरुक्षेत्र-तिरुविडै-मरुदूर-तिरुअनन्तपुर-प्रभृतिस्थानेषु शङ्करमठस्य निर्माणं विधाय स्वामिपादा

भारतीयजनतायामाध्यात्मिकभावोत्थानाय प्रयासं कृतवन्तः। एतदतिरिक्तं वेदविद्यायाः सार्वभौमप्रचारार्थं पूज्यपादैः काञ्ची-ऋषिकेश-कुरुक्षेत्र-अयोध्या-काशी-चित्रकूट-धनवाद-बोकारो-जमशेदपुर-कलकत्ता-उड़ीसा-मसूरी-पट्टमन-पेरुर-विरुप्पुपुरम्-तिरुविडै-मरुदूर-कुम्भकोणम्-इरुललीक्कि-कुलित्तलै-तिरुप्पालै-चिरुगमणि-नेरूर-रामेश्वरम्-मदुरै-ब्रह्मदेश-सेलम्-कोयम्बतूर-वेंगलूर-सेलवनतूर-इरुञ्जालकुडु-पालक्काडुप्रभृतिस्थानेषु वेद-पाठशालाः स्थापिताः, तत्र च सहस्राधिका विद्यार्थिनः प्रतिवर्षं वेदानधीत्य तत्प्रचारप्रसाराय कृतसङ्कल्पा भवन्ति। अपि च उच्चशिक्षायाः प्राचीनतमं केन्द्रं 'काञ्चीपुरम्' पुनरपि तथैव व्यवस्थापयितुं प्रयासः, श्रीचन्द्रशेखरेन्द्रसरस्वतीविश्वविद्यालयस्य स्थापनम्, अन्ताराष्ट्रिय-पुस्तकालयस्य स्थापनञ्चेति कार्याणि स्वामिपादानां शिक्षाप्रसार-विषयकमनुरागं द्योतयन्ति। कियद् गणयामः? एवंविधानि नैकानि गणनातीतकार्याणि सम्पादयतां श्रीचरणानामाशीर्वादः सदैवास्माभिः प्राप्येत इति।

७०. पूज्यपादश्रीशङ्करविजयेन्द्रसरस्वतीस्वामी।

शङ्कराचार्यशृङ्खलायां सप्ततितमा आचार्या एते सकलशास्त्राणां मर्मस्पर्शिविद्वांसः, मठद्वारा सञ्चालितानां समस्तसंस्थानां तत्कार्याणाञ्च सदैवावलोकनं सम्पादयन्ति।

**काश्यां काञ्चीमठः**

काश्यां हनुमानघट्टस्थितकाञ्चीमठस्य स्थापना १९४६ वैक्रमाब्दे अभवत्। प्रारम्भिकदिनेषु मठोऽयं शुकदेवमठनाम्ना विख्यात आसीत्। काश्या विद्वत्परम्परायाः संवर्द्धने मठस्यास्य विशिष्टमवदानं वर्तत इत्यत्र नास्ति सन्देहः। महामहोपाध्यायाः चिन्नास्वामिशास्त्रिवर्याः, पक्षतीर्थाः पण्डितरामचन्द्रदीक्षित-महोदयाः, प्रसिद्धा वेदान्तिनः पण्डितसुब्रह्मण्यम्शास्त्रिणः, प्रख्याता मीमांसकाश्च पण्डितपट्टाभिरामशास्त्रिमहाशया अनेनैव मठेन प्रतिष्ठापिताः। साम्प्रतमपि संस्कृतभाषाया भारतीयसंस्कृतेर्वेदविद्यायाश्च प्रसारे बहुविधानां कार्यक्रमाणां सम्पादनं भवति मठद्वारा। क्रमेऽस्मिन् 'श्रीपट्टाभिरामशास्त्रि-वेदमीमांसानुसन्धानकेन्द्र'-नाम्न्याः संस्थाया महदवदानमस्ति, यत्र वेदानां प्रत्येकंशाखायाः शताधिका विद्यार्थिनो गहनमध्ययनं विधाय तद्विश्वव्यापिप्रचाराय कृतसङ्कल्पा भवन्ति। एतदतिरिक्तमपि वेदानामुन्नयनार्थं काले काले मठेन नैके कार्यक्रमा आयोजिता आयोज्यन्ते च।

**प्रतिवर्षमायोज्यमानाः कार्यक्रमाः**

- परमपूज्यानां परमाचार्याणां जयन्त्युपलक्ष्ये हनुमानघट्टस्थस्य भगवतो हनुमतो विशेषशृङ्गारायोजनम्।
- परमपूज्यानां श्रीजयेन्द्रसरस्वतीस्वामिचरणानां जन्मदिवसमभिलक्ष्य विद्वत्सम्मानः।
- पूज्यानां बालस्वामिनां जन्मदिवसे बालवैदिकानां प्रोत्साहनार्थं विशेषकार्यक्रमाणामायोजनम्।
- चैत्रनवरात्रे रामजन्मोत्सवायोजनं धार्मिकप्रवचनञ्च।
- वैशाखशुक्लप्रतिपदः पञ्चमीं यावद् आद्यशङ्कराचार्यस्य जयन्तीमभिलक्ष्य नानाविधकार्यक्रमाणामायोजनम्।
- शारदीयनवरात्रे शतचण्डीयज्ञायोजनम्।
- भाद्रपदे श्रीकृष्णजन्माष्टमीमभिलक्ष्य विशेषकार्यक्रमाणामायोजनम्।
- मार्गशीर्षे परमाचार्याणां जयन्तीमुपलक्ष्य आराधनोत्सवायोजनम्।
- प्रतिवर्षं मठस्थछात्राणां कृते योगशिक्षणार्थं संस्कृतशिक्षणार्थं च शिविराणामायोजनम्।
- दक्षिणभारतीयवास्तुकलाया नितान्तमुत्कृष्टमुदाहरणमस्ति कामकोटीश्वरमन्दिरम्। तत्र भगवतः शिवस्य पञ्चायतनमूर्तयः प्रतिष्ठापिताः सन्ति। मन्दिरस्यास्य पूजनभोगादिव्यवस्थापि मठेनैव सम्पाद्यते। एतदतिरिक्तं प्रयाग-चित्रकूट-गयाप्रभृतिक्षेत्रेषु वर्तमानानामपि संस्थानां सञ्चालने तदुद्देश्यपूर्तौ च काञ्चीमठस्य महान् सहयोगो वर्तते।

इत्थं संस्कृतशास्त्राणां प्राथम्येन वेदानां भारतीयसंस्कृतेस्तत्समर्पिकायाश्च संस्कृतभाषायाः प्रचारप्रसारद्वारा, नानाविधाध्यात्मिककार्यक्रमाणामायोजनद्वारा, बहुविधावान्तरसंस्थानां सहयोगद्वारा च काशीस्थकाञ्चीमठो निजोद्देश्यसम्पादने सक्रियः सचेष्टश्च वर्तते।



# प्रत्यभिज्ञादर्शने स्वातन्त्र्यस्यावधारणा

**प्रो. कमलेशझाः**
आचार्यः, धर्मागमविभागस्य
काशीहिन्दूविश्वविद्यालये, वाराणस्याम्



निर्विमर्शं परं ब्रह्म जगन्मिथ्येति वादिनाम्।
विमर्शालिङ्गितो भाति प्रकाशः शक्तिवादिनाम्।।

**निबन्धसारसङ्क्षेपः–**

संस्कृतवाङ्मये निगमागमप्राधान्येन श्रुतिस्मृतिशास्त्रपुराणादीनां विशालं साहित्यं राराजते। परमध्यात्मविद्या विद्यानाम्, अक्षराणामकारोऽस्मि, गिरामस्म्येकमक्षरमित्यादिना अध्यात्मविद्यायाः प्राधान्यं भगवता वासुदेवेन गीतम्। अध्यात्मविद्येयं नानाप्रस्थान-भेदशालि-दर्शनशास्त्रं, नवनवोन्मेषशालि-कालातीतवपुः, कालजयि च विजयते। तत्रापि अद्वैतवाद एव प्राधान्यं भजते। प्रकृत-निबन्धे पूर्वं मायावादो निविश्यते यत्र अनादिभूतापि माया मिथ्याभूतं जगत् सृजन्ती चैतन्यमाच्छादयतीव। अनन्तरं स्वातन्त्र्यवादमूलकः ईश्वराद्वयवादः सन्निविश्यते यत्र भगवतः शिवस्य या तदभिन्ना आनन्दशक्तिः तदेव स्वातन्त्र्यमित्युच्यते। शिवोऽनेनैव स्वातन्त्र्येण विश्वमयो भवति। अथ चानेनैव स्वातन्त्र्येण विश्वोत्तीर्णो भवति। ततश्च विश्वमयतादशायां स्वातन्त्र्यस्यैव अपरं नामधेयं माया, या शिवस्वभावभूता न तु तुच्छाऽनिर्वचनीया वा। अनयोर्वादयोः दर्शनेषु नितरां प्रतिष्ठितयोः ते ते विशेषाः श्रीगुरुशास्त्रकृपया निबन्धेऽस्मिन् प्रतिबिम्बिताः सन्ति। धीधनैः प्रस्थानभेदमाकलयद्भिः ते ते विशेषाश्चीयन्तामात्मनो मुख्यमैश्वर्यञ्च प्रत्यभिज्ञायतामिति निर्मातुः अभ्यर्थना।

समुच्छलन्त्यै जगदात्मिकायै शान्तस्वरूपाय सदाशिवाय।
सते भवन्त्यै भवते च सत्यै नमः शिवायै च नमः शिवाय[१]।।

---

१. द्रष्टव्यम्; संवित्-स्वातन्त्र्यम्, श्लोक सं.-४५६।

मा वम संवृणु विषमिदमिति सातङ्कं पितामहेनोक्तः।
प्रातर्जयति सलज्जः कज्जलमलिनाधरः शम्भुः[१]॥

स्वाधारादुल्लसन्ती द्युतिविदितमहादिव्यतेजःस्वरूपा
षट्चक्रं भेदयन्ती गतिकृतमधुरध्वानमावेदयन्ती।
प्राप्येशं मोदयन्ती दशशतकमले व्याप्य विश्वं स्थिता या
विश्वानन्दप्रवाहान् वितरतु भवतां कौलिकी कुण्डली सा[२]॥

**श्रुतिर्द्वेधा**

वैदिकी तान्त्रिकी चेति द्वेधा विस्फुरन्ती चिन्मयी श्रुतिरनादिपरमेश्वरात्प्रभवन्ती[३] कस्य वा सुकृतिनो न नमस्या सदा सर्वार्थविधानकर्त्री सुशिवा कल्याणी माता। सामान्यरूपेण निगमशब्दो वेदवस्तुनि[४] प्रयुज्यते, आगमशब्दस्तु[५] तन्त्रवस्तुनि। निगमस्येव आगमस्यापि साहित्यं प्राधान्येन परमपुरुषार्थप्रतिपादनाय[६] प्रवृत्तं परिलक्ष्यते। अनाद्यज्ञानमूलाद् बन्धाद् जीवस्य मुक्तिस्तु ज्ञानादेवेति निगमागमानां पार्यन्तिकः सिद्धान्तो नाविदिततमः प्रेक्षकाणाम्।

---

१. आर्या सप्तशती, पृ. १।

२. सारस्वती सुषमा, द्र. संवित्स्वातन्त्र्यम्-४७९।

३. संस्कृत वाङ्मय का बृहद् इतिहास : कुलार्णवतन्त्रम्-२/१४०,
हारीतस्मृतिः-श्रुतिर्द्विविधा वैदिकी तान्त्रिकी च। उद्धृतम्—मनुस्मृतिः—२१९।
पुरोवाक्, पृ.-१६, सम्पादकीयम्-२४।

४. द्रष्टव्यम्, श्रीमद्भागवतमहापुराणम्-१/१/३।
निगमकल्पतरोर्गलितं फलम्।

५. संस्कृत साहित्य का बृहत् इतिहास, तन्त्रागम खण्ड-उद्धृत-पृ.सं.-२ पुरोवाक्—
(क) आगच्छन्ति बुद्धिमारोहन्ति यस्माद् अभ्युदयनिःश्रेयसोपायाः स आगमः।
—तत्त्ववैशारदी-आचार्यवाचस्पतिमिश्रः।

(ख) तन्त्रालोकः-३५/१-२ (द्रष्टव्यम्)।

६. वेदान्तपरिभाषा, पृ.सं.-१
'धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु मोक्ष एव परमपुरुषार्थः'।

**वेदशब्दव्युत्पत्तिः**

वेत्ति=जानाति अनेन धर्मार्थकाममोक्षोपायान् इति वेदः, इत्येवं ज्ञानार्थकाद् विद्-धातोः अदादिपठिताद् लुग्विकरणात् करणव्युत्पत्तिर्वेदशब्दः।

वेदनम् = सत्ता = अस्तित्वम्, वेदः इत्येवं सत्तार्थकाद् विद्धातोः दिवादिपठिताद् श्यन्विकरणाद् भावव्युत्पत्तिर्वेदशब्दः।

विन्दति = लभते अनेन धर्मादिचतुर्वर्गानिति वेदः इत्येवं लाभार्थकाद् विद्धातोस्तुदादिपठितात् करणव्युत्पत्तिर्वेदशब्दः।

विन्ते = विचारयति अनेन जगतः सृष्ट्यादिप्रक्रियां जीवब्रह्मणो-रैक्यावबोधप्रयोजनिकामिति वेदः इत्येवं विचारणार्थकाद् विद्धातोः रुधादिपठितात् करणव्युत्पत्तिर्वेदशब्दः। सत्ता-ज्ञान-लाभ-विचारार्थकेभ्यो विद्धातुभ्यो निष्पन्नस्य वेदशब्दराशेरपि वेद-परमतात्पर्यभूतस्य ब्रह्मण इव सच्चिदानन्दमयता वरीवर्ति। अत एव ओमिति एतदक्षरम्[1], ओमिति ब्रह्म[2], एतद्ध्येवाक्षरं ब्रह्म, एतद्ध्येवाक्षरं परम्[3], इत्याद्याः श्रुतयः 'गिरामस्म्येकमक्षरम्'[4] इत्याद्याः स्मृतयश्च स्वरसतः सङ्गच्छन्ते।

सर्वेषां स तु नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे[5]।। इति मनूक्तेश्च।

वेदयते = आख्याति अनेन नामकर्मादिकमिति वेदः इत्येव-माख्यानार्थकाद् विद्धातोरपि चुरादिपठितात् करणव्युत्पत्तिर्वेदशब्दः निष्पद्यते।

**अपौरुषेयो वेदः**

वेदः शिवः शिवो वेदः[6], वेदो नारायणः साक्षाद्[7] इत्यादिवचनान्यपि वेदब्रह्मणोः नित्यशब्दार्थयोः तादात्म्यं प्रतिपादयन्ति।

ईश्वराः स्वयमुद्भूताः..........तस्मान्महर्षयः इति वायुपुराणवचनात्[8] साक्षात्कृतधर्मभिर्महर्षिभिः कल्पादौ पूर्वकल्पत एव विद्यमानस्य वेदस्य साक्षात्कारो विहित इति निश्चीयते। भृगुवसिष्ठादीनां काले वेदशब्दराशौ

---

१. छान्दोग्योपनिषद्-१/१/१;
२. तैत्तिरीयोपनिषद्-८/१३७।
३. काठकोपनिषद्-१/२/१६;
४. श्रीमद्भगवद्गीता-१०/२५।
५. मनुस्मृतिः-१/२१;
६. स्कन्दपुराणम्, काशीखण्डः।
७. विष्णुपुराणम्;
८. वायुपुराणम्-५९/८२-८/३।

शाखाप्रशाखाभेदो नोदेति स्म। तैरवरकालिकेभ्यः असाक्षात्कृतधर्मभ्यो मुनिभ्यो मन्त्रोपदेशः कृतः। अथ गच्छता कालेन ह्रसितमेधेभ्यः शिष्येभ्यस्तदुपदेष्टुं शाखाप्रभेदो विहितस्तेन वेदव्यास इति संज्ञा समजायत। यथाह तत्रभवान् यास्कः—'साक्षात्कृतधर्माण ऋषयो बभूवुः—इमं समाम्नासिषुः वेदं च वेदाङ्गानि च'—इति[१]।

भगवान् व्यासोऽप्याह—

पराशरात् सत्यवत्यामंशांशकलया विभुः।
अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम्[२]॥

त एव ऋषयो वेदं स्वं स्वं व्यस्यन्ननेकधा।
शिष्यैः प्रशिष्यैस्तच्छिष्यैर्वेदास्ते शाखिनोऽभवन्[३]॥

**करुणामूलौ निगमागमौ**

अथ परमः कारुणिको भगवान् शिवः पञ्चकृत्यपरायणो[४] विजयते चिदानन्दैषणा-ज्ञानक्रियाशक्तिसुनिर्भरः[५]। अखिललोककल्याणकृदसौ देवाधि-देवः पञ्चभिर्मुखैर्निगमागमानुपदिदेश। तत्रास्य सद्योजातमुखाद् ऋग्वेदः, वामदेवमुखाद् यजुर्वेदः, अघोरमुखात् सामवेदः, तत्पुरुषमुखाद् अथर्ववेदः, ईशानमुखात् तु आगमः[६] प्राकट्यमुपजगाम।

---

१. निरुक्तम्-१/६/२०।

२. श्रीमद्भागवतमहापुराणम्, द्रष्ट.-जातः पराशराद् योगी वासव्यां कलया हरेः। (१/४/१४)

३. श्रीमद्भागवतमहापुराणम्, द्र.-व्यदधाद् यज्ञसन्तत्यै वेदमेकं चतुर्विधम्॥ (१/४/१९)

४. पूर्णता-प्रत्यभिज्ञा-१/४९
'अतः सृष्टिः स्थितिर्ध्वंसस्तिरोभावोऽप्यनुग्रहः। इति पञ्चसु कर्तृत्वमावहञ्छिव उच्यते॥

५. पूर्णताप्रत्यभिज्ञा-१/५२,५३,५४
स्वातन्त्र्यशक्तिः प्रथमा तदीया ह्यानन्दरूपेण विभासमाना।
इच्छा द्वितीयास्ति चमत्कृतिर्या चिच्छक्तिरेतस्य प्रकाशतैव॥
आमर्शरूपापि च ज्ञानशक्तिः क्रियापि सर्वाकृतिरूपतैव।
स्थिता प्रभोः सूक्ष्मतया परायामन्यत्र चाप्यक्रमशः स्फुरन्ती॥
इत्येवं शक्तिभिर्युक्तः पञ्चभिः परमेश्वरः।
इच्छाज्ञानक्रियाशक्त्यैवास्ति युक्तः स वस्तुतः॥

६. सूक्ष्मागमः—परस्पराविरुद्धार्थाः शिवोक्ता निगमागमाः।
अल्पबुद्धिभिरन्योन्यं विरोधः परिकल्प्यते॥ (शुभाशीर्वच., प्रथम पृष्ठ)

सर्वैरेभिर्वेदैरागमैश्च भगवन्महिमैव निभृतं स्तूयते।

**दर्शनानां त्रेधा विभागः**

वेदप्रामाण्येन प्रवृत्तानां दर्शनानां नामधेयम्—वैदिकं दर्शनमिति। आगमप्रामाण्येन प्रवृत्तानां दर्शनानां नामधेयम्—आगमिकं दर्शनमिति। तर्कयुक्त्युपपत्तिमुखेन प्रवृत्तानामुभयविलक्षणानां दर्शनानां नामधेयन्तु अवैदिकं (अश्रौतं) दर्शनमिति।

तत्र वैदिकं दर्शनं षोढा भिद्यते—सांख्यम्[१], योगः[२], न्यायः[३], वैशेषिकम्[४], पूर्वमीमांसा[५], वेदान्तः[६] (उत्तरमीमांसा) चेति। अवैदिकं दर्शनं त्रेधा—चार्वाकदर्शनम्[७], जैनदर्शनम्[८], बौद्धदर्शनञ्चेति[९]। बौद्धदर्शनस्य विनेयभेदाच्चत्वारः प्रभेदा भवन्ति—सौत्रान्तिकदर्शनम्, वैभाषिकदर्शनम्, माध्यमिकदर्शनम्, योगाचारदर्शनं चेति[१०]।

**आगमप्रभेदः**

आगमिकं दर्शनन्तु अतिविशालं विद्यते। तत्प्रभेदो यथा—

१. वैष्णवागमदर्शनम्—क. वैखानसागमः, ख. पाञ्चरात्रागमः।

२. शाक्तागमदर्शनम्—

३. शैवागमदर्शनम्—पाशुपत-कालामुख-कापालिक-शैवसिद्धान्त-दर्शनानि।

४. स्मार्ततन्त्रम्, ५. बौद्धतन्त्रम्, ६. जैनतन्त्रम्, ७. पौराणिकतन्त्रम्, ८. सौरतन्त्रम्, ९. गाणपत्यतन्त्रम्, १०. स्कान्दतन्त्रदर्शनानि।

---

१. सर्वदर्शनसङ्ग्रहः—सम्बद्धदर्शनम्।

२. सर्वदर्शनसङ्ग्रहः—सम्बद्धदर्शनम्।

३. सर्वदर्शनसङ्ग्रहः—सम्बद्धदर्शनम्।

४. सर्वदर्शनसङ्ग्रहः—सम्बद्धदर्शनम्।

५. सर्वदर्शनसङ्ग्रहः—सम्बद्धदर्शनम्।

६. वेदान्तसारः, पृ.सं.-१, 'वेदान्तो नाम उपनिषत्प्रमाणम्'।

७. सर्वदर्शनसङ्ग्रहः—सम्बद्धदर्शनम्।

८. सर्वदर्शनसङ्ग्रहः—सम्बद्धदर्शनम्।

९. सर्वदर्शनसङ्ग्रहः—सम्बद्धदर्शनम्।

१०. सर्वदर्शनसङ्ग्रहः—क्रमशः बाह्यार्थानुमेयवादः, बाह्यार्थप्रत्यक्षवादः, शून्यवादः, विज्ञानवादः।

**निषेधशेषो ब्रह्मवादः, विश्वरूप ईश्वराद्वयवादः.**

तत्र वैदिकदर्शनानामङ्गाङ्गिभावं समर्थयन्ति विद्वांसो मनीषिणः। एवञ्च यानि सांख्यादीनि पञ्च दर्शनानि यानि च विभिन्नानि वेदान्तदर्शनप्रस्थानानि तेषां समेषां शाङ्करे अद्वैते अङ्गरूपता आस्थीयते। तद्वद् अवैदिकानां समेषां दर्शनप्रस्थानानां विज्ञानाद्वैतवादे शून्याद्वैतवादे वा अङ्गरूपता आस्थीयते। तद्वदेव समेषामागमिकदर्शनप्रस्थानानां प्रत्यभिज्ञादर्शनस्य यः किल ईश्वराद्वैतवादः (परमाद्वैतवादः) तत्रैव अङ्गरूपता नितरामास्थीयते सदसद्विवेचकैः धीधनैः।

सम्प्रति आस्तिकदर्शनेषु शिरोरत्नायमानमद्वैतवादम्, आगमिकदर्शनेषु शिखामणिरूपमीश्वराद्वैतवादं चाधिकृत्य किमपि तुलनात्मकमध्ययनं विधीयते।

**वेदान्तप्रस्थानानि–**

वेदान्तदर्शने विभिन्नैः आचार्यैः विभिन्नान् वादान् सिद्धान्तयद्भिः भिन्नानि भाष्याणि ग्रथितानि राजन्ते। तद्यथा[१]—

| | | | |
|---|---|---|---|
| १. | जगद्गुरुशङ्कराचार्यः | शारीरकभाष्यम् | अद्वैतवादः |
| २. | जगद्गुरुभास्कराचार्यः | भाष्करभाष्यम् | औपाधिकभेदाभेदवादः |
| ३. | जगद्गुरुरामानुजाचार्यः | श्रीभाष्यम् | विशिष्टाद्वैतवादः |
| ४. | जगद्गुरुमध्वाचार्यः | पूर्णप्रज्ञभाष्यम् | द्वैतवादः |
| ५. | जगद्गुरुनिम्बार्काचार्यः | वेदान्तपारिजात-भाष्यम् | द्वैताद्वैतवादः |
| ६. | जगद्गुरुश्रीकण्ठाचार्यः | शैवभाष्यम् | शैवविशिष्टाद्वैतवादः |
| ७. | जगद्गुरुश्रीपत्याचार्यः | श्रीकरभाष्यम् | वीरशैवविशिष्टा-द्वैतवादः |
| ८. | जगद्गुरुश्रीवल्लभाचार्यः | अणुभाष्यम् | शुद्धाद्वैतवादः |
| ९. | जगद्गुरुश्रीविज्ञानभिक्षुः | विज्ञानामृतभाष्यम् | अविभागाद्वैतवादः |
| १०. | जगद्गुरुश्रीबलदेव-विद्याभूषणः | गोविन्दभाष्यम् | अचिन्त्यभेदाभेदवादः |

---

१. प्रबन्धकुसुमाञ्जलिः—पृ.सं.-५६।

परमद्वैतवादसिद्धान्तस्यैव पार्यन्तिकी अङ्गिरूपता मनीषिभिरास्थीयते। अस्मिन् वादे दृश्यभूतस्य जगतः अज्ञानोपादानकत्वम्[१] अङ्गीक्रियते। अज्ञानं, माया, अविद्या इत्यादिकं पर्यायतया आस्थीयते। अशेषविशेषप्रत्यनीकं चिन्मात्रं ब्रह्मैवात्र परमार्थः।

**ब्रह्मणः स्वरूपलक्षणं, तटस्थलक्षणञ्च**

स्वप्रकाशं नित्यशुद्धबुद्धमुक्तस्वभावं स्वतःसिद्धं सकृद्विभातञ्च[२] यत्, तदेतद् ब्रह्म सर्वेषामस्माकमात्मा विद्यते। एतस्य स्वरूपलक्षणमुक्तम्—'सत्यं ज्ञानमनन्तं ब्रह्म' इति[३]। तटस्थलक्षणं तु 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति' इति[४]। तदेतत् सूत्रितं 'जन्माद्यस्य यतः' इति[५]। निरुपाधिकं ब्रह्म निराश्रयं निर्विषयं सन्मात्रस्वरूपञ्च भवति। स्वप्रकाशस्यास्य स्वरूपप्रथने अन्यानपेक्षता भवति। सत्यस्यास्य ब्रह्मणः त्रिकालाबाध्यता च भवति। यश्च भोक्ता यद् वा भोक्तव्यं तत् सर्वं भेदप्रपञ्चात्मकं ब्रह्मणि आश्रितया अविद्यया[६] परिकल्पितं भवति। सैषा अविद्या अनादिः सत्त्वासत्त्वाभ्यामनिर्वचनीया अभावभिन्ना यत्किञ्चिद् भावरूपा भवति[७]। यदुक्तम्—**अनादिषट्कम्**—

जीव-ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा।
अविद्या तच्चितोर्योगः षडस्माकमनादयः।।

---

१. द्रष्टव्यम्—वेदान्तसारः—पृ.सं. २०६।
'अपवादो नाम रज्जुविवर्तस्य सर्पस्य रज्जुमात्रत्ववद्वस्तुविवर्तस्यावस्तुनोऽज्ञानादेः प्रपञ्चस्य वस्तुमात्रत्वम्। तदुक्तम्—
'सतत्त्वतोऽन्यथाप्रथा विकार इत्युदीरितः।
अतत्त्वतोऽन्यथाप्रथा विवर्त इत्युदाहृतः'।। इति।

२. मुण्डकोपनिषद्-१/१/६।

३. तैत्तिरीयोपनिषद्-२/१/१।

४. तैत्तिरीयोपनिषद्-३/१।

५. ब्रह्मसूत्रम्-१/१/२।

६. सङ्क्षेपशारीरकम्—
'आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः।।'

७. वेदान्तसारः—अज्ञानन्तु सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत् किञ्चिदिति। पृ. ८६।

न हि अव्यक्तामिमामनाद्यविद्यां विना त्रिगुणात्मकस्य जगत उत्पत्तिः सम्भवति। यदुक्तम्—

अव्यक्तनाम्नी परमेशशक्तिरनाद्यविद्या त्रिगुणात्मिका या।
कार्यानुमेया सुधियैव माया यया जगत्सर्वमिदं प्रसूयते[१]।।

**बन्ध-मोक्षौ**

एतस्य सकार्यस्याज्ञानस्यैव जीवान् प्रति बन्धरूपता दर्शनेषु व्याख्यायते। ततो मुक्तिस्तु आत्मसाक्षात्कारात्मकं ब्रह्मज्ञानं विना न सम्भवति। 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'[२], 'आत्मनो वा अरे दर्शनेन श्रुत्या मत्या विज्ञानेनेदं सर्वं विज्ञातं भवति'[३] तथा 'तमेव विदित्वातिमृत्युमेति'[४], 'आत्मान्वेष्टव्यः'[५], 'न स पुनरावर्तते'[६] इत्यादि-श्रुतावात्मज्ञानस्य मुक्तिहेतुत्वश्रवणात्।

**अनिर्वचनीया किल अविद्या**

अस्याश्चाविद्याया अनिर्वचनीयता आस्थीयते। अनिर्वचनीयत्वं नाम सत्त्वप्रकारकप्रतीत्यविषयत्वे सति असत्त्वप्रकारकप्रतीत्यविषयत्वे सति सदसत्त्वप्रकारकप्रतीत्यविषयत्वस्वरूपम्। यदुक्तं वार्त्तिककृता—

अविद्याया अविद्यात्वमिदमेव तु लक्षणम्।
यत् प्रमाणासहिष्णुत्वमन्यथा वस्तु सा भवेत्[७]।।

चित्सुखमुनिनाप्युक्तम्—

प्रत्येकं सदसत्त्वाभ्यां विचारपदवीं न यत्।
गाहते तदनिर्वाच्यमाहुर्वेदान्तवेदिनः[८]।।

---

१. विवेक-चूड़ाममणिः—श्लोक-सं. ११०।
२. बृहदारण्यकोपनिषद्—२/४/५।
३. बृहदारण्यकोपनिषद्—२/४/५।
४. श्वेताश्वतरोपनिषद्—६/१५, ३/८।
५. छान्दोग्योपनिषद्, उद्धृतम्-ब्रह्मसूत्र-शाङ्करभाष्यम्-पृ.सं. १८३।
६. उद्धृतम्-वेदान्तपरिभाषा, पृ.सं. १।
७. बृहदा.भा.वा. १८१।
८. चित्सुखी—१/१३।

तदेवमधिष्ठानभूते ब्रह्मणि तद्विषयिण्या अविद्यया अध्यस्तं जगत् मिथ्याभूतमाभाति। ब्रह्मज्ञानेन अधिष्ठानसाक्षात्कारे सति अविद्यासहितस्य जगतः निवृत्तिर्बाधो वा भवति। अतः आरोप्याधिष्ठानयोः न कश्चन सम्बन्धो भवितुमर्हति। यदुक्तं वार्त्तिककृता—

निःसङ्गस्य ससङ्गेन कूटस्थस्य विकारिणा।
आत्मनोऽनात्मना योगो वास्तवो नोपपद्यते[1]॥ इति।

सर्वबाधावधिभूतं ब्रह्म अध्यस्तस्य जगतः आंशिकेनापि दोषेण गुणेन वा न युज्यते। यदुक्तं भाष्यकृता—'तत्रैवं सति यत्र यदध्यस्तं तत्कृतेन दोषेण गुणेन वाणुमात्रेणापि न सम्बध्यते' इति[2]।

सङ्क्षेपशारीरककृतापि उक्तम्—'मृगवारिपूरपरिवारवती न नदी तथोषरभुवं स्पृशती'ति[3]।

यद्यपि ब्रह्म एकमस्ति, तथापि मायादि-उपाधिवशाज्जीवेश्वरभावं स्वीकरोति। यदुक्तम्—

एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्[4]॥ इति।

पञ्चदशीकृतापि—

मायाख्यायाः कामधेनोर्वत्सौ जीवेश्वरावुभौ।
यथेच्छं पिबतां द्वैतं तत्त्वं त्वद्वैतमेव हि[5]॥

**जीवनानात्वम्, प्रतिकर्मव्यवस्था च**

प्रस्थानभेदेन अविद्योपाधिकस्यान्तःकरणोपाधिकस्य वा चैतन्यस्य जीवरूपता आस्थीयते। यदुक्तम्—

जीवो हि नाम चेतनः शरीराध्यक्षः प्राणानां धारयिता[6]।

---

१. भाष्यवार्त्तिकम्, उद्धृतम्—अद्वैतरत्नरक्षणम्, पृ.सं. ४५।

२. भाष्यवार्त्तिकम्, उद्धृतम्-अद्वैत., पृ.सं. ४५।

३. सङ्क्षेपशारीरकम्, उद्धृतम्—अद्वैत., पृ.सं. ४५।

४. ब्र. बिन्दु.-१२।

५. पञ्चदशी-६/२३६।

६. ब्रह्मसूत्रशाङ्करभाष्यम्-१/१/६।

अस्ति आत्मा जीवाख्यः शरीरेन्द्रियपञ्जराध्यक्षः कर्मफलसम्बन्धी[१]।

मन उपाधिकश्च जीवः[२]।

अन्तःकरणनानात्वात् तदुपाधिकजीवनानात्वमिव अविद्यैक्यात् तदुपाधिकजीवैकत्वमपि सङ्गच्छते। एतेन प्रतिकर्मव्यवस्थापि उपपद्यते। शुद्धसत्त्वप्रधाना माया इत्युच्यते मलिनसत्त्वप्रधाना अविद्येति। उभयत्र व्यामोहजनकत्वं समानं भवति। इह जीवब्रह्मणोः अभेद इष्यते। यतो हि उपक्रमोपसंहारादिषड्विधतात्पर्यग्राहकैर्लिङ्गैः श्रुतेरद्वैते ब्रह्मणि तात्पर्यमवसीयते। यदुक्तम्—

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये[३]।। इति।

**आभासावच्छेद-प्रतिबिम्बसिद्धान्ताः**

मायामाश्रित्य पुष्यमाणस्याद्वैतस्योपपत्तये विवरणकृतः प्रतिबिम्बसिद्धान्तमातिष्ठन्ते, वार्त्तिककृत आभाससिद्धान्तम्, भामतीकृतस्तु अवच्छेदसिद्धान्तम्।

'तमेव विदित्वा अतिमृत्युमेति, नान्यः पन्था विद्यते अयनाय'[४] इत्यादि- श्रुत्या ब्रह्मात्मसाक्षात्कारेण बन्धो विलीनतां याति मुक्तिश्चावाप्यते। परमेषा अद्वैतवासना ईशानुग्रहं विना दुर्लभा भवति। यदुक्तम्—

ईश्वरानुग्रहादेषा पुंसामद्वैतवासना।
महाभयकृतत्राणा द्वित्राणां यदि जायते[५]।।

**जगतोऽभिन्ननिमित्तोपादानं ब्रह्म**

सोऽयं मिथ्याभूतः प्रपञ्चोऽविद्यायाः परिणामो भवति ब्रह्मणस्तु विवर्तः। अत एव एतन्नये अभिन्ननिमित्तोपादानकत्वं ब्रह्मणः स्वीक्रियते। तदुक्तम्—

'कारणसलक्षणोऽन्यथाभावः परिणामः, तद्विलक्षणो विवर्तः।'

---

१. ब्रह्मसूत्रशाङ्करभाष्यम्-१/१/७।
२. ब्रह्मसूत्रशाङ्करभाष्यम्-३/१/१४।
३. अद्वैतरत्नरक्षणम्, पृ.सं. ४८।
४. श्वेताश्वतरो. ६/१५, ३१८।
५. खण्डनखण्डखाद्यम्।

विवर्तस्तु प्रपञ्चोऽयं ब्रह्मणोऽपरिणामिनः।
अनादिवासनोद्भूतो न सारूप्यमपेक्षते[१]॥

ज्ञानं ब्रह्मरूपमेव न तु तद्धर्मः। श्रुतिषु ज्ञानसुखाभिन्नत्वस्य ब्रह्मणि प्रतिपादनात्। यथोक्तम्—'विज्ञानमानन्दं ब्रह्म'[२], 'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्'[३], 'अत्रायं पुरुषः स्वयं ज्योतिर्भवति'[४], 'विज्ञानघन एव'[५], 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते'[६], 'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायाम्'[७], 'भारूपः सत्यसङ्कल्पः'[८] इत्यादि।

**श्रुतिभिन्नानां तु व्यावहारिकं प्रामाण्यम्**

अत्र यद्यपि प्रत्यक्षादीनि षट् प्रमाणानि स्वीक्रियन्ते तथापि श्रुतिभिन्नानां प्रत्यक्षादिप्रमाणानां द्वैतग्राहित्वाद् व्यावहारिकं प्रामाण्यमिष्यते। ततश्च विरोधपरिहारः सुकरः। अयमाशयः—घटः सन् पटः सन्नित्येवं द्वैतसत्यत्वं प्रमीयते। **'नेह नानास्ति किञ्चन'**[९] इत्यादिश्रुत्या तु द्वैतप्रपञ्चस्याद्वैतब्रह्मणोऽतिरिक्ततया सत्यत्वं प्रतिषिध्यते। तदनयोः श्रुतिततिर-प्रमाणयोः विरोध-परिहाराय अद्वैतश्रुत्यनुगुणं व्यावहारिकप्रामाण्यमेव प्रत्यक्षादीनां स्वीक्रियते।

**मोक्षस्वरूपम्**

एतन्मते मोक्षो नाम अविद्यानिवृत्त्युपलक्षित आनन्द इत्यभ्युपगम्यते। अविद्याया निवृत्तिः आत्मतत्त्वज्ञानेन भवति[१०]। सत्यामविद्यानिवृत्तौ तु आत्मस्वरूपभूत आनन्दः स्वयमेव प्रकाशते। आनन्दस्य आत्मरूपत्वे प्रमाणं

---

१. सि.ले. सङ्ग्रहः।
२. बृहदारण्यकोपनिषद्-३/९/२८।
३. तैत्तिरीयोपनिषद्-२/७।
४. बृहदारण्यकोपनिषद्-४/३/९।
५. बृहदारण्यकोपनिषद्-२/४/१२।
६. तैत्तिरीयोपनिषद्-३/६।
७. तैत्तिरीयोपनिषद्-२/१/१।
८. छान्दोग्योपनिषद्-३/१४/२।
९. बृहदारण्यकोपनिषद्-४/४/१९।
१०. शाङ्करभाष्यम्/भामती।

तु श्रुतिरेव—विज्ञानमानन्दं ब्रह्मेति[१]। सिद्धान्ते अभावानामधिकरणात्मकत्वं स्वीक्रियते। अत एव अविद्यानिवृत्तिरपि आत्मस्वरूपानतिरिक्तैव भवतीति अविद्यानिवृत्तिमादाय द्वैतापत्तिर्नोपपद्यते।

**जीवन्मुक्तिः**

'न तस्य प्राणा उत्क्रामन्ति'[२], 'विमुक्तश्च विमुच्यते'[३], 'अत्र ब्रह्म समश्नुते'[४] इति च श्रुत्या प्राप्तब्रह्मसाक्षात्कारस्य अशरीरभावसहकृता जीवन्मुक्तिः प्रतिपादिता भवति।

**जीवब्रह्मणोरभेदः**

अद्वैतवादे जीवो ब्रह्मणोऽनन्यः सर्वव्यापी विभुरास्थीयते। यतो हि श्रुतिषु अविकृतस्यैव परमात्मनः शरीरे प्रवेश आम्नायते, अथ च मुक्तस्य ब्रह्माभेदः प्रतिपाद्यते। तद्यथा—'तत्सृष्ट्वा तदेवानुप्राविशत्'[५]। 'सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाऽभिवदन् यदास्ते' इति[६]। 'ब्रह्म वेद ब्रह्मैव भवतीति' च[७]।

ननु जीवस्य विभुत्वाङ्गीकारे तस्य उत्क्रान्तिगत्यागतयः कथमुपपद्येरन्—इति जिज्ञासायाः समाधानं भगवता ब्रह्मसूत्रकृता 'उत्क्रान्तिगत्यागतीनाम्'[८] इति सूत्रे विहितम्। प्रपञ्चितं चैतद् भगवद्भाष्यकृता, भामतीकृत्प्रभृतिभिश्चेति शम्।

सोऽयमद्वैतवादो जगत्प्रपञ्चं न्यक्कृत्य वेदान्तिसिद्धान्ते प्रतिष्ठाप्यते।

**आगमिकः स्वातन्त्र्यमूलोऽद्वैतवादः**

अथ ईश्वराद्वैतवादः सर्वाभ्युपगममुखेन व्यवहारोपपत्तिमङ्गीकुर्वतां भोगश्च मोक्षश्च करस्थ एवेति आगमिनां स्वातन्त्र्यसिद्धान्तः पुरस्क्रियते। तद्यथा—पराख्यसूत्रे सुस्पष्टमुच्यते शिवात्प्रवृत्तस्य ज्ञानस्य आत्मभेषजरूपता—

---

१. बृहदारण्यकोपनिषद्-३/९/२८।
२. बृहदारण्यकोपनिषद्-४/४/६।
३. काठकोपनिषद्-२/६/१४।
४. कठोपनिषद्-२/६/१४।
५. तैत्तिरीयोपनिषद्-२/६।
६. तैत्तिरीयारण्यकम्-३/१२/७।
७. मुण्डकोपनिषद्-३/२/९।
८. ब्रह्मसूत्रम्-२/१/१९।

ज्ञानमेतत् शिवक्ष्मोत्थं सङ्गृहाणात्मभेषजम्।
परिणामसुखं स्वादु विशेषगुणदर्शनम्।। इति[१]।

अयमेवार्थः शिवधर्मोत्तरेऽपि समर्थ्यते—

व्याधीनां भेषजं यद्वत् प्रतिपक्षः स्वभावतः।
तद्वत्संसारदोषाणां प्रतिपक्षः शिवः स्मृतः।। इति[२]।

शिवात्प्रवृत्तस्य आगमज्ञानस्य अमृतरूपता सुखप्रदता च समर्थिता ज्ञानधर्मोत्तरे—

शिवज्ञानामृतं पीत्वा विचरस्व यथासुखम्।। इति[३]।

**पदार्थत्रयम्**

आगमिकसिद्धान्तसमर्थने त्रयाणां पदार्थानामवधारणा विधीयते। पतिः पशुः पाश इति च। यत्र च स्रोतोभूतं मृगेन्द्रागमवचनमास्ते[४]।

तत्र पतिः शिवः, स चैकोऽनादिरनन्तश्च बन्धमुक्तिव्यवस्थामुत्तीर्णः। अणुसंज्ञिताः प्राणिनः पशुपदेनोच्यन्ते। येन पाशितः पशुर्भवति स पाशः पञ्चविधः—मलः, तिरोधानशक्तिः, महामाया, माया, कर्म चेति।

**पतिः शिवः**

शैवागमे पतिपदार्थो भगवान् शिवः। एष एव मायादेश्चेतनस्यापि प्रवर्तक आस्ते। समग्रां सृष्टिमसावेव तनुते। यदुक्तम्—

अचेतनस्य मायादेः प्रवर्तकतया पतिः।
सिद्धः सर्वार्थकृत् कर्त्ता व्यापकः सततोदितः[५]।। इति।

---

१. पराख्यसूत्रम्, द्र. तारं सुतारणं तरणं तारकं च प्रमोदकम्।
प्रमुदितं रम्यकं च सदा प्रमुदितं तथा।। एतज्ज्ञानं समाख्यातं समासात्परमेश्वर।।३।।
(स्व.तं. ११/१४६-४७)

२. शिवधर्मोत्तरम्, द्र. साकल्येन पुनवर्वस्ते शिवता सर्वभासिनी।। (पू.प्र. १/१५८)

३. ज्ञानधर्मोत्तरम्-क.-शिवज्ञानं यतो देवि सदैवाप्तागमः स्मृतः। (ने.तं. १६/८१-८२)
ख.-शिवज्ञानं रुद्रशक्तिसमावेशः।। (ने.तं. ३०, ख-२, पृ. ४५)

४. विश्वसारोत्तरसूत्रम्-द्र. शासनरोधनपालनपाचनयोगात् ससर्वमुपकुरुते।
तेन पतिः श्रेयोमय एव शिवो ना शिवं किमपि तत्र।। (त.आ. १/१०४)

५. वायवीयसंहिता-ईश्वरो हि परो देवो.........सर्गायेह प्रवर्तते। (सू. २०)

सृष्टिरूपकार्यस्य कर्तृत्वं पत्युरेव, न तु पशोर्नापि पाशस्य[१]।। इति।

असौ पतिः सर्वज्ञः, अनादिः, मलवर्जितः शिवसंज्ञश्च राजते। ज्ञानशक्त्यासौ सर्वं विजानाति, अथ च क्रियाशक्त्यासौ जगद् विरचयति।

**जगत्कर्त्तुर्देहराहित्यम्**

यद्यपि जगतः कर्त्ता शिवः शरीरं धृत्वा प्रपञ्चं निर्मातीति प्रतिभाति, अथापि तस्य भौतिकशरीरसम्बन्धो नोचितः। ततश्च बैन्दवं तदीयं शरीरमभ्युपगन्तव्यमिति चेत्, अत्रोच्यते—शिवशरीरं बिन्दूपादानकं चेदभ्युपगम्यते तर्हि बिन्दौ क्षोभं विना तस्योपादानता नोपपत्तिमञ्चति। अथ क्षोभः स्वत इष्यते शिवतो वा? स्वतः क्षोभस्वीकारे आत्माश्रयो नाम दोषः। शिवतः क्षोभस्वीकारे तु क्षोभक्रियां प्रति शिवशरीरमभ्युपेयम्। तदर्थसाधको बिन्दुरुपादानभूतः स्वीकार्यः। तत्रापि उपादाने क्षोभक्रियार्थं पुनः शरीरान्तरकल्पना आवश्यकीति, एवं क्रमेण अनवस्था दुरवस्था भवेत्।

यद्युच्यते सृष्ट्यर्थं स्वीकृते शरीरे अचलमूर्तिकृतः क्षोभ इष्यते न शरीरान्तरमपेक्ष्यत इति तर्हि अन्ते रण्डाविवाहश्चेदादावेव कुतो न हीति न्यायेन जगतः सृष्ट्यर्थं शरीरावधारणमपि वृथैव, अचलमूर्त्तेरिव परमेश्वरस्य सृष्टिक्रियास्वपि शरीरं विनैव कारणत्वोपपत्तेरिति।

अतश्च यथा स्वशरीरस्पन्दादौ आत्मनः कर्तृत्वं भवति स्वातन्त्र्येण तथा सृष्ट्यादिक्रियास्वपि शरीरं विनैव कारणत्रितयराहित्येन प्रभोः शिवस्य कर्त्तृत्वं न नोपपत्तिमञ्चति। एतत् सिद्धान्तसमर्थनाय उक्तमपि—

अदेहस्यापि कर्त्तृत्वं स्वदेहप्रेरणे यथा।। इति।

**जगत्कर्त्तुः करणराहित्यम्**

यथा च शरीरं विनैव प्रभोः जगत्कर्त्तृत्वं न विरुध्यते तथैव इन्द्रियाणां शरीराधिष्ठानकतया इन्द्रियाभावोऽपि ईश्वरस्य। पश्यत्यचक्षुरित्यादिश्रुतेः। करणस्य सकर्तृकत्वमवश्यमभ्युपेतव्यम्, न तु कर्त्तुः सकरणकत्वमवश्यमभ्युपेयम्। अत एवायस्कान्तमणिः कर्तृभूतः लोहाकर्षणक्रियायामक्षरहितोऽपि न प्रभवति। एवञ्च नेदमनुमानं पत्युः जगत्कर्त्तृत्वे करणसापेक्षतामनिवार्यां

---

१. पौष्करसंहिता, द्र. तेन कर्तृत्वं शुद्धस्वातन्त्र्यरूपं पूर्णमिह समर्थनीयम्। (ई.प्र.वि.वि., खण्डः १, पृ. २०९)

साधयितुं पर्याप्तम्—'पतिकर्तृका जगदुत्पत्त्यादिक्रिया यत्किञ्चित्करणा-वश्यसापेक्षा क्रियात्वात् छिदादिक्रियावदिति। यथा च कालस्य न शरीरं न वा किञ्चिदिन्द्रियमथापि तस्यामूर्तस्य जन्यमात्रं प्रति कर्तृत्वं सर्वशास्त्राविरुद्ध-मिष्यते तथैवामूर्तस्यापि जगत्कर्तुः शिवस्य शरीरेन्द्रियादिकं विनैव केवल-मिच्छाशक्त्या करणभूतया जगदुत्पत्त्यादिक्रियासम्पादकत्वमिष्यताम्। यदुक्तम्—

यथा कालो ह्यमूर्तोऽपि दृश्यते फलसाधकः।
एवं शिवो ह्यमूर्तोऽपि कुरुते कार्यमिच्छया[1]॥

विश्वसिद्धौ स्वतन्त्रस्य शिवस्यैव हेतुता विद्यते। यदुक्तम्—'चितिः स्वतन्त्रा विश्वसिद्धिहेतुः' इति[2]। 'नर्तक आत्मा' इति च[3]।

स्वप्ने यथैकदेहस्थोऽनेकदेहं प्रपश्यति।
पुत्रान् यथा पितानेकान् तथा पश्यन् शिवः स्थितः[4]॥ इति च।

**शैवागमे स्वातन्त्र्यमूलिका प्रतिबिम्बवादावधारणा**

सांख्यदर्शने प्रकृतेः परिणामभूतं जगत् सैव च कर्त्री इति परिणामवादस्य अवधारणा विद्यते। इयमेव अवधारणा सिद्धान्त-शैवमते आद्रियते। अत एव श्रीकण्ठाचार्येण विवर्तवादस्य खण्डनं युक्त्या विधाय परिणामवादस्य मण्डनं विहितम्। समसत्ताककार्यापत्तिर्विकार इति परिणामलक्षणं जागर्ति, अथ विषमसत्ताककार्यापत्तिर्विवर्त इति विवर्तलक्षणं चकास्ति। **संवित्प्रकाश**कृता भगवति शिवे जगत उपादानकारणता विवर्तकारणता चाभ्युपगम्यते। उभयी येयं कारणता तस्या उपपत्तये भगवतः शिवस्य देहपरिग्रहोऽपि तेन समर्थ्यते। यदुक्तम्—

विवर्तेऽप्यतथारूपस्तथा भासि त्वमच्युत।
परिणामे स एव त्वं सुवर्णमिव कुण्डले[5]॥ इति।

---

१. किरणसूत्रम्, द्र. एवं सर्गगतो देवः शिवः परमकारणम्॥ (स्व.तं.-११/३६)

२. प्रत्यभिज्ञाहृदयम्, सूत्रम्-१।

३. द्रष्टव्यम्-पू.प्र. २/४४२-४४३।

४. संवित्स्वात्रन्त्र्यम्-श्लोक-सं. ३६२।

५. संवित्प्रकाशः, द्र. (अभिनवस्य) गुरुभिर्वाणदत्ताचार्येण भाषितमिति संवित्प्रकाशे। (तं.आ.वि. ३/४६७)

अत्रभवान् अभिनवगुप्तपादस्तु ईश्वरप्रत्यभिज्ञाविमर्शिन्यां विवर्तवादस्य परिणामवादस्य चावधारणां प्रत्याख्याति, स्वीकुरुते च स्वातन्त्र्याधारितां प्रतिबिम्बवादस्यावधारणाम्।

**पञ्चमन्त्रतनुः शिवः**

ईशः, तत्पुरुषः, अघोरः, वामः, अजश्चेति पञ्चभिः मन्त्रैः[१] पञ्चमन्त्रतनुः शिवः पञ्चकृत्यपरायणः जगतः स्वामी जयति। सृष्टिः, स्थितिः, ध्वंसः, तिरोभावः, अनुग्रहश्चेति शिवस्य पञ्चकृत्यानि भवन्ति। एभिः शिवः जगतः सृष्टिं स्थितिं ध्वंसं च लीलया सम्पादयन् स्वरूपतिरोधानरूपं निग्रहं स्वरूपप्रथनरूपं प्रत्यभिज्ञानसंज्ञकमनुग्रहमपि विदधाति। यदुक्तम्—

जगज्जन्मस्थितिध्वंसतिरोभावविमुक्तयः।
कृत्यं सकारकफलं ज्ञेयमस्यैतदेव हि[२]।। इति।

**स्वातन्त्र्यशक्तिर्मुख्यमैश्वर्यम्–**

आगमे परमोपादेयं मुख्यं तत्त्वं परमाद्वैतभूतमास्ते परशिवः। सोऽयं चिद्घनः संवित्स्वभावो विलसति। स्वातन्त्र्यं तदभिन्ना शक्तिः। तदिदं परमात्मनो मुख्यमैश्वर्यम्। सैवेयमानन्दशक्तिः। यदुक्तम्—

तयोर्यद् यामलं रूपं स सङ्घट्ट इति स्मृतः।
आनन्दशक्तिः सैवोक्ता यतो विश्वं विसृज्यते[३]।। इति।

आनन्दः स्वातन्त्र्यमिति च[४]।

स्वातन्त्र्यं नाम विमर्शः, चित्, चैतन्यं, स्फुरता, सत्ता, सारः, हृदयं, स्पन्दः, शक्तिदशा, स्वरसोदिता, प्रतिभा, परावाग् इति च उच्यते। यदुक्तम्—

न शिवेन विना देवी न देव्या च विना शिवः।
नानयोरन्तरं किञ्चित् चन्द्रचन्द्रिकयोरिव।।

---

१. उद्धृतम्-दर्शनबिन्दुसङ्ग्रहे, पृ.सं. ७८।
पञ्चमन्त्राः—सद्योजातं प्रपद्यामि, वामदेवाय नमः, अघोरेभ्योऽथ घोरेभ्यः, तत्पुरुषाय विद्महे, ईशानः सर्वविद्यानाम्'।

२. उद्धृतम्-सारस्वती सुषमा-पृ.सं. ३४, वर्ष-३९, अङ्क-१-४ (विवरणम्)।

३. श्रीतन्त्रालोकः-३/६८।

४. पूर्णताप्रत्यभिज्ञा-१/५२, स्वातन्त्र्यशक्तिः प्रथमा तदीया ह्यानन्दरूपेण विभासमाना।

न शिवः शक्तिरहितो न शक्तिर्व्यतिरेकिणी।
शिवः शक्तस्तथाभावान् इच्छया कर्तुमीहते॥
शक्तिशक्तिमतोर्भेदः शैवे जातु न वर्ण्यते[१]॥

गुप्तपादेन इयमनुत्तरा, कुण्डली, कौलिकीति चोच्यते। तद्यथा—

अनन्यापेक्षिता यास्य विश्वात्मत्वं प्रति प्रभोः।
ताम्परां प्रतिभां देवीं सङ्गिरन्ते ह्यनुत्तराम्[२]॥
अकुलस्यास्य देवस्य कुलप्रथनशालिनी।
कौलिकी सा परा शक्तिरवियुक्तो यया प्रभुः[३]॥

सैषा समर्थिता भगवता उत्पलदेवेन—

चितिः प्रत्यवमर्शात्मा परा वाक् स्वरसोदिता।
स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः[४]॥
सा स्फुरता महासत्ता देशकालाविशेषिणी।
सैषा सारतया प्रोक्ता हृदयं परमेष्ठिनः[५]॥

अनयैव शक्त्या शिवः परिचीयते। तत एवास्या अभिधानं भवति शैवीमुखमिति। यदुक्तम्—

शक्त्यवस्थाप्रविष्टस्य निर्विभागेन भावना।
तदासौ शिवरूपी स्याच्छैवीमुखमिहोच्यते[६]॥
यथाऽऽलोकेन दीपस्य किरणैर्भास्करस्य च।
ज्ञायते दिग्विभागादि तद्वच्छक्त्या शिवः प्रिये[७]॥

---

१. शिवदृष्टिः-३/२/३।
२. श्रीतन्त्रालोकः-३/६६।
३. श्रीतन्त्रालोकः-३/६७।
४. ईश्वर-प्रत्यभिज्ञा-११५/१३।
५. ईश्वर-प्रत्यभिज्ञा-११५/१४।
६. विज्ञानभैरवः-का. २०।
७. विज्ञानभैरवः-का. २१।

**निरपेक्षं जगत्कारणत्वं शिवस्य–**

घटः कार्यम्, कुलालो निमित्तकारणम्, दण्डचक्रादि सहकारिकारणम्, कपालो मृत्पिण्डो वा समवायिकारणमिति नैयायिकाः। आगमिका जगत्प्रपञ्चं प्रति कार्यकारणभावं कथं व्यवस्थापयन्तीति चेदुच्यते। जगतः सृष्ट्यादिः कार्यम्, पतिपदार्थः शिवो निमित्तकारणम्, शक्तयोऽस्य स्वभावभूताः सहकारिकारणम्। बिन्दुस्तूपादानकारणमिति वितत्य प्रपञ्चितं पौष्करसंहितायाम्,[1] पराख्यसूत्रे[2] चेति शम्।

आगमिका वेदान्तिवत् परमेश्वरस्य जगत्सृष्ट्यादिकं प्रति अभिन्ननिमित्तोपादानत्वं नाङ्गीकुर्वते।

**प्रकाश-विमर्शौ**

परमशिवः स्वस्वातन्त्र्यमहिम्ना स्वात्मन्येव स्वाभिन्नं विचित्रं विश्वं स्वस्माद् अन्योन्यं च भिन्नमिवोद्भासयति। वस्तुतः शक्तिशक्तिमतोरभेदेऽपि स्वात्मकवेद्यांशप्राधान्यविवक्षायां विमर्शादिशब्देन वेदकांशप्राधान्यविवक्षायां तु तस्यैव प्रकाशशब्देन व्यवहारः। यथोक्तम्—

स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति[3]।

**स्वच्छः स्वच्छन्दश्च प्रकाशः**

विश्वं प्रतिबिम्बभूतं शक्तेः, स्वानधिकमपि अधिकमिवाभासयन् बोधसुन्दरो भगवान् विश्वभावप्रतिबिम्बसहिष्णुः प्रकाशः स्वच्छः स्वच्छन्दश्चेति विश्वरूपतया विश्वोत्तीर्णतया च प्रथते। प्रतिबिम्बस्वीकारादपि शिवो दर्पणवन्निर्मलः, न तु समलः। बोधाभ्युपगतचित्रज्ञानवद् एकानेकस्वरूपोऽपि बोधमहेश्वर एक एव। एष प्रकाशः स्वचमत्कारसारः स्वेच्छया स्वात्मभित्तौ अभेदेन परामृशन् स्वसंविदुपादानमेव विश्वमाभासयति। विश्वस्य आभासनमेव निर्मातृत्वं भगवतः। इति परामर्श एव दर्पणप्रकाशादेरपेक्षया प्रकाशमहेश्वरस्य वैलक्षण्यं प्रतिपादयति। यदुक्तम्—

---

१. उद्धृतम्-सारस्वती सुषमा, वर्ष-३९, अङ्क-१-४, पृ.सं. ३४।

२. उद्धृतम्, सारस्वती सुषमा, पृ.सं. ३४।

३. प्रत्यभिज्ञाहृदयम्, सूत्र-सं. २।

अन्तर्विभाति सकलं जगदात्मनीह यद्वद्विचित्ररचना मुकुरान्तराले।
बोधः पुनर्निजविमर्शनसारयुक्त्या विश्वं परामृशति नो मुकुरस्तथा तु[१]।।

**शुद्धाध्वपञ्चकम्**

परमशिवः विश्वोत्तीर्णो विश्वात्मकश्चास्ते। प्रकाशैकघनस्यास्य अखिलमभेदेनैव स्फुरति। परमशिवाद् अन्यत् किमपि वस्तुतो ग्राह्यं ग्राहकं च नास्ति। इत्थं परमेश्वरापेक्षया स्वाङ्गनिर्मिते भावराशौ न काचिद् भेदभ्रान्तिः। मायाप्रमात्रपेक्षया तु योऽयं भेदावभासः, एषा पूर्णत्वाख्यातिरूपा भ्रान्तिः अपूर्णख्यातिः भेदप्रथा भवति। परमशिवस्य स्वस्वरूपरूपाः याः शक्तयः—चिदानन्दैषणा ज्ञानक्रियारूपाः शिवादितत्त्वदशामधिशेरते—शिवः, शक्तिः, सदाशिवः, ईश्वरः, शुद्धविद्या चेति। सर्वप्रमातृणामन्तः पूर्णाहन्ताचमत्कारमयं सर्वतत्त्वोत्तीर्णं महाप्रकाशवपुः यच्चैतन्यम्, एतदेव शिवतत्त्वम्। चिद्रूपस्य विश्वं भवामीति परामृशतो विश्वभावस्वभावमयी संविदेव सर्वभावानां बीजभूमिः शक्त्यवस्था महेशस्य महाशून्यभूमौ अहमिदमित्यभेदेन पूर्णाहन्तामयः ज्ञानप्रधानः क्रियागौणश्चमत्कारः सदाशिवदशा। इदन्ताप्राधान्येन अहन्तागुणीकारेण **अहम्-अहम्** इदमिदमिति चमत्कारो बोधसारत्वाद् भगवतः विद्यातत्त्वं शुद्धम्। तुर्यातीतम् अनुत्तरम्, तुर्यरूपतया तत्त्वपञ्चकतया गीयते। परमशिवः कर्त्ता, सदाशिवेश्वरभूमौ—अहमिदमिति प्रकाशः शुद्धवेदनरूपः करणम्, माया-धरान्ततत्त्वसर्गः कार्यमिति कर्तृकरणकार्यरूप एक एव स्वात्ममहेश्वरो विजृम्भते।

परमशिवस्य स्वातन्त्र्यशक्तिः ततो न भिद्यते सोऽयं परमाद्वैतवादः। यदुक्तम्—'तथा तथा भासमानत्वमपि वस्तुतो न किञ्चिद्, अपि तु तदभेदाख्यातिमात्रम् एतदिति[२]।

'संवित्स्वभावः परमशिव एव भगवान् स्वातन्त्र्यादेव प्रकाशते' इति[३]।

'नानावैचित्र्यसहस्रैः स्फुरति' इति[४]।

---

१. द्र. परमार्थसारः-विमलतमपरभैरवबोधात् तद्वद्विभाशून्यमपि।
अन्योन्यं ततोऽपि च विभक्तमायाति जगदेतत्।। (का. १३)

२. श्रीतन्त्रालोकः-नवमाह्निकम्।

३. विवृतिविमर्शिनी, द्र. इदमेव संवेदनस्य संवेदनत्वं-यदेवं भूताभासनस्वातन्त्र्यमिति।
(ई.प्र.वि.खं. ३, पृ. २५)

४. प्रत्यभिज्ञाहृदयम्, सूत्र-संख्या ३।

**पत्युः तिस्रः अवस्थाः**

शिवः जगदुत्पत्त्यादिवर्जितः शान्तो निष्कलः तिष्ठति। यथा—घटं प्रति वनस्थदण्डे योग्यता रूपकारणता स्वीक्रियते तथैव निष्कले शिवे जगत्सृष्ट्यादिकरणयोग्यता। सेयं योग्यस्य शिवस्य 'शक्तः' इति संज्ञा प्रथते।

या तु जगत्सृष्ट्यादिकं प्रति शिवस्य उन्मुखता भवति सेयं सदाशिवाख्या सकलनिष्कलावस्था। उन्मुखस्य शिवस्य च 'उद्युक्तः' इति संज्ञा प्रथते।

जगत्सृष्ट्यादिक्रियायां प्रवर्तमानस्य शिवस्य ईश्वराख्या स्थूलावस्था भवति। तत्र शिवस्य 'प्रवृत्तः' इति संज्ञा प्रथते। यदुक्तम्—

शक्तोद्युक्तप्रवृत्तश्च कर्त्ता त्रिविध उच्यते।
शक्तेः प्रवृत्तिभेदेन भेदस्तस्योपचारतः[१]।। इति।

**पशुर्जीवः**

न्यायदर्शने पदार्थस्य सप्तविधत्वं स्वीक्रियते। तत्र प्रथमः पदार्थो द्रव्यम्। तच्च नवविधम्।

यदुक्तम्—

पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव इति[२]।

तत्राष्टमं द्रव्यमात्मा। स द्विविधो भवति। जीवः परमात्मा चेति। परमेश्वर एकः सर्वज्ञश्च भवति। तद्भिन्नो जीवः प्रतिशरीरं भिन्नो भवति अथापि विभुरिति स्वीक्रियते। तदेवं जन्यज्ञानगुणाधिकरणं जीव इति नैयायिकाः। चैतन्यविशिष्ट-देह एव आत्मेति चार्वाकाः। प्रतिक्षणं भिद्यमानो नश्वर आत्मेति क्षणभङ्गवादिनो बौद्धाः। शरीरव्यापी मध्यम-परिमाणो जीव इति जैनाः। एकस्यैवात्मनोऽस्तित्वं प्रतिप्राणिशरीरं भेदेन व्यपदिश्यत इति अद्वैतिनः। अणुपरिमाण इति विशिष्टाद्वैतिनोऽभ्युपयन्ति। सांख्यास्तु पुरुषाख्यस्य जीवस्य शुद्धबुद्धत्वं पुष्करपलाशवन्निर्लेपत्वं चाङ्गीकुर्वन्ति। तदीयप्रेरणां विनैव प्रकृतिकर्तृका सृष्टिर्भवति। यदुच्यते—

---

१. मृगेन्द्रसूत्रम्, द्र. स्वातन्त्र्यमात्रसद्भावा या त्विच्छा शक्तिरैश्वरी।
शिवस्य सैव करणं तया वेत्ति करोति च। (तं.आ. १०/१७)

२. तर्कसङ्ग्रहः पृ.सं. १।

वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य[१]।

तदेवं सांख्यनये पुरुषस्य न प्रेरकत्वं नापि प्रेर्यत्वं भवति। प्रकृतिश्च अव्यक्तनाम्नी न कस्यापि कार्यम्। अपि तु सर्वकारणमनादिश्च। यदुक्तम्— **मूलप्रकृतिरविकृतिरिति**[२]। परमेतद् आगमिभ्यो न रोचते।

**मूलप्रकृतिर्नाविकृतिः**

तथा हि—अव्यक्तं कार्यमचैतन्ये सत्यनेकत्वात्। यद् अचैतन्ये सत्यनेकं तत्सर्वं कार्यं, यथा घटः। यन्न कार्यं तदचैतन्ये सत्यनेकं न भवति—यथात्मा। अचैतन्ये सत्यनेकं चाऽव्यक्तं तस्मात् कार्यमिति। यदुक्तम्—

अचेतनमनेकात्म सर्वं कार्यं यथा घटः।
प्रधानं च तथा तस्मात् कार्यं नात्मा तु चेतनः[३]।।

दृश्यमानं सम्पूर्णं जगत् सुखदुःखमोहात्मकं विद्यते विषमं चैतत्। कार्यरूपं चैतज्जगत् तादृशमेव हेतुं कल्पयेत्। स च हेतुः अव्यक्त इत्याख्यायते सांख्यैः। तदपि सत्त्वरजस्तमोमयं सुखदुःखमोहहेतुरवसीयते। तच्चाचेतनं नानारूपम्। अत एव घटादिवदसौ प्रकृतिरपि प्रधानाख्या कार्यमेव भवितुमर्हति। स च हेतुः निशाख्या माया सिद्ध्यति। एतावता मूलप्रकृतिः विकृतिर्न भवतीति सांख्यराद्धान्तः अपास्तो भवति।

**प्रत्यभिज्ञानये मायास्वरूपम्**

अथ केयं माया इति चेदुच्यते—मीयते=परिच्छिद्यते धरान्तः प्रमातृप्रमेयप्रपञ्चो यया सा माया। मोहयति विश्वमिति वा माया।

परमं यत्स्वातन्त्र्यं दुर्घटसम्पादनं महेशस्य।
देवी मायाशक्तिः स्वात्मावरणं शिवस्यैतत्[४]।।

माया-स्वीकारपारतन्त्र्यात् सर्वज्ञत्व-सर्वकर्तृत्वमयोऽपि बोधः सर्वज्ञत्वादि-गुणापहस्तनेनाख्यातिरूपमाणवं मलमापन्नः घटाकाशवत् पूर्णरूपाच्चिदाकाशाद्

---

१. सांख्यकारिका-५७।

२. सांख्यकारिका-३।

३. श्रीतन्त्रालोकः, आह्निकम्-९।

४. परमार्थसारः, कारिका-संख्या-२८।

अवच्छेद्य परिमितीकृतः सन् पुंस्तत्त्वमुच्यते। सोऽयं मायायाः पाल्यः पाश्यश्च पशुः पाशानां भाजनम्, तत्त्वषट्कवेष्टितं पुंस्तत्त्वम्—इत्याख्यायते।

तदेवं माया शैवागमे कलादिधरणीप्रान्तं यज्जगत् तत्प्रति उपादानकारणभूता स्वीक्रियते। किन्तु कलादीनां जनने अधिष्ठातृभूतेन ईश्वरेण मायादौ क्षोभः क्रियते। यदुक्तम्—

तेनेशः क्षोभयेदेनां क्षोमोऽस्याः सूतियोग्यता[१]। इति।

अत्रेदमवधेयम्—कलादीनां धरान्तानां कार्याणामुत्पत्तेः प्रागपि मायात्म-जडकारणरूपेण सत्त्वमिष्यते। सोऽयं सत्कार्यवादो निभृतमुपपादितः सांख्याचार्यैः।

असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्[२]।। इति।

**मायाक्षोभफलम्**

तदेवमीश्वरक्षोभिता माया कलादीन् जनयति। कलादयश्च भोग्यभूता भवन्ति। माया स्वयं जाड्याञ्चिता ततश्च नास्या भोग्यसृष्टौ किमपि स्वार्थं, सङ्घातपरार्थत्वात्। नाऽपि क्षोभकस्य ईश्वरस्य किमपि स्वार्थं, तस्य शुद्धबोधैकरूपत्वात्, आप्तकामत्वाच्च। अत एवेयं जिज्ञासा स्वरसतो जागर्ति, किमर्थं मायायां क्षोभः, मायायाः प्रसवो वेति। तत्रैवं प्रत्यभिज्ञादार्शनिकाः समादधते—'ये किल अनादिभूता नानाविधाः पुमांसो बद्धा भोक्तारः अणवः, तेषां भोग्यसमर्पणार्थमेव मायायां क्रियमाणः क्षोभः, मायायाः कलादेः प्रसूतिश्च सार्थक्यं भजेते इति।

**कञ्चुकषट्कम्**

अत्रेदमवधेयम्—मायातः कला जन्यते। कलातो हि तत्त्वविस्तरो भवति। यद् यस्य केनचिद्रूपेण कारणात्मना सूक्ष्मतया वर्तते तत्रैव तस्य सत्त्वं भवति।

---

१. द्रष्टव्यम्—पूर्णता-प्रत्यभिज्ञा-१/४९२,४९३।
'इह क्षोभः समाख्यातः संविन्निष्ठैव ज्ञेयता।
क्षोभणापि च सैवास्ति ततो येयं बहिष्कृतिः।।
अन्तःस्थितस्य विश्वस्य बीजांशस्य सिसृक्षुता।
क्षोभोऽनिच्छे यदिच्छाया भासनं क्षोभणा च तत्।।'

२. सांख्यकारिका-९।

स्थूलस्य घटस्य उत्पत्तेः प्राग् मृद्रूपेणावस्थानान्मृदि एव घटस्य सत्त्वं भवति, न तु कुम्भकारे। एवमेव कलादीनामुत्पत्तेः प्राग् मायात्मनैव जडात्मना सत्त्वमभ्युपेयम्, अतश्च मायाया एव जाड्यं न तु तदधिष्ठातुरीश्वरस्य कुलालस्येवेति आयाति।

प्रभोः ज्ञानक्रियाशक्ती सङ्कुचिते पशोर्विद्याकले उच्येते। अधुनैव जानामि, अधुनैव करोमि इति ज्ञानक्रियास्वरूपेण भावानपि तथा कलयन् यद् अवच्छिनत्ति तद् इत्येषोऽस्य कालः[1]। किञ्चिदेव-इत्यवच्छिन्नमेव करोति, घटमात्रकरणाय प्रभवति, न पटादावित्यणोः कलातत्त्वम्[2]। नियतात् कारणात् नियतं कार्यं यदर्थयते—यथा वह्नेरेव धूम इति नियमेन अश्वमेधादेव स्वर्गफलमिति वा नियमेन पुण्यापुण्यैरात्मा नियम्यते तदस्य नियतितत्त्वम्[3]।

**सर्वात्मना** इति या इयम् अपूर्णम्मन्यता, सर्वं ममेदमुपयुज्यते भूयासम्, मा कदाचिन्न भूवमित्येतत् पशोः रागतत्त्वम्[4]। किञ्चिदेव घटादिकं जानामि पुरोवर्ति, न पुनर्दूरव्यवहितं वस्तु इति विद्यातत्त्वम्[5]।

**भावस्वभावः प्रकाशः, प्रकाशसंविदोरभेदः**

सत्त्वरजस्तमसां सुखदुःखमोहात्मकं सामान्यं रूपमङ्गादिभावो यत्र नोपलभ्यते सा मूलकारणं प्रकृतिः। जाग्रदादिका अवस्थाभेदा ग्राह्यग्राहकप्रपञ्चरूपाः सर्वे विशेषाः परमात्मनः स्वस्वभावस्य चैतन्यमहेश्वरस्यैव सर्वावस्थासु संविदनुगमात्, इत्थं सर्वत्र एकरूपतादर्शनात् प्रमाता सारदृश्वा भवति। भावानां प्रकाशने अन्यस्याप्रकाशरूपस्य बाह्यवासनादेर्हेतोः अनुपपद्यमानत्वात् स्वात्मप्रकाश एव स्वतन्त्रः, चित्स्वरूपोऽहमेव प्रकाशे—'प्रमातृप्रमेयरूपतया इत्यवास्तवो भेदः प्रथते—इति तात्त्विकप्रथनाभावाद्

---

१. पूर्णता-प्रत्यभिज्ञा-२/५३४, ५३५, ५३६।
मायीयं यच्च कर्तृत्वं क्रियया रूषितं पशोः। भावाभावावभासात्मक्रमरूपाच्च कालतः।।
करोम्यहं करिष्यामीत्याद्यात्मन्यवभासते। ततः कालपरिच्छिन्नकर्तृत्वप्रविभासकम्।।
कालतत्त्वमिदं प्रोक्तं कञ्चुकान्तर्गतं पुनः।

२. षट्त्रिंशत्तत्त्वसन्दोहः, श्लोक-सं. ८।
तत्सर्वकर्तृता सा सङ्कुचितकतिपयार्थमात्रपरा। किञ्चित्कर्तारममुं कलयन्ती कीर्त्यते कला नाम।।

३. मालिनीविजयोत्तरतन्त्रम्-१/२९; 'नियतिर्नियोजयत्येनं स्वके कर्मणि पुद्गलम्।'

४. मालिनीविजयोत्तरतन्त्रम्-१/२८; रागोऽपि रञ्जनयत्येनं स्वभागेष्वशुचिष्वपि।

५. षट्त्रिंशत्तत्त्वसन्दोहः, श्लोकसंख्या-९।
'सर्वज्ञतास्य शक्तिः परिमिततनुरल्पवेद्यमात्रपरा। ज्ञानमुद्भावयन्ती विद्येति निगद्यते बुधैराद्यैः।।'

भ्रान्तेरन्धकारेण रूपणम्। आदौ तावद् एकसंवित्सतत्त्वेष्वपि भावेषु भेदमयं जाड्यापादनमाख्यातितिमिरेण कृतम्, यत् स्वात्मनोऽभिन्नानां भावानां ततो भेदेन प्रथनम्, अत एवोच्यते—तिमिरमिव **तिमिरम**ख्यातिः[1]। अख्यात्यपहस्तितचित्स्वरूपेषु विश्ववर्तिष्वपि पदार्थेषु जाड्यमापादितेषु मध्यादुद्धृते व्यतिरिक्ते जडे **देहप्राणादौ** वेद्यखण्डे कृशोऽहम्, स्थूलोऽहम्, क्षुधितोऽहं, सुखी अस्मि, न किञ्चिद् अहमिति प्रमातृतया अनात्मभूते **आत्ममानित्वम**ताद्रूप्ये ताद्रूप्यप्रतिपत्तिः तद् एतद् अतिवैशसम्[2]।

**अनुत्तरमहेश्वरस्य षट्त्रिंशत्तत्त्वरूपता**

तदित्थं परमशिव एव स्वस्वातन्त्र्यवशाद् विभिन्नां दशामधिशय्य तत्तत्पदव्यवहारभाग्भवतीति षट्त्रिंशत्तत्त्वविभागोऽप्यत्र। षट्त्रिंशत्तत्त्वानि त्रिषु भागेषु विभक्तानि भवन्ति त्रिकशास्त्रे—

१. शिवतत्त्वम् = शिवशक्त्यात्मकम्

२. विद्यातत्त्वम् = सदाशिवेश्वरशुद्धविद्या-तत्त्वत्रयात्मकम्

३. आत्मतत्त्वम् = अवशिष्टैकत्रिंशत्तत्त्वात्मकम्।

**मलत्रयावृतः शिव एव पशुः**

स्वेच्छागृहीताणवमायीयकार्ममलत्रयः शिवः अङ्गीकृत-कञ्चुकपञ्चकवशाद् नानाविधसङ्कोचभावमधिगतः जीवोऽणुः संसारीत्यादिभिर्नामधेयैः व्यवह्रियमाणः बद्धो भोक्ता सम्पद्यते। यदुक्तम्—

एष प्रमाता मायान्धः संसारी कर्मबन्धनः।
विद्याभिज्ञापितैश्वर्यश्चिद्घनो मुक्त उच्यते[3]।।

स्वाङ्गरूपेषु भावेषु प्रमाता कथ्यते पतिः।
मायातो भेदिषु क्लेशकर्मादिकलुषः पशुः[4]।।

---

१. पर.सा., का.सं. २५।
'अज्ञानतिमिरयोगाद् एकमपि स्वस्वभावमात्मानम्। ग्राह्यग्राहकनानावैचित्र्येणावबुध्येत।।

२. परमार्थसारः, कारिका-संख्या-३१।
'तिमिरादपि तिमिरमिदं गण्डस्योपरि महानयं स्फोटः। यदनात्मन्यपि देहप्राणादावात्ममानित्वम्।

३. ईश्वरप्रत्यभिज्ञा-३/२/२।

४. ईश्वरप्रत्यभिज्ञा-३/२/३।

मायागृहीतसङ्कोचः शिवः पुंस्तत्त्वमुच्यते।
अयमेव हि संसारी जीवो भोक्तैव दृश्यते[१]॥
ज्ञत्वकर्तृत्वपूर्णत्वनित्यत्वान्यस्य शक्तयः।
तत्सङ्कोचात् सङ्कुचितः कलाद्यात्मतया मतः[२]॥

**बन्धमोक्षौ न वास्तवौ**

ईदृश-सङ्कोचभाव एव बन्धः। सोपायाद् आणवशाक्तशाम्भवाख्याद् अनुपायाद्वा समावेशवशाद् विगलितसङ्कोचभावोऽभिव्यक्तस्वस्वरूपप्रथनात्मकः पूर्णात्मतालाभो मोक्षः। यदुक्तम्—

मोक्षो हि नाम नैवान्यः स्वरूपप्रथनं हि सः[३]।
मोक्षस्य नैव किञ्चिद् धामास्ति न चापि गमनमन्यत्र[४]।

अज्ञानग्रन्थिभिदास्वशक्त्यभिव्यक्तता मोक्षः।

चिच्छक्तिरेव वस्तुत एतन्नये प्रमाणम्। यदुक्तम्—

न चक्षुः शब्दसंवित्तौ न श्रोत्रं रूपवेदने।
सर्वत्र ग्राहिका संवित् सैव मानमतो मतम्[५]॥

एवञ्च अविद्यारागादिना कलुषिता विषयाभिमुखी संशयादिविनिर्मुक्ता चिच्छक्तिः प्रमाणम्। प्रमाता तु आत्माभिमुखी चिच्छक्तिरिति प्रमाणप्रमात्रोर्विवेकः। प्रमाणं त्रिविधम्—प्रत्यक्षमनुमानं शब्दश्चेति। यदुक्तम्—

प्रत्यक्षमनुमानञ्च सह शब्देन शाङ्करे[६]। इति।

**पाशपञ्चकम्–**

स्वेच्छाप्रोद्भूतपाशप्रभावेणैव शिवः पशुर्भवति। स एव पुनः पाशमुक्तः सन् सदाशिवो भवति। पाशः पञ्चविधो भवति—मलः, तिरोधानशक्तिः, महामाया, माया, कर्म चेति।

---

१. अनु.प्र.प., श्लोक-सं.-२२।
२. अनु.प्र.प., श्लोक-सं.-२३।
३. परमार्थसारः कारिका-सं.-६०।
४. उद्धृतम्-भूमिका पूर्णताप्रत्यभिज्ञा, पृ.सं.-१२।
५. पौष्करे-१/१५।
६. दर्शनसर्वस्वम्, प्रास्ताविकम्, पृ.सं.-९।

**मलः–**

मलिनीकरोति = दृक्क्रियात्मकं तेज आच्छादयति इति मलः। अयम् = अज्ञानात्मा अनादिः पशुत्वापादको भवति[१]। अस्याष्टौ पर्याया: प्रोक्ताः। यथा—

मलोऽज्ञानं तमोऽज्ञत्वं तिरस्कारकरस्तथा।
पतिः पशुरविद्येति मलपर्यायवाचकाः[२]॥

मायावत् मलोऽपि अकारणकत्वाद् अनादिर्भवति। अस्य भिन्नाः शक्तयो भवन्ति। ततश्च एकमुक्तौ सर्वमुक्तिर्नापद्यते। मलस्य सप्तविधं कार्यं भवति। कार्यकारणयोरभेदात् मलस्य सप्तविधत्वमुच्यते। यथा—

मोहो मदश्च रागश्च विषादः शोष एव च।
वैचित्र्यं चैव हर्षाख्यः सप्तैते सहजा मलाः[३]॥

प्रकारान्तरेण मलं द्विविधं—बौद्धं पौरुषञ्चेति[४]।

**तिरोधानशक्तिः**

मलशक्तयो यदधीना भवन्ति सा पारमेश्वरी तिरोधानशक्तिः। अस्या मुख्यरूपेण पाशरूपता नास्ति[५]।

---

१. विवरणं द्रष्टव्यम्, पूर्णताप्रत्यभिज्ञा-२/४४८, ४४९, २५२, २५३।
'इत्याद्यन्वर्थसंज्ञाभिस्तत्र तत्र प्रकीर्तितम्। स्वरूपं गोपयन्तीयं माया भेदं शिवात् पशोः॥
दर्शयन्ती सुषुप्तत्वमिवाधत्ते पशौ मलम्। आणवं मलमख्यातिरस्तु किन्त्वभिलाषिता॥'

२. सुप्रभेदागमः, उद्धृतम्-सारस्वती सुषमा, पृ.-३७, वर्ष-३९, अङ्क-१-४।

३. तत्त्वत्रयनिर्णयः, श्लोक-संख्या-१८।

४. पूर्णताप्रत्यभिज्ञा-१/१६४,१६५,१६८,१७०,१७१।
पौरुषं पुरुषस्थं तद् बौद्धं बुद्धिस्थमेव च। तत्त्वतो मायिकं सर्वं त्रैविध्यं कार्यनामतः॥
पौरुषं हि मलं यत्स्याद् दीक्षा तस्य निवर्तिका। किन्तु दीक्षापि नो तावद् यावद् बौद्धं न नश्यति॥
सङ्कोचाध्यवसायात्माऽज्ञानं यद् बुद्धिसंस्थितम्। तदुच्छेदाय बौद्धी स्यादसङ्कुचितचेतना॥
तात्त्विकस्वस्वभावस्याज्ञानमेव ह्यनिश्चयः। अनात्मन्यात्मगर्वो यः स विपरीतनिश्चयः॥
इमे एव मले द्वे हि बुद्धिस्थे परिकीर्तिते। शास्त्रजेऽध्यवसायात्मज्ञाने सति विनश्यतः॥'

५. पूर्णताप्रत्यभिज्ञा-२/४५३-४५४।
'तेन स्वरूपस्वातन्त्र्यमात्रं मलविजृम्भणम्। मलादीनां च केषाञ्चिद् संविद्विश्रान्तिमन्तरा॥
नोपपन्ना यतः सत्ताऽतोऽत्र हेतुर्महेश्वरः। इति सृष्टौ मलं कर्म मायां चापेक्ष्य वर्तते'॥

**महामाया**

इयं शुद्धाध्वन उपादानकारणं भवति। इमां केचन विद्याङ्गम्, अपरे तु मायाङ्गं स्वीकुर्वन्ति[1]। शुद्धविद्या वागीश्वरी मातृका कुण्डलिनी परिग्रहशक्तिरिति च महामायापर्यायाः। कालदेशाध्वनां जननीं महामायामाहुराचार्याः।

**माया–**

प्रलये यस्यां सर्वं जगत् माति अथवा सर्वं जगत् यतो मयते सा माया[2]। यदुक्तम्—

मायातत्त्वं जगद्बीजमविनाश्यशिवात्मकम्।
विभ्वेकमकलं सूक्ष्ममनाद्यव्ययमीश्वरम्[3]॥

**कर्म**

अनेन पञ्चमेन पाशेनापि पशुर्बध्यते। कर्म द्विविधं भवति—धर्मात्मकमधर्मात्मकं च। अर्थतस्तस्य त्रैविध्यं भवति—जातिप्रदम् आयुःप्रदं भोगप्रदञ्च। यथोक्तं महामुनिना—

सति मूले तद्विपाको जात्यायुर्भोगा इति[4]।

---

१. पूर्णताप्रत्यभिज्ञा-१/१६२
भेदाख्यमायिकमलाभावाद् विद्याङ्गभूतेयम्। वाऽज्ञानमलसद्भावान्मायैवेयं महामाया॥

२. द्रष्टव्यम्, पूर्णताप्रत्यभिज्ञा-१/१३४,१४५,१४८-१५८।
'ग्राह्यमण्डलतद्ग्राहिनानारूपावमर्शिनी।
'माया' पूर्णत्वसम्भोगप्रच्युतिक्षोभकारिणी॥
भेदोद्भावनसामर्थ्यमिदन्तोल्लेखनेन यत्।
सैव 'माया' समाख्याता न तु वस्त्वन्तरात्मिका॥
तत्तदर्थप्रवृत्ताभिः संज्ञाभिरभिधीयते।
कार्यतो नामतो भेदो मायाया अधुनोच्यते॥
वैषम्यमधिगच्छन्ती जननौन्मुख्यभागियम्।
'मायाग्रन्थिः' समाख्याता मायाविलपदाभिधा॥
अव्यक्तस्य कलायाश्च जननी या गुहा स्मृता।
साऽव्यक्तकलयोस्तत्त्वं 'तत्त्वरूपे'ति कथ्यते॥
इदं तत्त्वमिदं नेति भ्रमसंशयदायिनी।
'मायाशक्तिः' समाख्याताऽभिन्ने भेदावभासिनी॥
इत्थं माया त्रिधा ख्याता नामकार्यविभेदतः।
ग्रन्थिस्तत्त्वं च शक्तिश्च यद्यप्येकैव वस्तुतः॥'

३. उद्धृतम्—सारस्वती सुषमा, वर्ष-३९, अङ्क-१-४।

४. योगसूत्रम्-२/१३।

तदेवं पाशः पञ्चविधो भवति। मलादिः कर्मान्तः। मृगेन्द्रतन्त्रे[१] महामायां विना पाशः चतुर्विधः प्रोच्यते। स्वायम्भुवागमे[२] तु तिरोधानशक्तिमपि विहाय त्रिविधः पाशः स्वीक्रियते—मलं कर्म माया चेति[३]। मुक्तौ पत्युर्ज्ञानमेव कारणं[४], तदुपकारकन्तु पशुपाशयोर्ज्ञानमिति त्रिविधः पदार्थः षट्त्रिंशत्तत्त्वात्मको[५] भवतीत्यलमतिविस्तरेण।

**नाशिवं विद्यते क्वचित्**

एष संविदद्वयवादः। अत्र शक्तिशक्तिमतोरभेदः। पराशक्तिः परात्मनः शिवात् न भिद्यते। षट्त्रिंशत्तत्त्वमध्ये न सा दशा या शिवो न भवेत्। सोऽयं विश्वमयः। विश्वोत्तीर्णोऽप्ययमेवाच्युतो विद्यते यं परशिवमाहुः गुप्तपादाः। यदुक्तम्—

---

१. द्रष्टव्यम्, पूर्णताप्रत्यभिज्ञा-२/४४४-४५४।
मलादीनां च केषाञ्चिद् संविद्विश्रान्तिमन्तरा।
नोपपन्ना यतः सत्ताऽतोऽत्र हेतुर्महेश्वरः॥
इति सृष्टौ मलं कर्म मायां चापेक्ष्य वर्तते।
शिवेच्छैवेति संसिद्धं सिद्धान्तं परमामृतम्।
अतः सृष्ट्यादिकृत्येऽस्ति मलादेरप्यपेक्षणम्॥

२. विवरणं द्रष्टव्यम्-२/४७०।
'अनादिमलमेवेदं पशुत्वं परिकीर्तितम्।
स्वेच्छयैवोद्गतं भाति स्वेच्छयैव विनश्यति॥'

३. विवरणं द्रष्टव्यम्-२/४७३-४७४।
'वृत्ते स्वरूपसङ्कोचे आणवेन मलेन वै।
भिन्नस्य प्रथनं यत्तन्मायीयमिति संज्ञितम्।
अबोधरूपदेहादेः कर्त्तुर्भिन्नप्रथावतः।
धर्माधर्मस्वरूपं च मलं कार्मं प्रकीर्तितम्॥'

४. विवरणं द्रष्टव्यम्-पू.प्र.-१/२५७-२६३,२७०।
'यथा स्थितस्तथैवास्व मा गा बाह्यमथान्तरम्।
केवलं चिद्विकासेन विकारनिकराञ्जहि॥
स ह्यखण्डितसद्भावं शिवतत्त्वं प्रपश्यति।
यो ह्यखण्डितसद्भावमात्मतत्त्वं प्रपद्यते॥'

५. पूर्णता-प्रत्यभिज्ञा, पृ.सं.-१४९।
'शिव-शक्ति-सदाशिवेश्वर-शुद्धविद्या-माया-कला-विद्या-राग-नियति-काल-पुरुष-प्रकृति-बुद्ध्यहङ्कार-मनः-श्रोत्र-त्वक्-चक्षु-जिह्वा-घ्राण-वाक्-पाणि-पाद-पायूपस्थ-शब्द-स्पर्श-रूप-रस-गन्धाकाश-वायु-वह्नि-सलिल-भूमय इत्येतानि षट्त्रिंशत्तत्त्वानि।

सर्वो ममायं विभव इत्येवं परिजानतः।
विश्वात्मनो विकल्पानां प्रसरेऽपि महेशता[१]॥

इति वा यस्य संवित्तिः क्रीडात्वेनाखिलं जगत्।
स पश्यन् सततं युक्तो जीवन्मुक्तो न संशयः[२]॥

तस्माच्छब्दार्थचिन्तासु न सावस्था न या शिवः[३]॥

शिवाशिवयोरत्र नितरामभेदः स्वीकार्यो भवति। यथोक्तम्—

शक्तिशक्तिमतोर्यद्वदभेदः सर्वदा स्थितः।
अतस्तद्धर्मधर्मित्वात् पराशक्तिः परात्मनः[४]॥

न वह्नेर्दाहिका शक्तिः व्यतिरिक्ता विभाव्यते।
केवलं ज्ञानसत्तायां प्रारम्भोऽयं प्रवेशने[५]॥

यत्तु सर्वविभागात्मस्वतन्त्रं बोधसुन्दरम्।
सप्तत्रिंशं तु तत्प्राहुस्तत्त्वं परशिवाभिधम्[६]॥

**श्रीस्वात्म-गुरु-शिवाभेददृष्टिमाहात्म्यम्**

तदेवं स्वात्ममहेश्वर एव विश्वमयो विश्वोत्तीर्णश्च विराजते परं यावद् एनं प्रभुं तदनुग्रहेण साधको गुरुरूपतया न पश्यति तावद् असौ प्रभुः स्वात्मतया नास्य प्रत्यभिज्ञायते। यथाहुः श्रीगुरवः—

---

१. प्रत्यभिज्ञाहृदयम्-पृ.सं.-६७
सर्वो ममायं विभव इत्येवं परिजानतः। विश्वात्मनो विकल्पानां प्रसरेऽपि महेशता॥

२. स्पन्दकारिका-२/३०।

३. स्पन्दकारिका-२/२९।

४. द्र.-जननी सर्वशक्तीनां सर्वशक्तिमयी परा।
राजते संविदात्मा शक्तिश्चैतन्यचन्द्रिका॥ (पू.प्र. १/१३८)

५. द्र.-न शिवः शक्तिरहितो न शक्तिर्व्यतिरेकिणी।
शिवः शक्तस्तथा भावानिच्छया कर्तुमीहते।
शक्तिशक्तिमतोर्भेदः शैवे जातु न वर्ण्यते॥ (शिवदृष्टिः ३/२-३)

६. तन्त्रा. ११/२१-२२।

नित्यं निरावरणमप्रतिमस्वरूपं शम्भुं स्वभावविमलं हृदि संस्फुरन्तम्।
पश्यन्ति नैव कृतिनः सुकृतैर्भवन्तं यावद्भवान्न गुरुरूपतया विभाति[१]।।

परशिवं ध्यायतो यत्सुखं जायते तद्ध्यायिन एव विजानन्ति। मन्ये, तदेव सुखमनुभवितुं या लिप्सा तद्वान् शिवो जगद् रचयित्वा देहवान् भवतीति।

त्वामनुस्मरतो नित्यं देहिनो यत्सुखं विभो।
मन्ये तल्लिप्सया सृष्ट्वा जगद्भवसि देहवान्[२]।।

सदागमैश्च नैगमैः सुधामयं शुभावहं।
सुदर्शनैकसंविदाप्यमीप्सितं चिरन्नवम्।
तदेतदद्वयद्वयप्रथं सदाशिवं गुरुं तदै।
क्यगं स्वयम्प्रभं सदात्मकं भजेऽन्वहम्।।

मायाऽनिर्वचना तुच्छा शाङ्कराद्वैतवादिनाम्।
स्वातन्त्र्यशक्तिर्जयतादीश्वराद्वयवादिनाम्।।

वेदतन्त्रसमाम्नातमद्वयद्वयमद्भुतम्।
सत्स्वरूपं विजयते नो बौद्धमसदद्वयम्।।



१. संवित्स्वातन्त्र्यम्, श्लोकसंख्या-४७६।
२. संवित्स्वातन्त्र्यम्, श्लोकसंख्या-२५।

# यत्र विश्वं भवत्येकनीडम्

**डॉ. राममूर्तिचतुर्वेदी**
उपाचार्यः, संस्कृतविभागे
महात्मागान्धिकाशीविद्यापीठे, वाराणस्याम्



साम्प्रतं शैक्षिकसमाजेषु वाणिज्यप्रतिष्ठानेषु च भूमण्डलीकरणं वैश्वीकरणं वा समधिकं चर्चीयते। आधुनिकसञ्चारमाध्यमानां वैपुल्येन गमनागमनसाधनानां सौकर्य्येण च समग्रं विश्वं नितरां नेदिष्ठमिव प्रतिभाति; परन्तु भौतिकमिदं नेदिष्ठं यदि स्वकीयसुखसाधनसंवर्धनार्थमेव भवति, तर्हि न लोककल्याणाय विश्वहिताय च कल्पिष्यते, यदि वा आध्यात्मिकं नेदिष्ठं जायते, तर्हि सुतरामेव सर्वप्राणिनां कृते श्रेयस्करं विश्वस्मै शुभावहं च भविष्यति।

'[illegible] विश्वस्मै किं योगदानम्' इति जिज्ञासायां 'यत्र विश्वं भवत्येकनीडम्' इति श्रुतिवचनं स्वनिहिततात्पर्यनिरूपणपुरस्सरं सुतरां सप्रमाणं व्याख्येयतामर्हति। अस्यामेव वेदविहितवैश्विकभावभूमौ 'वसुधैव कुटुम्बकम्', 'स्वदेशो भुवनत्रयम्', 'सा संस्कृतिः प्रथमा विश्ववारा', 'कृण्वतो विश्वमार्यम्' इत्यादीनि श्रुतिस्मृतिवचनानि सुतरां सङ्गच्छन्ते।

'कुत्र विश्वं भवत्येकनीडम्' इति जिज्ञासायाः समाधानार्थमेव प्रथमतो वैदिकं बहुदेवतावादं निरूप्य तत्र सर्वेषां देवानां परमात्मन्येवान्तर्भावं प्रतिपाद्य तत्रैव विश्वं भवत्येकनीडमिति सप्रमाणं वक्तुं शक्यते।

**मन्त्रवर्णसन्दर्भः**

'यत्र विश्वं भवत्येकनीडम्' इत्ययं मन्त्रवर्णः शुक्लयजुर्वेदीय-माध्यन्दिनसंहितायां द्वात्रिंशाध्यायस्याष्टतमे मन्त्रे समाम्नातः। तत्र प्रसक्तः सम्पूर्णोऽयं मन्त्रः—

> वेनस्तत्पश्यन्निहितं गुहा सत् यत्र विश्वं भवत्येकनीडम्।
> तस्मिन्निदं स च विचैति सर्वं स ओतः प्रोतश्च विभुः प्रजासु॥
>
> (शु.यजु. ३२/८)

अत्र भाष्यकारो महीधराचार्यः 'तत्'पदेन वेदान्तप्रसिद्धं ब्रह्म गृह्णाति, 'तत्'पदं वस्तुतः सर्वनामपदमस्ति, अतः पूर्वपरामर्शकं बुद्धिस्थपरामर्शकं वा भवति। भाष्यानुसारं वेनः पण्डितो विदितवेदान्तरहस्यतद्बुद्धिपरामृष्टं परं ब्रह्म पश्यति जानातीत्यर्थः। कीदृशं तत् सत्=नित्यं गुहायां निहितं दुर्ज्ञेयमित्यर्थः, यत्र ब्रह्मणि समग्रं विश्वमिदं ह्येकनीडमिव भवति, एकमेव नीडमाश्रयो यस्य तद् अविभक्तमविशेषं कारणमेव भवतीत्यर्थः।

सर्वमिदं विश्वं भूतजातं सर्गकाले तस्मादेव ब्रह्मणो निर्गच्छति, तथा संहारकाले पुनस्तस्मिन्नेव ब्रह्मणि प्रलीयते। स एव परमात्मा विश्वेषां प्रजानां सर्वविधप्राणिनां हृदयाकाशे प्रतिष्ठितत्वात् तन्तुषु पट इव ओतः प्रोतश्च विद्यते। स एव कार्यकारणरूपेण विविधभूतत्वाद् विभुरित्युच्यते।

पुनरयं मन्त्रवर्णोऽथर्ववेदीयशौनकशाखाया द्वितीये काण्डे प्रथममन्त्रे स्वल्पान्तरेण प्राप्यते, तत्र सम्पूर्णो मन्त्र एवं समाम्नातः—

वेनस्तत् पश्यत् परमं गुहा यद् यत्र विश्वं भवत्येकरूपम्।
इदं पृश्निरदुहज्जायमानाः स्वर्विदो अभ्यभूषत व्राः।।

(अथर्व. २/१)

अत्र भाष्यकारः सायणाचार्योऽपि तत्पदेन श्रुत्यन्तरप्रसिद्धं सत्यज्ञानादिलक्षणं परमं ब्रह्म गृह्णाति, तदनुसारं वेनो देदीप्यमान आदित्यः गुहायां सर्वप्राणिनां हृदये तत् सत्यज्ञानादिलक्षणं परं ब्रह्म पश्यति, यत्र सर्वाधिष्ठानरूपे परब्रह्मणि विश्वमिदं कृत्स्नं जगद् एकरूपतामधिगच्छति, आधेयरूपस्य विश्वस्याधिष्ठानव्यतिरेकेण सत्त्वाभावात्। आदित्यो देवः स्वानन्यत्वेन आत्मसाक्षात्कृतवान् इत्यर्थः।

### वेदस्य परमं प्रतिपाद्यम्

समासतो मुख्यतश्च वेदानां द्वे प्रतिपाद्ये वर्तेते, तत्र प्रथमो धर्मः, द्वितीयं ब्रह्म इति, इदमेव ब्रह्म सत्यज्ञानादिलक्षणं वेदस्य परमं प्रतिपाद्यं विद्यते। भारतीयषड्दर्शनेषु केवलं धर्मस्य ब्रह्मणश्च जिज्ञासा कृता दृश्यते, तत्र जिज्ञासया क्रियमाणं धर्मब्रह्मणोर्विचारवैभवं मीमांसापदेन व्यवह्रियते, अतः पूर्वमीमांसायां धर्मो जिज्ञास्यते, उत्तरमीमांसायां ब्रह्म जिज्ञास्यते, तत्र पूर्वमीमांसायाः प्रथमं प्रतिज्ञासूत्रम् 'अथातो धर्मजिज्ञासा' इति, तथा उत्तरमीमांसायाः प्रथमं प्रतिज्ञासूत्रम् 'अथातो ब्रह्मजिज्ञासा' इति। इतरेषां भारतीयदर्शनानां प्रतिज्ञावाक्येषु न तावद् जिज्ञास्यं किमप्युपलभ्यते, निदर्शनार्थमत्र

तेषां प्रतिज्ञावाक्यं द्रष्टुं शक्यते, तद्यथा—सांख्यदर्शने प्रथमं प्रतिज्ञासूत्रम्—'अथ त्रिविधदु:खात्यन्तनिवृत्तिरत्यन्तपुरुषार्थ:' (सां.सू. १/१)।

योगदर्शने प्रथमं प्रतिज्ञासूत्रम्—'अथ योगानुशासनम्' इति (यो.सू.१/१)।

न्यायदर्शने प्रथमं प्रतिज्ञासूत्रम्—'प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निश्रेयसाधिगम:' (न्या.सू. १/१/१)।

वैशेषिकदर्शने प्रथमं प्रतिज्ञासूत्रम्—'अथातो धर्मं व्याख्यास्याम:' (वै.सू. १/१)।

उभे पूर्वोत्तरमीमांसे भारतीयदर्शनेषु मीमांसादर्शनं वेदान्तदर्शनञ्चाभिधानेन व्याह्रियेते, तत्रेदमवगन्तव्यं यत् पूर्वमीमांसादर्शनेन धर्मतत्त्वमवबोध्यते, तथोत्तरमीमांसादर्शनेन अर्थाद् वेदान्तशास्त्रेण ब्रह्मतत्त्वमवबोध्यते। तत्त्वजिज्ञासायां प्रथमं धर्मतत्त्वं साधनत्वेन जिज्ञास्यं जायते, तदनु ब्रह्मतत्त्वं साध्यत्वेन जिज्ञास्यं जायत इति वैदिकसिद्धान्तानुरूप: क्रम:।

**धर्मस्वरूपनिरूपणम्**

विश्वस्मिन् विश्वे सर्वविधधर्मस्य मूलस्रोतांसि वेदा एव वर्तन्ते, यतो हि वैश्विकवाङ्मये ऋग्वेदादिचतुर्वेदा एव ग्रन्थप्राथमिकत्वेन परिगण्यन्ते, तत्र सर्वाधिक: पुरातन: प्राचीनश्च ग्रन्थ: ऋग्वेदोऽस्तीत्यत्र नास्ति मनागपि संशीतिलेश:। अत एवोच्यते—

चातुर्वर्ण्यं त्रयो लोका: चत्वारश्चाश्रमा: पृथक्।
भूतं भव्यं भविष्यञ्च सर्वं वेदात् प्रसिद्ध्यति॥

'वेदोऽखिलो धर्ममूलम्' (मनु. २/६)

धर्मो विश्वस्य जगत: प्रतिष्ठा, लोके धर्मिष्ठं प्रजा उपसर्पन्ति, धर्मेण पापमपनुदति, धर्मे सर्वं प्रतिष्ठितं, तस्माद् धर्मं परमं वदन्ति॥
(तै. आरण्यक. १०/६३)

य: कश्चित् कस्यचिद्धर्मो मनुना परिकीर्तित:।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि स:॥ (मनु. २/७)

पूर्वमीमांसाया: प्राथमिकग्रन्थे अर्थसङ्ग्रहे धर्ममधिकृत्य अथ को धर्म:? किं तस्य लक्षणम्? इति प्रश्नमुपस्थाप्य समाधानं प्रस्तूयते, यागादिरेव धर्म:, तल्लक्षणञ्च वेदप्रतिपाद्यप्रयोजनवदर्थो धर्म इति।

यागशब्दो हि यज्ञस्य नामान्तरं विद्यते, शाब्दिकनिर्वचनदृष्ट्या "देवपूजासङ्गतिकरणदानेषु" इत्यर्थकात् 'यज्'-धातोः 'यजयाजरक्षो नङ्' (पा. ३/३/९०) इति सूत्रेण नङ्प्रत्यये कृते 'यज्ञ'शब्दो निष्पद्यते। एतावता अयं भावो ज्ञायते, यद् यज्ञो नाम देवानामर्चनम्, देवैः सह सङ्गतिकरणम्, देवेभ्यः पितृभ्यश्च तदीयं हव्यकव्यादिकं स्वाहा-स्वधा-वषट्कारादिना सम्प्रदानमिति।

सन्दर्भेऽस्मिन् श्रौतसूत्रकारेण महर्षिणा कात्यायनेन—'अथ यज्ञं व्याख्यास्यामः' इति प्रतिज्ञाय 'द्रव्यं देवतात्यागः' इत्यादिना सूत्रेण समासेन यागस्वरूपं निर्दिष्टम्। तदनुसारम् अग्न्यादिदेवतोद्देश्येन आज्यपुरोडाशादि-हविर्द्रव्याणामग्नौ प्रक्षेपरूपस्त्यागो यागः कथ्यते। अत्र भाट्टदीपिकाकारेणापि तथैव निरूप्यते यागपदार्थः, तद्यथा—'यत्र प्रक्षेपाङ्गको देवतोद्देश्यपूर्वको द्रव्य-त्यागोऽनुष्ठीयते, तत्र यागपदार्थ' इति (भा.दी. ४/२/२)।

**देवैर्देवयजनं प्रथमो धर्मः**

'यज्ञो वै विष्णुः' (श.ब्रा. १/१/२/३) तथा "यज्ञो वै श्रेष्ठतमं कर्म" (श.ब्रा. १/७/१/५) इति श्रुतिवचनाभ्यां क्रमशो यज्ञपदेन देवदेवो विष्णुः, तथा अनुष्ठीयमानं वैदिकं कर्म गृह्यते। देवताः सर्वतः प्रथमं तेनैव श्रेष्ठतमेन कर्मणा यज्ञेन देवदेवं यज्ञरूपं विष्णुं समर्चयायासुः, इति श्रुत्या प्रतिपादनाद् देवैः कृतं विष्णुयजनमेव प्रथमो धर्मः सञ्जातः। अत एव मन्त्रब्राह्मणयोरेतत् प्रामाण्यमुपलभ्यते, तद्यथा—

"यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
तेह नाकं......" (ऋ. १०/९०/१६)

'यज्ञेन वै देवा यज्ञमयजन्त' (ऐ.ब्रा. १/१६) अत्र वेदवाक्ययोः 'यज्ञेन' इति तृतीयान्तं पदं श्रेष्ठतमकर्मवाचकं 'यज्ञं' इति द्वितीयान्तं पदं विष्णुदेवता- वाचकम्। अतो देवाः सर्वतः प्रथमम् 'ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्' इति श्रुत्या विष्णुमयेन पदार्थवता यागेन व्यापकं तमादिदेवं विष्णुमर्चयामासुः। यज्ञकर्मणि देवतायाः, द्रव्यस्य, त्यागक्रियायाश्च यत्त्रितयं स्वरूपं निगद्यते, तत्सर्वं प्राथमिकरूपेण विष्णुदेवमयमेवासीदिति स्मृत्या प्रमाणीक्रियते, तद्यथा गीतायां भगवता कृष्णेनात्मानमेवाधिकृत्योच्यते—

अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम्।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम्॥

पिताहमस्य जगतो माता धाता पितामहः।
वेद्यं पवित्रमोङ्कारम् ऋक्सामयजुरेव च।। (गी. ९/१६-१७)

**धर्मब्रह्मणोः साध्यसाधनभावः**

'धर्मब्रह्मणी वेदैकवेद्ये' इति सायणभाष्योक्तेः धर्मो ब्रह्म च क्रमेण वेदेषु प्रतिपादनीये भवतः। तत्र धर्मपदेन व्यपदिष्टो यज्ञः साधनतामुपगच्छति ब्रह्म-पदेन व्यपदिष्टो व्यापको देवो विष्णुः साध्यतामुपगच्छति, अत एव धर्मः साधनं ब्रह्म च साध्यमिति पौर्वापर्येण वक्तुं शक्यते। वेदेषु यज्ञ-पदेन धर्मब्रह्मणोरुभयोरपि गृह्यमाणत्वात् तदर्थं यज्ञार्थमेव ऋग्यजुःसामलक्षणानां वेदानां प्राकट्यं समजनि। अत एव स्मृतिपुराणोक्तवचनानि यज्ञार्थमेव वेदानामाविर्भावं प्रमाणयन्ति, तद्यथा—

अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।
दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम्।। (मनु. १/२३)
ऋचो यजूंषि सामानि निर्ममे यज्ञसिद्धये। (ब्र.पु. १/४२)
वेदास्तु यज्ञार्थमभिप्रवृत्ताः। (वि.धर्मोत्तर-पु. १/१०४)

**यज्ञस्य प्रजानाञ्च सहैव सृष्टिः**

वेदेषु प्रतिपादिता यज्ञविद्या वस्तुतो जागतिकसृष्टिप्रपञ्चस्य मूलाधारशिला प्रकल्प्यते, भगवता व्यासेन भगवद्गीतायां तदेव स्मार्यते, यत् सृष्ट्यादौ विधात्रा प्रजापतिना प्रजानां सर्जनावसरे ताभिः सह यज्ञविधानमपि संसृज्य ताः प्रति प्रोक्तं, यद् अनेन यागकर्मणा यूयं देवान् प्रीणयत, प्रीणिताश्च देवा युष्मान् इष्टप्रदानेनोपकुर्वन्तु। ततश्च प्रसन्नैर्देवगणैर्दत्तान् भोगान् प्रथमतस्तेभ्यः प्रदाय पश्चात् स्वयमेव भुञ्जीत, अन्यथा तैर्दत्तमन्नादिकं तेभ्योऽप्रदाय यदि कश्चिद् भुङ्क्ते, तर्हि स ईश्वरानुज्ञारहितत्वात् चौर एव भवितुमर्हति। यतो हि तत् सृष्ट्वा तदेवानुप्राविशदिति तैत्तिरीयश्रुत्या प्राणिनां तदीयजीवना-धायकान्नानाञ्च परमेश्वरनिर्मितत्वात् प्रथमतो भोग्यपदार्थानां परमेश्वरार्पणं शिष्टाचारसम्मतम्। अपि च सर्वविधप्राणिनां तदीयजीवनाधारस्यान्नस्य सम्भवे परम्परया यज्ञ एव कारणं दरीदृश्यते। यथा हि अन्नेनैव प्राणिनो जीवन्ति, तत्र अन्नसम्भवे पर्जन्यः कारणं, पर्जन्योद्भवे यज्ञः कारणम्, यज्ञसम्पादने वेदोक्तं कर्म कारणम्, वेदोक्तकर्मसम्पादने साक्षाद् वेदः कारणम्, वेदानां प्रादुर्भावे परमं ब्रह्म परमेश्वरः कारणम्, एवं रीत्या परम्परया नित्यं सर्वगतं परं ब्रह्म यज्ञे प्रतिष्ठितं भवति। यथोक्तं गीतायाम्—

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्।।
देवान् भावयतानेन ते देवा भावयन्तु वः।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ।।
इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः।।
अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसम्भवः।
यज्ञाद् भवति पर्जन्यो यज्ञः कर्मसमुद्भवः।।
कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्।
तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्।।
(श्रीमद्भ.गी. ३/१०-१५)

**देवमनुष्ययोः परस्पराश्रयत्वम्**

पौराणिकमान्यतानुसारं सृष्टिप्रपञ्चे परमेश्वरेण प्रत्येकं चेतनपदार्थस्य जडपदार्थेन सहोपकार्योपकारकभावसम्बन्धः प्रतिष्ठापितः। तत्र सृष्टिकर्त्रा विधात्रा दिव्यशक्तिसम्पन्नान् देवान् संसृज्य तेभ्यो द्युलोकस्य दिव्यमनन्तञ्च सौख्य-साम्राज्यं प्रदत्तं, ततश्च मानवाँश्चोत्पाद्य तेभ्यो ब्रीहियवादिहविर्द्रव्योत्पादयित्र्याः पृथिव्याः साम्राज्यं प्रदत्तम्, पुनश्च देवमनुष्ययोः पारस्परिकं सापेक्ष्यं भवेदिति हेतोः द्युलोकः पृथिवीलोकाधीनः पृथिवीलोकश्च द्युलोकाधीनः कृतः। द्युलोके वसन्तो देवा दिव्यानन्तसौख्यसम्पन्ना अपि आत्मजीवनाय मनुष्यलोकैर्विधिना दीयमानं हविरन्नादिकञ्च सततं कामयन्ते, तथा च पृथिवीलोकस्था मानवा अपि स्वात्मजीवनाय वानस्पत्यौषधभूतान्नरससम्पत्तये देवेभ्योऽन्नरसनिष्पादनक्षमां सुधामयीं जलवृष्टिं नितरामभिलषन्ति। अयमेव सङ्केतः शतपथब्राह्मणेऽपि प्राप्यते, यथा हि—

'इतः प्रदानाद्धि देवा उपजीवन्ति, यदन्नं होमान् जुहोति देवानेव तत्प्रीणाति'' (श.ब्रा. १३/२/१/१)।

अपि च मनुस्मृतावपि तथैवाशयो निर्दिष्टः, तद्यथा—

अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः।। (मनु. ३/७६)

एवं प्रकारेण देवता मनुष्यश्चोभौ परस्पराश्रितौ सन्तौ मिथो मनोऽभिलाषं पूरयतः। देवमनुष्ययोरेतादृशो मैत्रीभावो लोकयोरुभयोः संवर्धनभावश्च 'यज्ञ'पदाभिधेयतामर्हति, पुनश्चायमेव वैदिक- कर्मानुष्ठानापरपर्यायो 'यज्ञः' धर्मपदेन व्यपदिश्यते।

**यज्ञेषु देवताबाहुल्यम्**

वेदप्रतिपादितेषु प्रकारबहुलेषु यज्ञेषु अग्नीन्द्रमित्रवरुणादयो विभिन्ना देवा इज्यन्ते अर्च्यन्ते च। तत्र तत्तद्देवताप्रीतिद्वारा स्वकीयाभिलषितकामनासंसिद्ध्यर्थम् ऋत्विजस्तत्तद्देवताभिधायकैर्मन्त्रैर्देवान् स्तुवन्ति। निरुक्तशास्त्रे यास्काचार्येण मन्त्रेषु दैवतमनुसन्धातुमुपदिश्यते, यत् 'यत्काम ऋषिर्यस्यां देवतायामार्थपत्य-मिच्छन् स्तुतिं प्रयुङ्क्ते, तद्दैवतः स मन्त्रो भवति। (नि. ७/१)

वैदिकयज्ञेषु ऋङ्मन्त्रैः साममन्त्रैश्च बहूनां देवानां स्तवनं क्रियते, तत्र ऋग्वेदमन्त्रैः कृतं स्तवनं याज्ञिकपरिभाषायां 'शस्त्र'मुच्यते, तथा सामवेदमन्त्रैः कृतं स्तवनं 'स्तोत्र'मुच्यते, तयोर्लक्षणमपि प्राप्यते—यत् 'अप्रगीतमन्त्रसाध्य-गुणिनिष्ठगुणाभिधानं शस्त्रम्', तथा 'प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रमिति'। 'ऋच्यध्यूढं साम गीयते' इति परिभाषयापि ऋचामेव गानवैलक्षण्येन गेयरूपता जायते। इयमेव सामवेदीया स्तुतिर्विशेषावृत्तिकरणात् 'विष्टुति'पदेनापि व्यपदिश्यते, पुनरियमेव विशेषा स्तुतिर्विष्टुतिर्विविधरूपतया 'स्तोम'पदेनापि व्यवह्रियते। तत्र गेयमन्त्राणां संख्याविशेषावृत्तिकरणात् त्रिवृत्स्तोमः, पञ्चदशस्तोमः, एकविंशस्तोम इत्यादिस्तोमनामानि भवन्ति।

एवं रीत्या वैदिकयज्ञेषु शस्त्रस्तोत्राभ्यां बहवो देवाः संस्तूयन्ते, तत्र वेदेषु समाम्नाताः सन्ति प्रमुखा देवाः—अग्निः, इन्द्रः, वरुणः, रुद्रः, विष्णुः, सविता, वायुः, सोमः, मित्रः, पूषा, उषा, द्यावापृथिवी, पर्जन्यः, मरुद्गणः, अश्विनौ, यमप्रभृतयः। इतः परं वेदेषु न केवलं चेतना एव देवाः स्तूयन्ते, अपि तु काष्ठपाषाणाद्यचेतनपदार्थेष्वपि चेतनदेवतावत् स्तुतयः प्राप्यन्ते, तत्र 'मृदब्रवीत्', 'आपोऽब्रुवन्', 'श्रृणोत ग्रावाणः', 'ओषधे त्रायस्वैनं', 'स्वधिते मैनं हिंसीः', 'धिषणासि पार्वतेयी प्रति त्वा पर्वती वेत्तु' इत्यादिवैदिकवाक्येष्वभिमानिव्यपदेशस्तु विशेषानुगतिभ्यामिति वैयासिकसूत्रा-नुरोधेन तत्र तत्र काष्ठपाषाणादिष्वपि काचित् तदभिमानी चेतना देवता एव संस्तूयते।

एवं प्रकारेण सर्वत्र स्थावरजङ्गमपदार्थेषु देवतास्तित्वं स्वीकृत्य बहुविधा देवतास्तत्र तत्र संस्तूयन्ते।

**देवतास्वरूपविमर्शः**

तत्र वैदिकवाङ्मये पृथिव्यप्तेजोवाय्वाकाशादयः, सूर्यचन्द्रादयो ग्रहाश्च आजानदेवताः कथ्यन्ते, एताः सृष्टिसमकालमेव विधात्रा सृष्टिसञ्चालनार्थमाविर्भाविताः, पुनश्च वेदोक्तकर्मानुष्ठानजन्यपुण्यप्रभावेण देवत्वमधिगताः काश्चन कर्मदेवता भवन्ति। यथा दिव्यपितरो मरुद्गणाश्चेत्यादयः। पुनश्चैता एव कर्मदेवता नैजपुण्यप्रभावप्राचुर्येण आजानदेवतोपासनाप्रसादेन च दिव्योन्नतिमधिगता आजानजदेवता भवन्ति, यथा—इन्द्रकुबेरादयः। एवं प्रकारेण यज्ञेषु बहुविधा देवता यद्यपि दृश्यन्ते, तथापि ताः सर्वा एकस्यैव परमात्मनो विभूतयो भवन्तीति सनिश्चयं वक्तुं शक्यते। तथा हि—निरुक्तशास्त्रस्य दैवतकाण्डे यास्काचार्येण निर्दिष्टं, यद् एक एव देवः परमेश्वरो दिव्यैश्वर्यसम्पन्नः स्वसामर्थ्याद् एककालावच्छेदेन नैकत्र नैकरूपेणात्मानमुपस्थापयितुं प्रभवति। तद्यथा—

> 'महाभाग्याद्देवताया एक आत्मा बहुधा स्तूयते,
> एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति, अपि च
> सत्त्वानां प्रकृतिभूमिभिर्ऋषयः स्तुवन्तीत्याहुः—
> प्रकृतिसार्वनाम्न्याच्च इतरेतरजन्मानो भवन्ति, इतरे-
> तरप्रकृतयः। तासां महाभाग्यादेकैकस्या अपि
> बहूनि नामधेयानि भवन्ति। (नि. ७/२)

अपि च ब्रह्मसूत्रभाष्ये भगवता आद्यशङ्कराचार्येणापि देवानां बहुत्वं तेषामलौकिकशक्तिमत्त्वञ्च प्रकटीकृतम्। तद्यथा—

'एकैका देवता बहुभी रूपैरात्मानं प्रविभज्य बहुषु यागेषु युगपदङ्गतां गच्छन्तीति परैश्च न दृश्यन्ते, अन्तर्धानक्रियायोगादिति। (ब्र.सू.भा. १/३/२७)

**एकेश्वरवादः**

ऋग्वेदीयदशममण्डले एक एव पुरुषाख्यो देवो महदैश्वर्यानन्तशक्तिसम्पन्नो विश्वरूपो विश्वव्यापको विश्वेश्वरश्च समाम्नातः। इदं हि पुरुषसूक्तं स्वल्पशब्दान्तरेण प्रायः चतुर्ष्वपि वेदेषु प्राप्यते, तत्र—'पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्', 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि', 'ततो विराडजायत विराजोऽधिपूरुषः' इत्यादिभिर्मन्त्रैरतीतानागतवर्तमानरूपं

यावज्जगदस्ति, तत्सर्वं तस्यैव पुरुषाख्यस्य देवस्य एकः पादश्चतुर्थोऽश इत्यर्थः। अस्य देवस्य त्रिपाद् अंशत्रयं द्योतनात्मके स्वप्रकाशे अमृतरूपेण तिष्ठति। अयं हि देवो सहस्रशीर्षा सहस्राक्षरूपतया विश्वरूपो विश्वव्यापकश्च वर्तते। एतस्मादेव पुरुषात् 'हिरण्यगर्भाख्यो' विराट् पुरुष उत्पद्यते, स एव सर्वतः प्रथममुत्पन्नः सन् सर्वस्य जायमानस्य जगत उत्पादयिता पालकः प्रजापतिश्च सञ्जातः। स एक एव निरुच्यमानतया बहुधा स्तूयते, अनिर्वचनीयतया विश्वस्यास्य मूलकारण-तया चैक एव स्तूयते। तद्यथा—

'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्'।
(ऋ. १०/१२१/१)

'ततो देवानां समवर्ततासुरेकः'। (ऋ. १०/१२१/७)
'यो देवेष्वधिदेव एक आसीत्'। (ऋ. १०/१२१/८)
'यो देवानां नामधा एक एव'। (ऋ. १०/८२/३)

अपि च ऋग्वेदे ह्येकत्र अग्निसूर्यादिदेवानां कियती संख्या अस्तीति प्रश्नमुद्भाव्य समाधानमन्त्रेण देवानामेकैव संख्यामूलकारणरूपा वरीवर्ति इति सिद्धान्तरूपेण प्रतिष्ठाप्य बहुदेवतावादस्य एकेश्वरवाद एवान्तर्भावो निगदितः। तद्यथा—

**प्रश्नः**—कत्यग्नयः क़ति सूर्यासः कत्युषासः कत्युस्विदापः। नोपस्पिजं यः पितरो वदामि पृच्छामि वः कवयो विद्मने किम्॥ (ऋ. १०/८८/१८)

**उत्तरम्**—एक एवाग्निर्बहुधा समिद्धः एकः सूर्यो विश्वमनुप्रसूतः। एकैवोषाः सर्वमिदं विभात्येकं वा इदं विबभूव सर्वम्॥ (ऋ. ८/५८/२)

अनेन सुस्पष्टमिदं जायते, यद् एकैव परमात्मा नित्यः सर्वगतः— 'अणोरणीयान् महतो महीयान्' इति श्रुत्या सूक्ष्मातिसूक्ष्मत्वाद् अणुरूपः, बृहत्तमत्वाद् ब्रह्मरूपश्चाभिज्ञायते। तस्यैव एकस्यैव परमात्मनः सर्वे देवा विभूतयो भवन्ति, तमेकमेव परमात्मानं क्रान्तप्रज्ञा मनीषिणः स्तुतिवचोभिर्बहुधा कल्पयन्ति। परमार्थस्तु सर्वव्यापक एक एव परमात्मा वेदेषु बहुत्र 'तत्' पदेन व्यवह्रियते। तत्पदं सर्वनामभूतत्वात् पूर्वपरामर्शकं बुद्धिस्थपरामर्शकं वा भवति, अतो वैदिकदर्शनपरम्परायां तदेकं परं तत्त्वम् अग्नीन्द्रवायुसूर्यादिविविधरूपेण स्तूयते, वेदान्तदर्शने तदेवैकं तत्त्वं परं ब्रह्मपदेन व्यवह्रियते। एवं रीत्या वेदेषु एकेश्वरप्रतिपादिकाः श्रुतयः सङ्गच्छन्ते, तासां दिग्दर्शनमात्रमत्रोदाह्रियते। तद्यथा—

एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे।
(ऋ १०/११४/४)

तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः।
तदेव शुक्रं तद् ब्रह्म ता आपः स प्रजापतिः।।
(शु.यजु. ३२/१)

सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति।
(ऋ. १०/११४/५)

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।
एकं सद् विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः।।
(ऋ. १०/१६४/६)

नासदीयसूक्ते तदेवैकं तत्त्वं तत्पदेनाकूत्यते, स्वमहिम्ना तदेव एकमात्मानं बहुधा विश्वरूपतामादधाति। तद्यथा—

'आनीदवातं स्वधया तदेकम्'। (ऋ. १०/१२९/२)

'तपसस्तन्महिना जायतैकम्'। (ऋ. १०/१२९/३)

तदेकस्मिन्नेव परमात्मनि समग्रमिदं चराचरं विश्वं नीडमेकमिव प्रतिभाति इत्याशय एव 'यत्र विश्वं भवत्येकनीडम्' इति श्रुत्या निगद्यते। अतो मुण्डकोपनिषदि तदेव तात्पर्यं शरीरनिन्दया आत्मप्रशंसया चोपदिश्यते। तद्यथा—

स वेदैतत् परमं ब्रह्म धाम यत्र विश्वं निहितं भाति शुभम्।
उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः।। इति*।
(मु. ३/२/१)



*. शोधपत्रमिदं जनवरी, २००५ तमे वर्षे हरिद्वारे अन्ताराष्ट्रियवैदिकसम्मेलने पठितम्।

# मत्स्यमहापुराणे विविधव्रतवर्णनानि

**प्रो. यदुनाथप्रसाददुबे**
अध्यक्षः, बौद्धदर्शनविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणस्याम्



धन्यमिदमस्माकं भारतवर्षं यत्र प्रवहतितरामविरलविविधज्ञान-विज्ञानधारया सुरभारती अहर्निशं वागीश्वरी भगवती सर्वशुक्ला सरस्वती, तत्रैव विलसन्तितरां चत्वारो वेदाः, षड्वेदाङ्गानि, आरण्यकाः, ब्राह्मणग्रन्थाः, सर्वाण्यष्टादशपुराणानि, असंख्यकोपपुराणानि च। वैशिष्ट्यं माहात्म्यञ्च पुराणानाम्—

> 'वेदार्थादधिकं मन्ये पुराणार्थं वरानने।
> वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः॥'
>
> (नारदीयपुराणे, २.२४.१७)

सर्वजनहिताय सर्वजनबोधाय स्वकीयसरससरलसंस्कृतभाषया, मनोहररमणीयशिष्टविशिष्टशैल्या, प्रसादमाधुर्यगुणोपेतया पद्धत्या पौराणिक-तथ्यानाञ्च—

(१) सृष्टेरुत्पत्तेः स्थितेः प्रलयस्य च वर्णनम्।

(२) देवानाम् ऋषीणां राजर्षीणाञ्च वंशावलिस्तज्जीवनवृत्तञ्च।

(३) मनोर्मन्वन्तरस्य च वर्णनम्।

(४) सूर्य-चन्द्र-नन्द-मौर्य-शुङ्ग-आन्ध्र-गुप्तादिवंशीयभूपतीनामितिवृत्त-वर्णनम्।

(५) तीर्थानां प्रथितभौगोलिकस्थलानां तीर्थयात्रादीनाञ्च सविस्तरं विवरणञ्च।

(६) जप-तप-व्रत-अनुष्ठान-उपवास-प्रार्थनादीनां सविधानं वर्णनम्।

(७) अवतारवादस्य मूर्तिपूजाया विविधदेविदेवोपासनायाश्च संस्थापनम्।

(८) सगुणोपासनाया भक्तिमार्गस्य प्राधान्येन सुष्ठु प्रतिपादनम्।

(९) दार्शनिक - धार्मिक - राजनीतिक - आचारशास्त्रादिमहत्त्वभाजां विषयाणां विपुलं विवेचनम्।

(१०) व्याकरण-काव्यशास्त्र-ज्योतिषशास्त्र-शरीरविज्ञान-आयुर्वेदादि-शास्त्रीयाणां वैज्ञानिकानां विषयाणाञ्च तथ्यसङ्कलनम्।

समुपलब्धविषयप्रसङ्गानुसारेण मत्स्यपुराणान्तर्गतानि प्रथितानि यानि यानि महत्त्वपूर्णानि विविधानि व्रतानि विलक्षणानि तानि सर्वाण्यधिकृत्य विविच्यते मयात्र किञ्चित्सङ्क्षेपतः—

वस्तुतस्तु, नियमो व्रतं भारतीयसंस्कृतेः सनातनधर्मस्य प्राणभूततत्त्वं, निखिलभारतीयधर्मशास्त्रविहितविधिविधानानुसारेण कृतमनुष्ठानं, मानवीय-मनोवैज्ञानिकसांस्कृतिकसंवेदनशीलात्मकप्रबलभावनासङ्कल्पविकल्पप्रकल्पनं, सकलदुर्वृत्तवृत्तशमनं, सांसारिकसुखसौभाग्यदीर्घायुरारोग्यकीर्तिप्रीतिभुक्ति-मुक्तिभक्तिप्रदं, सर्वपरोक्षापरोक्षपापप्रशमनम्, अनन्तपुण्यफलप्रदायकं, विपक्षपक्ष-क्षयकारकं, पुरुषार्थचतुष्टयफलदायकं, भव्यातिभव्यं, नव्यातिनव्यं सत्यं शिवं सुन्दरञ्च भवति। विकलानि सकलानीन्द्रियाणि मानवानां नियन्त्रितानि। अत एव सदैवाचरणीयानि, अनुकरणीयानि कर्त्तव्यानि तानि सर्वाणि। सत्यमेवोक्तं वर्तते नाम—

'एतन्महापातकनाशनं स्यात् परं हितं बालविवर्धनञ्च।
शृणोति यश्चैनमनन्यचेतास्तस्यापि सिद्धिं मुनयो वदन्ति॥'

(मत्स्यपुराणे, ६२.४२)

'दीर्घायुरारोग्यकुलाभिवृद्धियुक्तः पुमान् भूपकुलान्वितः स्यात्।
मुहुर्मुहुर्जन्मनि येन सम्यक्व्रतं समाचक्ष्व तदिन्दुमौले॥'

(मत्स्यपुराणे, ५७.७)

शास्त्रोक्तविधिविधानव्रतानुष्ठानेन शान्तिर्मुक्तिश्च भवति जयः पुंसां विशेषतः।

(१) **मदनद्वादशीव्रतम्**[१]—चैत्रमासे शुक्लपक्षे द्वादश्यां तिथौ नियतव्रतः श्वेतचन्दनचर्चितम्, इक्षुदण्डसम्पृक्तं, विविधर्तुफलसमन्वितं, श्वेततण्डुल-परिपूर्णं, श्वेतवस्त्रयुगलयुक्तं, छिद्ररहितं कुम्भं संस्थापयेत्। तस्योपरि गुडोपेतं सहिरण्यं ताम्रपात्रं निवेशयेत्। तस्मादुपरि कदलीपत्रस्थं कामदेवं वामतश्च शर्करयोपेतां रतिं कुर्यात्। श्वेतपुष्पाक्षततिलैर्गन्धधूपादिसुगन्धितपदार्थैश्च केशवं सम्पूज्य 'नमः सर्वात्मने' इति कथयित्वा प्रातःकाले तं कुम्भं ब्राह्मणाय निवेदयेत्।

---

१. मत्स्यपुराणम्, अ. ७, पृ. २१-२३।

'प्रीयतामत्र भगवान् कामरूपी जनार्दनः।
हृदये सर्वभूतानां य आनन्दोऽभिधीयते'[१]।।

इतीमं मन्त्रमुदीरयेत्। अनेन विधिना सर्वं मासि मासि व्रतं समाचरेत्। स नरः सर्वपापविनिर्मुक्तो हरिसान्निध्यं प्राप्नोति।

(२) **नक्षत्रपुरुषव्रतम्**[२]—नारायणात्मकं विष्णुनामानुकीर्तनसम्पृक्तं व्रतमिदं समाचरेत्। शारीरिकमानसिकाध्यात्मिकसन्तापपरिशान्तिहेतवेऽनुष्ठानं कुर्यात्। चैत्रमासे सश्रद्धं विष्णुप्रतिमां पाद्याऽर्घ्यादिभिः पूजयेत्। अहर्निशं हरिनामकीर्तनं, हरिगुणगानं, नारायणपुण्यकथाश्रवणञ्च कुर्यात्। एवं नक्षत्रपुरुषं नारायणमुपास्य विधिवद् व्रती सर्वान् जागतिककामानवाप्नोति चान्ते विष्णुलोके महीयते।

(३) **आदित्यशयनव्रतम्**[३]—यदा सप्तम्यां तिथौ हस्तेनादित्यस्य दिनं भवेत्सूर्यस्य सङ्क्रान्तिः सा भवति तिथिर्भवति सार्वकामिकी। शिवसूर्ययोरभेदत्वादुमामहेश्वरयोस्समार्चामर्चयेत्। प्रार्थयेच्च—

यथैवादित्यशयनमशून्यं तव सर्वदा।
कान्त्या धृत्या श्रिया रत्या तथा मे सन्तु सिद्धयः'[४]।।

ततश्च शिवलिङ्गप्रतिमां प्रदक्षिणीकृत्य प्रणिपत्य विसर्जयेत्। व्रतेनानेन रोगं शोकं दुःखञ्च न प्राप्नोति।

(४) **श्रीकृष्णाष्टमीव्रतम्**[५]—सर्वपापप्रणाशकमिदं व्रतमस्ति। मार्गशिरसि मासे शङ्करं, पौषे शम्भुं, माघे महेश्वरं, फाल्गुने महादेवं, चैत्रे स्थाणुं, वैशाखे शिवं, ज्येष्ठे पशुपतिम्, आषाढे उग्रं, श्रावणमासे शर्वं, नभस्ये त्र्यम्बकम्, आश्विनमासे हरं, कार्तिकमासे ईशानमभिपूजयेत् सर्वासु कृष्णाष्टमीषु नरः।

(५) **रोहिणीचन्द्रशयनव्रतम्**[६]—अक्षय्यकारकं गोपनीयमिदं व्रतं यदा सोमवासरे पूर्णिमा भवेदथवा रोहिणीनक्षत्रं पौर्णमास्यां प्रातःकाले पञ्चगव्येन सर्षपैः व्रती स्नानं कुर्यात्। सोमनामानि जपन् फलपुष्पैर्मधुसूदनं पूजयेत्।

---

१. मत्स्यपुराणम्, अ. ७, श्लो. २०, पृ. २२।

२. तदेव, अ. ५४, पृ. २०९-२१२।

३. तदेव, अ. ५५, पृ. २१३-२१६।

४. तदेव, अ. ५५, श्लो. २६, पृ. २१५।

५. तदेव, अ. ५६, पृ. २१६-२१७—श्रीकृष्णजन्माष्टमीतो भिन्नमिदं शिवोपसनायाः प्रधानाङ्गभूतं व्रतम्। वर्णनमस्य समुपलब्धं वर्तते नाम भविष्य-नारद-सौरादिपुराणेषु व्रतकल्पद्रुमग्रन्थे च।

६. मत्स्यपुराणम्, अ. ५७, पृ. २१८-२२०।

यस्मिन् मासे व्रतारम्भः स्यात् समकालिकपुण्यफलैर्हरिमर्चयेत्। संवत्सरं यावद् व्रतमुपास्य व्रतान्ते दर्पणोपस्कसमन्वितं शयनं दद्यात्। न केवलं पुरुष एव; अपि तु नार्यपि व्रतमिदं कर्त्तुं शक्या। वर्णितमपि—

नारी वा रोहिणीचन्द्रशयनं या समाचरेत्।
सापि तत्फलमाप्नोति पुनरावृत्तिदुर्लभम्[१]॥

(६) **सौभाग्यशयनव्रतम्**[२]—व्रतमिदं सर्वकामफलप्रदमस्तीति वदन्ति पुराणविदो जनाः। प्राचीनकाले भूर्भुवःस्वर्महादिसमस्तलोकेषु विदग्धेषु सत्सु सर्वमानवानां सौभाग्यं वैकुण्ठं समासाद्य विष्णोर्वक्षःस्थलस्थितं जातम्। पुनश्च सृष्टिकाले तत्सौभाग्यं यावद्वसुधातले न प्राप्नोति तावत्पूर्वमेव ब्रह्मपुत्रेण रूपलावणस्वरूपं तद्रसं पीतम्। अवशिष्टं तदष्टधा—इक्षुः, रसराजः, निष्पावः, राजधान्यकम्, गोक्षीरं, कुसुम्भं, कुङ्कुमं, लवणञ्च पृथिव्यां विभक्तं जातम्। तत्सौभाग्याष्टकमुच्यते। तदंशतः सती-नामिका त्रैलोक्यसुन्दरी कन्या समुत्पन्ना जाता। अतीवलालित्याल्लोके ललितेति प्रसिद्धिङ्गता[३]। तामुपयेमे पिनाकधृक् शिवः पश्चात्। तदाराधनाय चैत्रमासे शुक्लपक्षस्य तृतीयायां पूर्वाह्णे तिलमिश्रितजलैः स्नानं कुर्यात्। शिवाशिवयोः प्रतिमां पञ्चगव्येन गन्धोदकेन च स्नापयित्वा धूपदीपनैवेद्यादिभिः समर्चयेत्, प्रार्थयेच्च भगवतीम्—

'ललिता विजया भद्रा भवानी कुमुदा सती।
वासुदेवी तथा गौरी मङ्गला कमला सती॥
उमा च दानकाले तु प्रीयतामिति कीर्तयेत्[४]॥'

यो द्वादशवर्षाणि सप्त चाष्टौ वा व्रतमिदं करोति, वसति सः कल्पायुतत्रयं हरालयम्।

(७) **अनन्ततृतीयाव्रतम्**[५]—नभस्ये, वैशाखे, पौषे, मार्गशिरसि वा शुक्लपक्षस्य तृतीयायां तिथौ गौरसर्षपमिश्रितजलैः सुस्नातो व्रती ललाटे गोरोचन-गोमूत्र-मुस्ता-शोशकृद्-दधि-चन्दनसम्मिश्रं तिलकं धारयित्वा शुक्लपुष्पैः, नानाविधैः फलैः, धान्यलाजाजिलवणैः, गुडक्षीरघृतान्वितैः, श्वेताक्षतैर्देवीं ललितां सदार्चयेत्, प्रार्थयेच्च ताम्—

---

१. मत्स्यपुराणम्, अ. ५७, श्लो. २७।
२. तदेव, अ. ६०, पृ. २२८-२३२।
३. तदेव, अ. ६०, श्लो. ९, पृ. २८—
'रसराजं च लवणं कुस्तुम्बुरुं तथाष्टकम्। दत्तं सौभाग्यमित्यस्मात् सौभाग्याष्टकमित्यः'॥
४. तदेव, अ. ६०, श्लो. ३६-३७, पृ. २३१, पृष्ठ-२३१।
५. तदेव, अ. ७२, पृ. २३७-२४०।

'कुमुदा विमलानन्ता भवानी च सुधा शिवा।
ललिता कमला गौरी सती रम्भाऽथ पार्वती।।
नभस्यादिषु मासेषु प्रीयतामित्युदीरयेत्[1]।।'

या यो वा अनन्तफलदां, सर्वपापहराम्, अखण्डसौभाग्यारोग्यवर्धिनीं तृतीयामिमां समाचरेत् कल्पकोटिशतं साग्रं शिवलोके महीयते।

(८) **रसकल्याणिनीव्रतम्**[2]—माघमासे शुक्लपक्षस्य तृतीयायां व्रतमिदं विहितमस्ति। प्रातःकाले व्रती गोदुग्धतिलमिश्रितजलैः स्नातः 'ललितायै नमः, श्रियै नमः, मदालसायै नमः, अमलायै नमः, मदनवासिन्यै नमः, जगत्प्रियायै नमः' इत्यादिभिर्विधिवत् सम्पूज्यानेन विधिना मासि मासि देवीं सदार्चयेत्। भणितमपि—'अनेन विधिना यस्तु रसकल्याणिनीव्रतम्।
कुर्यात्स सर्वपापेभ्यस्तत्क्षणादेव मुच्यते'[3]।।

(९) **आर्द्रानन्दकरीतृतीयाव्रतम्**[4]—यदा शुक्लपक्षस्य तृतीयायां तिथौ आषाढर्क्षं, ब्रह्मर्क्षं वा मृगर्क्षं वा हस्तो मूलमथवा क्वचिद् भवेत् तदैव व्रतमिदं समाचरेत्। व्रतेऽस्मिन् दर्भगन्धोदकैः स्नानं कृत्वा सुगन्धिभिः श्वेतपुष्पैर्भक्त्या भवानीमर्चयेत् महादेवेन सहितां समुपविष्टाम्। अनया प्रार्थनया—

'विश्वकायौ विश्वमुखौ विश्वपादकरौ शिवौ।
प्रसन्नवदनौ वन्दे पार्वतीपरमेश्वरौ[5]।।
गौरी मे प्रीयतां नित्यमघनाशाय मङ्गला।
सौभाग्यायास्तु ललिता भवानी सर्वसिद्धये[6]।।'

व्रतं समाचरेत्। आर्द्रानन्दकरीनाम्ना सनातनी तृतीयैषा। यामुपोष्य नरः शम्भुलोकं नारी च पुनरावृत्तिदुर्लभं रुद्राणीलोकमभ्येति[7]।

(१०) **अक्षयतृतीयाव्रतम्**[8]—वैशाखमासस्य शुक्लपक्षतृतीयायां तिथौ व्रतोपवासकरणेन समस्तसत्कर्मणामक्षयं फलं सम्प्राप्नोति व्रती। विशेषेण

---

१. मत्स्यपुराणम्, अ. ६२, श्लो. ३१-३२, पृ. २३९।
२. तदेव, अ. ६३, पृ. २४०-२४३।
३. तदेव, अ. ६३, श्लो. २६, पृ. २४२।
४. तदेव, अ. ६४, पृ. ३४३-२४५।
५. तदेव, अ. ६४, श्लो. ११, पृ. २४४।
६. तदेव, अ. ६४, श्लो. २०, पृ. २४४।
७. तदेव, अ. ६४ श्लो. २७, पृ. २४५।
८. तदेव, अ. ६५, पृ. २४५-२४६।

कृत्तिकोपेतायां तृतीयायां दत्तं हुतं जप्तं सर्वमक्षयं भवति। व्रतेनानेन जनो राजसूयफलं प्राप्य परमां गतिं विन्दति।

(११) **सारस्वतव्रतम्**[1]—प्रतिपक्षं पञ्चम्यां तिथौ व्रतमनुत्तमं ग्रहताराबलानुकूले रविवासरेऽथवा समाचरेत्। प्रात:काले भक्तिभावपूर्वकं श्वेतमाल्यानुलेपनैर्महागायत्रीं शुक्लपुष्पाक्षतै: सम्पूज्य—

'वेदा: शास्त्राणि सर्वाणि गीतनृत्यादिकं च यत्।
न विहीनं त्वया देवि तथा मे सन्तु सिद्धय:।।
लक्ष्मीर्मेधा धरा पुष्टिर्गौरी तुष्टि: प्रभा मति:।
एताभि: पाहि अष्टाभिस्तनुभिर्मां सरस्वति'[2]।।

सकमण्डलुपुस्तकां वीणाक्षमालधारिणीं प्रार्थयेत्तां व्रती। मौनव्रतेन सायं प्रातस्तु भुञ्जीत यावन्मासास्त्रयोदश नान्तरा भोजनं कुर्यात्। विधिनानेन प्रसीदति भारती सर्वदा। अन्ते च सरस्वत्या: प्रसादेन ब्रह्मलोके महीयते स:।

(१२) **सप्तमीस्नपनव्रतम्**[3]—सदा सर्वकल्याणकारकं जीवपीडाविनाशनं परमशान्तिदायकं व्रतमिदं शुक्लपक्षस्य सप्तम्यां तिथौ पुत्रसहिता स्त्री रविशङ्करौ प्रणम्य सर्वदुष्टोपशमनं बालानां परमं हितकारकं समाचरेत्। लोके जीवत्पुत्रिकारूपेणापि प्रसिद्धम्[4]।

(१३) **भीमद्वादशीव्रतम्**[5]—माघमासस्य द्वादश्यां तिथौ शुक्लपक्षस्य व्रतमिदं समाचरेत्। पुराणान्येषु भीमसेन्येकादशी निर्जलेति प्रसिद्धम्। एकादश्यां व्रती निराहार: केशवं समभ्यर्च्य द्वादश्यां ब्राह्मणपुङ्गवै: क्षीरभोजनं कुर्यात्। व्रतस्यास्य विधिविधानमाहात्म्यविषयेषु सविस्तरं वर्णनमुपलब्धम्[6]।

---

१. मत्स्यपुराणम्, अ. ६५, पृ. २४६-२४७।
२. तदेव, अ. ६५ श्लो. ८,९, पृ. २४७।
३. तदेव, अ. ६७, पृ. २५०-२५३।
४. तदेव, अ. ६७, श्लो. ४२।
एतन्महापातकनाशनं स्यात् परं हितं बालविवर्धनं च।
शृणोति यश्चैनमनन्यचेतास्तस्यापि सिद्धिं मुनयो वदन्ति।।
५. तदेव, अ. ६७, श्लो. ४२।
६. तदेव अ. ६७, श्लो. ६५।
कल्याणिनी नाम पुरा बभूव या द्वादशी माघदिनेषु पूज्या।
सा पाण्डुपुत्रेण कृता भविष्यत्यनन्तपुण्यानघभीममपूर्वा।।

(१४) **पण्यस्त्रीव्रतम्**[१]—मधुमाधवमासयोः शुक्लपक्षस्य द्वादश्यां तिथौ व्रतमिदं सम्पादनीयम्। व्रतिनी सुगन्धितैः पुष्पैः माल्यैः धूपैः नैवेद्यैश्च कामदेवस्वरूपं भगवन्तं विष्णुं पूजयेत्। सर्वाभिः व्रतिनीभिः—

'यथा न कमला देहात् प्रयाति तव केशव।
तथा ममापि देवेश शरीरं स्वीकुरु प्रभो'[२]।।

इति प्रार्थना कर्त्तव्या। भणितमपि—

'सर्वपापप्रशनमनन्तफलदायकम्।
कल्याणीनां च कथितं तत्कुरुध्वं वराननाः'[३]।।

मत्स्यपुराणे। व्रतमिदमित्थं वर्णितमस्ति पद्मभविष्यपुराणयोः।

(१५) **अशून्यशयन(द्वितीय)व्रतम्**[४]—श्रावणमासस्य कृष्णपक्ष-द्वितीयायां तिथौ धर्मार्थकामदं, दाम्पत्याभेदनं व्रतमिदं सदा करणीयम्। अनेन पुत्रपशुरत्नानि कदापि क्षयं न यान्ति, अपि तु सप्तकल्पसहस्राणि सप्तकल्पशतानि च विष्णुलोके महीयते।

(१६) **अङ्गारकव्रतम्**[५]—पृथिवीपुत्रम् 'अङ्गारक' इति नाम्ना सुप्रसिद्धं मङ्गलवासरे चतुर्थ्यां तिथौ सम्पूज्य व्रतमिदं कुर्यात्! व्रतेनानेन अनन्तसौन्दर्यम्, आरोग्यम्, ऐश्वर्यञ्चाप्नोति व्रती पुरुषः। प्रार्थयेच्च—

'भूमिपुत्र महातेजः स्वेदोद्भव पिनाकिनः।
रूपार्थी त्वां प्रपन्नोऽहं गृहाणार्घ्यं नमोऽस्तु ते[६]।।'

फलतो रूपसौभाग्यसम्पन्नो विष्णौ शिवे वा भक्तो जन्मनि जन्मनि सप्तद्वीपाधिपो भवति। सप्तकल्पसहस्राणि रुद्रलोके महीयते।

(१७) **कल्याणसप्तमीव्रतम्**[७]—विशोकसप्तमीपापनाशिनी फलसप्तमी, पुण्यदायिनी शर्करासप्तमी, कमलसप्तमी, मन्दारसप्तमी, मङ्गलप्रदायिनी शुभसप्तमीति प्रभृतिभिर्नामभिः प्रसिद्धमिदं व्रतम्। यदा तु शुक्लपक्षस्य सप्तम्यां

---

१. मत्स्यपुराणम्—अ. ७०, पृ. २६०-२६५।
२. तदेव, अ. ६०, श्लो. ५३, पृ. २५४।
३. तदेव, अ. ६०, श्लो. ६२, पृ. २६४।
४. तदेव, अ. ७१, पृ. २६५-२६७।
५. तदेव, अ. ७२, पृ. २६७-२७२।
६. तदेव, अ. ७२, श्लो. ३६, पृ. २७०।
७. तदेव, अ. ७४, पृ. २७२-२७४।

रविवासरो भवेत् सा कल्याणिनी विजयेति सप्तमी कथ्यते। गोदुग्धमिश्रितजलैः स्नातो व्रती श्वेतवस्त्रफलनैवेद्यधूपपुष्पचन्दनैर्भगवन्तं विकर्तनं सम्पूज्य सम्यक् प्रार्थयेच्च 'प्रीयतामत्र भगवान् परमात्मा दिवाकरः'। अनेन प्रकारेण मासि मासि व्रतं समाचरेत्। फलतः सः सर्वपापविनिर्मुक्तः सूर्यलोके महीयते। प्रथितमपि—

'सर्वपापहरा नित्यं सर्वदैवतपूजिता।
सर्वदुष्टोपशमनी सदा कल्याणसप्तमी[१]।।'

(१८) **विशोकसप्तमीव्रतम्**[२]—माघमासे शुक्लपक्षस्य षण्ठ्यां तिथौ व्रतमिदं कुर्यात्। तैललवणरहितं भोजनं कृत्वा मौनं भूत्वा पुराणश्रवणं कर्त्तव्यम्। व्रतानुष्ठानेन रोगदौर्गत्यवर्जितो निष्कामो जगति पुष्कलं काममन्ते च परं ब्रह्म समधिगच्छति।

(१९) **फलसप्तमीव्रतम्**[३]—व्रतनिष्ठो मनुष्यो मार्गशीर्षे शुभे मासि शुक्लपक्षस्य सप्तम्यां तिथौ प्रातः सुस्नातः सूर्यमन्त्रं जपेदहर्निशम्[४]। सर्वपापविशुद्धात्मा सूर्यलोकमभ्येति।

(२०) **शर्करासप्तमीव्रतम्**[५]—व्रतनिष्ठो वैशाखमासे शुक्लपक्षस्य सप्तम्यां तिथौ प्रातःकाले श्वेततिलमिश्रितजलैः स्नातः श्वेतपुष्पमालाभिः श्वेतचन्दनानुलेपनैः सुगन्धंधूपधूमितैः सम्पूज्य भगवन्तं भास्करं शुक्लवस्त्रैः समलङ्कृत्य 'नमः सवित्रे' मन्त्रेणानेन व्रती प्रार्थयेच्च—

'विश्ववेदमयो यस्माद् वेदवादीति पठ्यसे।
त्वमेवामृतसर्वस्वमतः शान्तिं प्रयच्छ मे[६]।।

समस्तोपस्कारान्वितं, सर्वकल्मषनाशिनीं, दीर्घायुरारोग्यमैश्वर्यप्रदं व्रतमिदम्—

---

१. मत्स्यपुराणम्, अ. ७४, श्लो. १९, पृ. २७४।
२. तदेव, अ. ७५, पृ. २७४-२७५।
३. तदेव, अ. ७६, पृ. २७५-२७६।
४. तदेव, अ. ७६, श्लो. ७।
'भानुरर्को रविर्ब्रह्मा सूर्यो शक्रो हरिः शिवः।
श्रीमान् विभावसुस्त्वष्टा वरुणः प्रीयतामिति'।।
५. तदेव, अ. ७७, पृ. २७७-२७८।
६. तदेव, अ. ७७, श्लो. ५, पृ. २७७।

शर्करासप्तमी चेयं वाजिमेधफलप्रदा।
सर्वदुष्टप्रशमनी पुत्रपौत्रप्रवर्धिनी[१]॥

(२१) **मन्दारसप्तमीव्रतम्**[२]—माघमासे शुक्लपक्षस्य सप्तम्यां तिथौ प्रभातकाले समुत्थाय कृष्णतिलमिश्रितजलैः स्नानं विधाय हेममन्दारकुसुमैर्भगवन्तं भास्करं प्रणम्य प्रार्थयेच्च—

'नमो मन्दारनाथाय मन्दारभवनाय च।
त्वं रवे तारयस्वास्मानस्मात्संसारसागरात्[३]॥

व्रतेनानेन 'विपाप्मा स सुखी मर्त्यः कल्पं च दिवि मोदते'। एवमेव नरः संसारशर्वर्यां न कदापि स्खलेत्। समस्तौघपटलभीषणध्वान्तदीपिका, सर्वाभीष्टार्थफलप्रदा सप्तमीयमचलासप्तमी-रथसप्तमी-रथाङ्गसप्तमी-महासप्तमीत्यादिभिर्नामधेयैरपि निगद्यते।

(२२) **कमलसप्तमीव्रतम्**[४]—वसन्ततौ शुक्लपक्षस्य सप्तम्यां तिथौ नरो गौरसर्षपमिश्रितजलैः स्नानं कुर्याद् धूपदीपनैवेद्यपुष्पाक्षतैर्दिवाकरं समभ्यर्च्य 'पद्महस्ताय ते नमः', 'विश्वधारिणे ते नमः' मन्त्रोच्चारणेन संवत्सरपर्यन्तं व्रतमिदं सम्पादयेत्। अनेन लक्ष्मीमनन्तामभ्येति सूर्यलोके महीयते।

(२३) **शुभसप्तमीव्रतम्**[५]—आश्विनमासे शुक्लपक्षस्य सप्तम्यां तिथौ कृतस्नानजपो व्रती सर्वसिद्धये व्रतमिदं कुर्यात्। अनेन विपुला लक्ष्मीः, अचला कीर्तिश्च सम्प्राप्यते। सप्तवर्षपर्यन्तानुष्ठानेन नरः सप्तलोकाधिपतिर्भूत्वा मुरारेः परं पदं याति।

(२४) **विशोकद्वादशीव्रतम्**[६]—आश्विनमासस्य द्वादश्यां तिथौ नरः पञ्चगव्यमिश्रितजलैः सर्वौषधैः सुस्नातः श्वेतमाल्याम्बरधरः 'विशोकाय नमः', श्रीशाय नमः, अशोकनिधये नमः, वामनाय नमः प्रभृतिभिर्मन्त्रोच्चारणेन भगवन्तं गोविन्दं फलमाल्यानुलेपनैः सम्पूज्य तत्पश्चात् नदीबालुकया शूर्पे लक्ष्म्याः प्रतिकृतिं संस्थाप्य 'देव्यै नमः, शान्त्यै नमः, लक्ष्म्यै नमः, श्रियै नमः, पुष्ट्यै नमः, हृष्ट्यै नमः' मन्त्रैर्देवीं समर्चयेत्। प्रार्थयेच्च—

---

१. मत्यस्यपुराणम्, अ. ७७, श्लो. १५, पृष्ठ-२७८।
२. तदेव, अ. ७९, पृ. २७९-२८०।
३. तदेव, अ. ७९, श्लो. १२, पृ. २८०।
४. तदेव, अ. ७८, पृ. २७८-२७९।
५. तदेव, अ. ८०, पृ. २८१-२८२।
६. तदेव, अ. ८१, पृ. २८२-२८४।

'विशोका दुःखनाशाय विशोका वरदास्तु मे[1]।
विशोका चास्तु सम्पत्त्यै विशोका सर्वसिद्धये॥'

व्रतेऽस्मिन् कमलम्, सिन्धुवारम्, बाणम्, अम्लानकुङ्कुमम्, केतकी, करवीरम्, मल्लिका, गन्धपाटला, कदम्बकम् जातिश्चैतानि पुष्पाणि प्रशस्तानि भवन्ति।

(२४) **माहेश्वरव्रतम्**[2]—व्रतमिदं लोके शिवचतुर्दशीति नाम्ना सुख्यातमस्ति। मार्गशीर्षमासे कृष्णपक्षस्य चतुर्दश्यां व्रती मानवो निराहारः सुस्नातजपः पार्वतीसहितं शङ्करं 'शिवाय नमः, सद्योजाताय नमः, तत्पुरुषाय नमः, अनन्तवैराग्यसिंहाय नमः, पुष्ट्यै नमः, तुष्ट्यै नमः' इति मन्त्रोच्चारणेन, धूपदीपनैवेद्यचन्दनसुगन्धितकमलपुष्पमालाभिश्चाभ्यर्च्य प्रार्थयेत्—'प्रीयतां देवदेवोऽत्र सद्योजातः पिनाकधृक्।' एवमेव सर्वासु चतुर्दशीषु पूर्ववदर्चनं कुर्यात्। अन्ततः सः शम्भोः परं पदं प्राप्नोति[3]।

(२४) **सर्वफलत्यागव्रतम्**[4]—मार्गशीर्षमासे शुक्लपक्षस्य चतुर्दश्यां तिथौ तृतीयायामष्टम्यां वा सर्वमङ्गलमयं व्रतमिदं समाचरेद् व्रती। प्रार्थयेच्च सदाशिवम्—

यथा फलेषु सर्वेषु वसन्त्यमरकोटयः।
तथा सर्वफलत्यागव्रताद् भक्तिः शिवेऽस्तु मे॥
यथा फलान्यनन्तानि शिवभक्तेषु सर्वदा।
तथानन्तफलावाप्तिरस्तु जन्मनि जन्मनि॥
यथा भेदं न पश्यामि शिवविष्ण्वर्कपद्मजान्।
तथा ममास्तु विश्वात्मा शङ्करः शङ्करः सदा'[5]॥

सौरवैष्णवयोगिनां भागवतानां कृते व्रतमिदं भवति नाम शुभम्। सर्वपापकष्टं हरति, जन्मान्तरेऽपि सन्ततिवियोगजन्यं दुःखं दूरीकरोति।

---

१. मत्स्यपुराणम्, अं. ८१, श्लो. २५-२६—
'यथा न लक्ष्मीर्देवेश त्वां परित्यज्य गच्छति। तथा सुरूपतारोग्यमशोकश्चास्तु मे सदा॥
यथा देवेन रहिता न लक्ष्मीर्जायते क्वचित्। तथा विशोकता मेऽस्तु भक्तिरग्र्या च केशवे॥'

२. मत्स्यपुराणम्, अ. ९५, पृ. ३१७-३२०।

३. तदेव, अ. ९५, श्लो. ३५—
'दीर्घायुरारोग्यकुलान्नवृद्धिरत्राक्षयामुत्र चतुर्भुजत्वम्।
गणाधिपत्यं दिवि कल्पकोटिशतान्युषित्वा पदमेति शम्भोः'॥

४. तदेव, अ. ९६, पृ. ३२०-३२२।

५. तदेव, अ. श्लो. १४-१६-१७।

नारीभिश्च यथाशक्त्यानन्तफलप्रदं व्रतमिदं कर्त्तव्यम्। मरणोपरान्ते मुरारेरानन्दकृत् पदं प्राप्नोति।

(२७) **आदित्यवारव्रतम्**[१]—रविवासरे व्रती भवेन्नक्ताशन:। यदा सूर्यवारो हस्तनक्षत्रेण संयुक्तः स्यात् तदा शनिवारे वारमेकं भोजनं कुर्यात्। तिलसहित-रक्तचन्दनेन, रक्तपुष्पेण च सम्पूज्य सूर्यं प्रार्थयेच्च तम्—

'कालात्मा सर्वभूतात्मा वेदात्मा विश्वतोमुखः।
यस्मादग्नीन्द्ररूपस्त्वमतः पाहि दिवाकर[२]।।'

विनष्टसर्वकल्मष:, शोकदु:खभयरोगवर्जित: स: सूर्यधाम लभतेऽसंशय:।

(२८) **सङ्क्रान्तिव्रतम्**[३]—लोके परलोके चाक्षयं सर्वकामफलप्रदं व्रतमिदं सूर्यस्योत्तरायणेऽथवा दक्षिणायने दिवसे विषुवयोगे वा समाचरेन्नरः तिलमिश्रितजलै: स्नात: प्रात:काले। चन्दनपुष्पाक्षतफलखाद्यपदार्थैश्च सूर्यदेवं प्रणम्य प्रार्थयेच्च—

'विश्वाय विश्वरूपाय विश्वधाम्ने स्वयम्भुवे।
नमोऽनन्त नमो धात्रे ऋक्सामयजुषाम्पते[४]।।'

(२९) **विभूतिद्वादशीव्रतम्**[५]—कार्तिके, चैत्रमासे, वैशाखे, मार्गशीर्षे, फाल्गुने, आषाढमासे वा शुक्लपक्षस्य द्वादश्यां तिथौ व्रतीजन: 'ॐ नमो नारायणायेति' मन्त्रजापं कुर्वन् प्रात:काले समुत्थाय कृतस्नानजप: चन्दनाक्षतश्वेतपुष्पादिभि: पुण्डरीकाक्षं सम्पूजयेत् 'विभूतये नम:, माधवाय नम:, श्रीधराय नम:, शङ्खचक्रासिगदाजलजपाणये नम:' मन्त्रोच्चारणेन सम्प्रार्थयेच्च[६]। व्रतस्यास्यानुष्ठानेन महत्फलं भवति[७]। वर्णनमस्य सविस्तरं द्रष्टव्यमस्ति भविष्योत्तरविष्णुधर्मोत्तरादिपुराणेषु व्रतरत्न-व्रतराज-व्रतकल्पद्रुमादिग्रन्थेषु च।

---

१. मत्स्यपुराणम्, अ. ९७, पृ. ३२२-३२४।
२. तदेव, अ. ९७, श्लो. ११।
३. तदेव, अ. ९८, पृ. ३२५-३२६।
४. तदेव. अ. ९८, श्लो. ८।
५. मत्स्यपुराणम्, अ. ९९, पृ. ३२६-३३२।
६. तदेव, अ. ९९, श्लो. ३-४।
७. तदेव, अ. ९९, श्लो. २०-२१—
'न च व्याधिर्भवेत् तस्य न दारिद्र्यं न बन्धनम्।
वैष्णवो वाथ शैवो वा भजेज्जन्मनि जन्मनि।।
यावद् युगसहस्राणां शतमष्टोत्तरं भवेत्।
तावत्स्वर्गे वसेद् ब्रह्मन् भूपतिश्च पुनर्भवेत्।।'

(२८) **षष्टिव्रतम्**[1]—मत्स्यपुराणस्याध्यायेऽस्मिन् देवव्रत-रुद्रव्रत-नीलव्रत-प्रीतिव्रत-गौरीव्रत-कामव्रत-शिवव्रत-सौम्यव्रत-सौभाग्यव्रत-सारस्वतव्रत-सम्पद्व्रत-आयुव्रत-कीर्तिव्रत-सामव्रत-वीरव्रत-पितृव्रत-आनन्दव्रत-धृतिव्रत-अहिंसाव्रत-सूर्यव्रत-विष्णुव्रत-शीलव्रत-दीप्तिव्रत-रुद्रव्रत-दृढव्रत-कान्तिव्रत-ब्रह्मव्रत-कल्पव्रत-भीमव्रत-धराव्रत-महाव्रत-प्रभाव्रत-प्राप्तिव्रत-सुगतिव्रत-वैश्वानरव्रत-कृष्णव्रत-देवीव्रत-भानुव्रत-विनायकव्रत-फलव्रत-सौरव्रत-विष्णुव्रत-वार्षव्रत-प्राजापत्यव्रत-त्र्यम्बकव्रत-घृतव्रत-इन्द्रव्रत-श्रेयोव्रत-अश्वव्रत-करिव्रत-सुखव्रत-वरुणव्रत-चन्द्रव्रत-रुद्रव्रत-भवानीव्रत-पवनव्रत-धामव्रत-सोमव्रत-शिवव्रत-विश्वव्रतानि षष्टिसंख्यकानि सविस्तरं वर्णितानि सन्ति नाम[2]।

वस्तुतस्तु, धर्मप्रधानेऽस्माकं भारतवर्षे विविधानि बहुसंख्यकानि सन्ति नाम व्रतानि। तेषामनुष्ठानं दैनिकं, मासिकं, पाक्षिकं, षाण्मासिकं, वार्षिकं जीवनपार्यन्तिकञ्च परमावश्यकमनिवार्यञ्च दैहिक-दैविक-भौतिकतापत्रय-विमोक्षाय सर्वजनसुलभस्वास्थ्यवर्धनाय च। दार्शनिकाध्यात्मिकधार्मिकवैज्ञानिक-यौगिकैतिह्यमनोवैज्ञानिकदृष्ट्यापि बहुमूल्यान्यतीवमहत्त्वपूर्णानि व्रतानीमानि तपोनिष्ठमुनिभिः ऋषिभिः महर्षिभिः योगिभिश्च बहुप्रथितानि च। भारतीयजनमानसमान्यतानुसारेण न केवलं व्रतानुष्ठानेन लौकिकोऽपि तु पारलौकिकलाभोऽपि। अत एवावश्यमेव सदैवाचरणीयं करणीयञ्च व्रतं मोक्षदं नाम। अन्ते निष्कर्षतश्च—अष्टादशपुराणान्येव व्रतमाहात्म्यप्रमाणानि सन्ति। एतदर्थमेव पुराणानि खलु परिशीलनानि—

'यथा पापानि पूयन्ते गङ्गवारिविगाहनात्।
तथा पुराणश्रवणाद् दुरितानां विनाशनम्।।'
(वामनपुराणम्, ६९.२११)

यन्न दृष्टं हि वेदेषु तत्सर्वं लक्ष्यते स्मृतौ।
उभयोर्यन्न दृष्टं हि तत्पुराणैः प्रमीयते।।' (नारदपुराणम्, ३.२४)

●

---

१. मत्स्यपुराणम्, अ. १०१, पृ. ३३२-३३९।

२. तदेव, अ. १०१, श्लो. ८५, पृ. ३३९।
षष्टिव्रतं नारद पुण्यमेतत् तवोदितं विश्वजनीनमन्यत्।
श्रोतुं तवेच्छा तदुदीरयामि प्रियेषु किं वा कथनीयमस्ति।।

# पुराणेषु जीवस्य क्रमिकविकासविमर्शः

**डॉ. आशुतोषमिश्रः**
उपाचार्योऽध्यक्षश्च, पुराणेतिहासविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणस्याम्



जीवस्य क्रमिकविकासे विवेचनीये तत्कारणमपि समालोचनीयतामर्हतीत्यभिप्रेत्य तत्सम्बन्धेऽपि किञ्चिदनुसन्धीयते। शक्तिशक्तिमतोरभेदनियमाद् ब्रह्मणि तदीयशक्तौ चाभेदो लक्ष्यते। अत एव ब्रह्मणि तदीयशक्तिरूपिण्यां मूलप्रकृतौ च शास्त्रेषु अभिन्नता प्रतिपादितास्ति। यथा गानपरायणस्य पुंसो गानशक्तिर्गानमकुर्वति तस्मिन् अव्यक्तदशायां तिष्ठति। तदानीं न कश्चिदपि अवधारयितुमर्हति यदयं गायकोऽस्ति किन्तु गानसमये सर्वोऽपि विजानाति यदस्मिन् गानशक्तिर्विद्यते तथैव ब्रह्मशक्तिः प्रकृतिर्यदा ब्रह्मण्यव्यक्तावस्थायां तिष्ठति तदा जागतिकप्रपञ्चानां विलयः, किन्तु यदा सा सृष्टिकाले व्यक्तावस्थामापद्यते, तदा सूक्ष्मस्थूलभावपरिपूर्णं सृष्टिवैचित्र्यमभिलक्ष्यते।

यद्वा यथा गानपरायणं पुमांसमपृष्ट्वापि श्रोता तद्गानेन विमुग्धो भवति तथैव ब्रह्मस्वरूपानभिज्ञोऽपि जीवो महामायायां ब्रह्मशक्तौ ग्रस्तो मोमुह्यमानो दरीदृश्यते। अत एव शक्तिमता पुरुषेण सह शक्तिस्वरूपिण्या प्रकृतेः नाणीयानपि अस्ति भेदः, अग्नौ दाहिका शक्तिरिव भगवति शक्तिस्वरूपिणी प्रकृतिर्निहिता तिष्ठति। सर्गादौ समष्टिजीवप्रारब्धानुसारेण परमेश्वरे यदा जगतः सिसृक्षा समुत्पद्यते तदा शक्तेरेतस्या विकासो जायते। तथा चोक्तम्—

> शक्तिशक्तिमतोर्भेदं वदन्ति परमार्थतः।
> अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः॥
>
> योगेनात्मा सृष्टिविधौ द्विधारूपो बभूव ह।
> पुमाँश्च दक्षिणार्द्धांशो वामार्द्धा प्रकृतिः स्मृता॥
>
> सा च ब्रह्मस्वरूपा च नित्या सा च सनातनी।
> यथात्मा च तथा शक्तिर्यथाग्नौ दाहिका स्थिता[१]॥

---

१. कालिकापुराणे-७.२.४.५।

देवीभागवते तु—

स्वयं पुमाँश्च प्रकृतिस्तावभिन्नौ परस्परम्।
यथा वह्नेस्तस्य शक्तिर्न भिन्नाऽस्त्येव कुत्रचित्।।
सेयं शक्तिर्महामाया सच्चिदानन्दरूपिणी।
रूपं बिभर्त्यरूपा च भक्तानुग्रहहेतवे[१]।।

श्रीमद्भागवते च प्रोक्तमस्ति यत् सृष्टेः पूर्वं दृश्यमानमिदं समस्तं दृश्यं यदा जले निमग्नमासीत् तदैकमात्रं श्रीमन्नारायणः शेषशय्यां शयानो योग-निद्रामाश्रित्य निमीलितनयन आनन्दमनुभवति स्म। यथानलः स्वां दाहिकां शक्तिं स्वस्मिन्नन्तर्भाव्य काष्ठे व्यापकरूपेणान्तर्भाव्य जले शयानः तिष्ठति, सृष्टिकाले च पुनः स्वां कालशक्तिं प्रेरयति[२]। तद्यथा—

उदाप्लुतं विश्वमिदं तदासीद् यन्निद्रयामीलितदृङ्न्यमीलयत्।
अहीन्द्रतल्पेऽधिशयान एकः कृतक्षणः स्वात्मरतौ निरीहः।।
सोऽन्तः शरीरेऽर्पितभूतसूक्ष्मः कालात्मिकां शक्तिमुदीरयाणः।
उवास तस्मिन् सलिले पदे स्वे यथाऽनलो दारुणि रुद्धवीर्यः।।

तस्या एव ईश्वरशक्तेः शास्त्रेषु विभिन्नानि नामानि श्रूयन्ते। ते ते आचार्याः स्वस्वकृतिषु तामीश्वरशक्तिं विभिन्नैर्नामभिर्व्यवहरन्ति। यया स दृश्यमानमिदं समस्तं विश्वं विरचयति। तत्र केचनाचार्यास्तां तप इति ब्रुवते, केचित्तम इति कथयन्ति, अन्ये जड इत्यभिदधति, इतरे अज्ञानमिति ज्ञापयन्ति, अपरे प्रकृतिमिति प्रख्यापयन्ति, एके प्रधानमिति निगदन्ति, भिन्ना अजामिति बोधयन्ति, शाक्ताः शक्तिरिति सम्यग् बोधयन्ति, अद्वैतिनोऽविद्यामिति उच्चारयन्ति, पौराणिकाश्च मायामिति व्यपदिशन्ति। तद्यथा—

केचित्त्वां तप इत्याहुस्तम केचिज्जडं परे।
ज्ञानं माया प्रधानञ्च प्रकृतिं शक्तिमप्यजाम्[३]।।

---

१. देवीभागवते-९/३८/२८-२९।
२. श्रीमद्भागवते-३/८/१०.११।
३. देवीपुराणे-५/२७।

अपि च—

सा विद्येत्यभिधीयते श्रुतिपथे शक्तिः सदाद्या परा।
सर्वज्ञा भवबन्धनमिति निपुणा सर्वाश्रये संस्थिता[१]।।

या वा एतस्य संस्रष्टुः शक्तिः सदसदात्मिका।
माया नाम महाभागा ययेदं निर्ममे विभुः[२]।।

देवीभागवतेऽपि यथा—

मूलप्रकृतिरेवैषा सदा पुरुषसङ्गता।
ब्रह्माण्डं दर्शयत्येषा कृत्वा वै परमात्मने[३]।।

यथा दृश्या अनुभवगम्याश्च सर्वे पदार्थास्त्रिप्रकारा भवन्ति, तथैव विश्वसृष्टिरपीयमाध्यात्मिकी, आधिदैविकी, आधिभौतिकी चेति भेदात् त्रिधा विभक्ता परिदृश्यते—

वस्तुमात्रं तु यद्दृश्यं संसारे त्रिगुणं हि तत्।
दृश्यं च निर्गुणं लोके न भूतं न भविष्यति[४]।।

कारणे ब्रह्मणि भावत्रयसत्त्वात्कार्यब्रह्मस्वरूपसर्गेऽप्यत्र सर्वत्रैव त्रयो भावा भवन्ति। अतः परमपुरुषोऽसौ आध्यात्मिकाधिदैविकाधिभौतिकत्रिविधरूपेण साधकानां दृष्टिगोचरतामापद्यते। तस्य ब्रह्मण आध्यात्मिकं रूपं मायातीतं निर्गुणं परब्रह्मपदवाच्यम्, आधिदैविकं, सगुणपरमेश्वरनाम्ना अभिधीयते। आधिभौतिकञ्चानाद्यनन्तविराट्पुरुषसंज्ञया स्वीकृतमस्ति। अतस्त्रिगुणात्मिकां स्वां प्रकृतिं मायामधिष्ठाय स्ववीर्यं त्रिधा विभज्य त्रिविधां सृष्टिमसौ विधत्ते। तद्यथा—

योऽध्यात्मिकोऽयं पुरुषः सोऽसावेवाधिदैवकः।
यस्तत्रोभयविच्छेदः पुरुषो ह्याधिभौतिकः।।

एकमेकतराभावे यदा नोपलभामहे।
त्रितयं तत्र यो वेद सा आत्मा स्वाश्रयाश्रयः।।

---

१. आ.वि.-५१।
२. कालिकापुराणे-९/२१।
३. देवीभागवते-३/६/६९।
४. श्रीमद्भागवते-६/२६/१०।

अधिदैवतमध्यात्ममधिभूतमिति प्रभुः।
अथैकं पौरुषं वीर्यं त्रिविधमित्यथ तच्छृणु[१]।।

एष ह्यशेषसत्त्वानामात्मांशः परमात्मनः।
आद्योऽवतारो यत्रासौ भूतग्रामो विभाव्यते।।
साध्यात्मः साधिदैवश्च साधिभूत इति त्रिधा[२]।।

कूर्मपुराणस्य पूर्वार्द्धे तु—

इयं सा परमा शक्तिर्मन्मयी ब्रह्मरूपिणी।
माया मम प्रियानन्ता ययेदं धार्यते जगत्।।

अनयैव जगत्सर्वं सदेवासुरमानुषम्।
मोहयामि द्विजश्रेष्ठा ग्रसामि विसृजामि च।।

सैषा सर्वजगत्सूतिः प्रकृतिस्त्रिगुणात्मिका।
प्रागैव मत्तः सञ्जाता श्रीकल्पे पद्मवासिनी[३]।।

प्रकृतेस्त्रैविध्या तत्सम्बन्धेनैव भगवतस्त्रिविधमिदं स्वरूपं समुपवर्ण्यते न वास्तविकम्। अन्यथा (एकमेवाद्वितीयं ब्रह्म) इति श्रुतिप्रतिज्ञा व्याहन्यते। देवीभागवते च तद्यथा—

एकमेवाद्वितीयं वै ब्रह्म नित्यं सनातनम्।
द्वैतभावं पुनर्याति काले उत्पत्तिसंज्ञके[४]।।

सृष्टिस्तावत्त्रिविधा—आध्यात्मिकी, आधिदैविकी आधिभौतिकी च। तत्र भगवतः स्थूलशरीरस्वरूपः, विराट्सृष्टिप्रवाहः आध्यात्मिकसृष्टिसंज्ञया शास्त्रेष्वभिधीयते आधिदैविकी सृष्टिः ब्रह्माण्डसृष्टिः कथ्यते, आधिभौतिकी च पिण्डसृष्टिर्निगद्यते। तत्राद्या अनाद्यनन्ता, द्वितीया तृतीया च सादी विज्ञातव्ये।

आध्यात्मिक्याः सृष्टेः अनाद्यनन्तत्वाद् ब्रह्मसत्तावत्प्रकृतिरपि अनाद्यनन्ता। यतो हि सा ब्रह्मस्वरूपिणी अतस्तस्या अनाद्यनन्तता स्वतः सिद्धा। सगुणत्वाद्

---

१. त.वि. ४२/४३-४४।
२. श्री.भा. ३/६/८९।
३. कूर्मपुराणस्य पूर्वार्द्धे-१/३४.३५.३८।
४. देवीभागवते-३/६/४।

ईश्वरनाम्ना व्यवह्रियते सृष्टेरनाद्यनन्तधारासम्बन्धेन च विराट्पुरुषसंज्ञया व्यपदिश्यते। आध्यात्मिक्याः सृष्टेः अनाद्यनन्तत्वाद् यस्या महाप्रकृतेः गर्भे आध्यात्मिकी सृष्टिर्भवति तस्या किल अनाद्यनन्तत्वे का संशीतिः। तथा चोक्तम्—

त्वं सर्वादिरनादिस्त्वं कर्त्री हर्त्री च पालिका[१]॥

वस्तुतोऽनन्तानि ब्रह्माण्डानि सन्ति। तत्र प्रत्येकब्रह्माण्डे पृथक् पृथक् ब्रह्मविष्णुमहेश्वराः सन्ति। तदीयाः कार्यविभागा अपि स्वतन्त्रा भिन्ना भिन्ना भवन्ति। अत एव विभिन्नानां ब्रह्माण्डानां सृष्टिस्थितिप्रलया अपि विभिन्नतामुपयान्ति। तद्यथा—

संख्या चेद् रजसामस्ति विश्वानां न कदाचन।
ब्रह्मविष्णुशिवादीनां तथा संख्या न विद्यते॥

प्रतिविश्वेषु सन्त्येवं ब्रह्मविष्णुशिवादयः।
पातालाद् ब्रह्मलोकान्तं ब्रह्माण्डं परिकीर्तितम्॥

प्रत्येकं लोमकूपेषु ब्रह्माण्डं परिनिश्चितम्।
प्रत्येकं प्रतिब्रह्माण्डं ब्रह्मविष्णुशिवादयः[२]॥

यथा स्थूलशरीरस्य जरारोगमृत्यवो भवन्ति तथैव प्रत्येकब्रह्माण्डे ब्रह्मणो दिवसावसाने खण्डप्रलयो रुद्रस्यायुषोऽन्ते च महाप्रलयो बोभवीति। तदा त्रिमूर्तौ ब्रह्मविलीनायां ब्रह्माण्डस्यैकस्य महाप्रलयः सम्पद्यते। अखिलब्रह्माण्डनायकस्य योगमायाया अक्षिपक्ष्मसञ्चालनमात्रेणापि समस्तं विश्वमुत्पद्यते। अपि च तस्या एव प्रभावेण ब्रह्मविष्णुमहेश्वराणामपि सृष्टिस्थितिप्रलया बोधयन्तीति। तथा चोक्तं देवीभागवते—

या नेत्रपक्ष्मसञ्चलनेन सम्यग्,
विश्वं सृजत्यवति हन्ति निगूढभावा।
सैषा करोति सततं द्रुहिणाच्युतेशान्
नानावतारकलने परिभूयमानान्[३]॥

---

१. कालिकापुराणे-२/११।
२. देवीभागवते-९/७,८,१७।
३. देवीभागवते-५/१/२९।

अपि च—

जानीहि त्वं महाराज योगमायावशे जगत्।
ब्रह्मादिस्तम्बपर्यन्तं देवमानुषतिर्यगम्।।
मायातन्त्रीनिबद्धा ये ब्रह्मविष्णुहरादयः।
भ्रमन्ति बन्धमायान्ति लीलया चोर्णनाभवत्[१]।।

अनाद्यनन्तसृष्टिप्रलयप्रवाहे प्राणिनामुत्पत्तिमुक्तिविषये एवं प्रमाणमुपलभ्यते—

निखिला एव संस्काराः साद्यन्ताः सम्प्रकीर्तिताः।
अतो जीवप्रवाहेऽस्मिन् अनाद्यन्तेऽपि जन्तवः।।
मुक्तिशीलास्तथोत्पत्तिशालिनः सन्ति सर्वथा।
नैवात्र विस्मयो कार्यो भवद्भिरमृतान्धसाः[२]।।

एवमेकब्रह्माण्डीयजीवानां स्थूलानि सूक्ष्माणि वा शरीराणि नूनं प्रणाशमापद्यन्ते। तस्माद् ब्रह्माण्डं पिण्डं (जीवदेहः) चोभे विनश्वरे भवतः। त्रिगुणात्मिकायाः प्रकृतेः वैभवस्वरूपे ब्रह्माण्डपिण्डे द्वे अपि त्रिगुणविलास-पार्थक्यात् सृष्टिस्थितिप्रलयाधीने भवतः—

यदा सिसृक्षुः परमात्मनः परो रजः सृजत्येष पृथक् स्वमायया।
सत्त्वविधित्रांशु चिरं सुरेश्वरः शयिष्यमाणस्तम ईरयत्यसौ[३]।।

अनन्तब्रह्माण्डमयी आध्यात्मिकी सृष्टिधारा अनाद्यनन्ता किन्तु प्रकृतेः त्रिगुणमयत्वात् प्रत्येकं ब्रह्माण्डं नश्वरमभ्युपगन्तव्यम्। भगवतो रुद्रस्यायुषा सह ब्रह्माण्डस्यैकस्यायुः निर्णीतम्। रुद्रस्यायुषोऽन्ते यश्च विष्णुः यो वा ब्रह्मा स्तः, ताभ्यां सहैव ब्रह्माण्डं विलीयते। अतो व्यष्टिरूपेण प्रत्येकं ब्रह्माण्डस्य सृष्टिस्थितिविलया भवन्ति। अस्मादेव कारणात् प्रतिब्रह्माण्डं सृष्टिकर्ता ब्रह्मा, स्थितिकर्ता विष्णुः, संहारकर्ता च रुद्रः पृथक्-पृथक् विद्यन्ते। ब्रह्माण्डव-ज्जीवदेहात्मकः पिण्डोऽपि नश्वरः।

---

१. देवीभागवते-५/१/५३-५४।

२. देवीपुराणे-३/१७।

३. श्रीमद्भागवते-७/१/७०।

जीव: संसारे क्रमश उद्भिजस्वेदजाण्डजजराञ्जयोनिषु उत्पन्नो भूत्वा नैजं प्रारब्धं भुञ्जानोऽन्ते निधनं प्रपद्यते। एवञ्च सर्वेऽपि जीवा स्वस्वकर्म-फलभोगानन्तरं निधनमुपगच्छन्तीति नात्र कश्चनास्ति सन्देह:। स्मर्यते चात्र—

यदिदं दृश्यते किञ्चिज्जगत्स्थावरजङ्गमम्।
पुन: सङ्क्षिप्यते सर्वं जगत् प्राप्ते युगक्षये[1]।।

पुराणानुसारं निर्विकार: अनन्यपुराणपुरुष: पुरुषोत्तमो यदा सत्त्वादि-गुणानां जन्मादिकर्मणाञ्च कारणभूतायां मायाशक्तौ प्रकृतौ चिदाभासरूपं वीर्यं निधत्ते तदा प्रपञ्च एष समुत्पद्यते। तथा चोक्तमिन्द्रियाधिष्ठात्रीभि: देवताभि:, तद्यथा—

त्वं न: सुराणामसि सान्वयानां कूटस्थ आद्य: पुरुष: पुराण:।
त्वं देवशक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविमादधेऽज:[2]।।

अपि च—

स आदि: स मध्य: स चान्त: प्रजानां
स धाता स धेय: स कर्ता च कार्यम्।
युगान्ते प्रसुप्त: सुसंक्षिप्य लोकान्
युगादौ प्रवृद्धो जगद् व्युत्ससर्ज[3]।।

ईश्वरोऽस्मिन् सृष्टिकर्मणि बीजदाता, पितृस्थानीय: क्षेत्रस्वरूपा च प्रकृतिजननी निर्धारिता। यथाङ्कुरोत्पत्तये क्षेत्रे बीजमुप्यते तथैव प्रकृतिक्षेत्रे परमविस्तारहेतवे परमेश्वरद्वारा स्ववीर्याधानेन अनन्तकोटिब्रह्माण्डरूपिण्या विराट्सृष्टे: समुद्भवो भवति। यथा चोक्तं गीतायाम्—

मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्।
सम्भव: सर्वभूतानां ततो भवति भारत।।
तेषां ब्रह्म महद् योनिरहं बीजप्रद: पिता[4]।।

---

१. कालिकापुराणे-५/७।
२. श्रीमद्भागवते-३/५/४९।
३. महाभारते शान्तिपर्वणि, मो.ध. ३४०/१००।
४. गीतायाम्-१४/३-४।

मनुस्मृतावपि विज्ञानमेतद् भगवता मनुना समर्थितमस्ति—

द्विधा कृत्वात्मनो देहमर्द्धेन पुरुषोऽभवत्।
अर्द्धेन नारी तस्यां च विराजमसृजत् प्रभुः[1]॥

श्रुतिश्च 'ततो विराडजायत'। इयमेव मातृस्थानीया ब्रह्मशक्तिस्वरूपिणी प्रकृतिः शास्त्रेषु संस्थानशक्तिः सलिलस्वरूपा प्रोक्ता। इमामेव विश्वस्य संस्थान-शक्तिमभिलक्ष्य भगवता पतञ्जलिना महाभाष्ये 'संस्त्यानरूपा स्त्री, प्रवृत्तिपुरुषः' इति सोपष्टम्भं प्रोक्तम्। संस्त्यानसंहननसम्मिलनशक्तिसद्भावाद् अप एव प्रकृतेर्नाम। यतोऽप्सु मेलनशक्तिर्वर्तते। महाप्रलये तिष्ठति। तदा सदसत् किमपि नासीत्। केवलमम्भ एवाभवत्। अस्यामेवानन्तजीवसंस्कारसंवलिताया-मव्याकृतप्रकृतौ सर्वतः प्रथमं परमपुरुषेण वीर्यदानपूर्वकं गर्भाधानं क्रियते। एवं त्रिगुणमय्यामस्यां लीलापूर्वकं गर्भाधानद्वारा अनन्तकोटिजीवोत्पत्ति-प्रकारोऽवसेयः। परमपुरुषवीर्याधानेनैव क्रमशो महत्तत्त्वादयः समुत्पन्नाः सृष्टि-विकासं समेधयन्ति। एतदेव मनुसंहितायां प्रकारान्तरेणोक्तं समुपलभ्यते—

सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः।
अप एव ससर्जादौ तासु बीजमावासृजत्[2]॥

एवञ्च प्रलयदशायां सदसतोरभावात् कस्यापि वस्तुनः सत्ता नासीत्। केवलमव्याकृतप्रकृतिगर्भे विलीनाः संस्कारसमूहास्तदवबोधकोऽद्वितीयचैतन्य-मयः परमात्मैवाविद्यत। स एव सृष्टिप्रारम्भसमये एकत्वाद् बहुत्वकामनया प्रलयगर्भविलीनजीवसंस्कारानुसारेण कल्पसृष्टिं प्रकाशयति। एकभावापन्नः परमात्मैव स्वं शरीरं द्विधा विभज्य प्रकृतिं विकासयति। तस्या एव गर्भे विराट् विश्वमुत्पादयति। अतो प्रकृतिमातुर्लीलावैभवरूपं जगदपि सत्यमेव प्रतिभातीति सिद्धान्तितम्। अस्यां जडचेतनात्मकप्रकृतिपुरुषशृङ्गारसमुत्पन्नसृष्टिलीलायां प्रवाहद्वयमभ्युपगम्यते। एक ऊर्ध्वगामी चेतनप्रवाहः, द्वितीयश्चाधोगामी जड-प्रवाहः। तत्र जीवो नानायोनिषु परिभ्रम्य ऊर्ध्वगामी चेतनधारामवलम्बमानः क्रमशः समुन्नमन् अन्ते तदुन्नतिपराकाष्ठां मुक्तिं लभते। ततस्तदन्तर्गतो जडांशः प्रकृतिधारायां निलीयते चेतनधारायाः पराकाष्ठा ब्रह्मसद्भावो यत्र प्रकृतेः पृथक् सत्ता विलीयते। एवञ्च चेतनप्रवाहः प्राकृतिकं रजस्तमोमयं राज्यमतिक्रम्य सत्त्वे

---

१. मनुस्मृतौ-१/३३।
२. मनुस्मृतौ-१/८।

समुपस्थितः समुन्नतेः काष्ठायां व्यापिकायां चेतनधारायां विलीयते। तदीयो देहो मृत्योरनन्तरं चैतन्याभावात् प्रणाशमुपगच्छति।

प्रकृतिः परिणामिनी चञ्चला चेति हेतोः चेतनप्रवाहः क्रमशः समुन्नतो भवन् सत्त्वराज्यमतिक्रामन् त्रिगुणमय्याः प्रकृतेः स्वाभाविकीं धारां निस्तीर्य परिणामरहितः सन् स्थिरो जायते। किन्तु जडप्रवाहो नियतपरिणामशीलायाः प्रकृतेर्नित्यमन्तर्गतत्वात् परिणामशून्यः स्थिरो भवितुं नार्हति। जडायाः प्रकृतेः अन्तिमा सीमा प्रस्तरादयः स्थावरपदार्थाः सन्ति। इयमेव तमोगुणस्य पराकाष्ठा।

यथा किल सामुद्रिकास्तरङ्गा घातप्रतिघाताभ्यां तीरमायाता अग्रे गतिनिरोधसत्त्वात् पुनः समुद्राभिमुखं प्रयान्ति, तथैव प्राकृतिको निम्नगामी प्रवाहः क्रमशो निम्नत्वं प्रतिढौकमानस्तमोगुणस्य परां काष्ठां प्राप्तोऽग्रे स्थानमनवाप्य पुनरपि तमोगुणाद् रजोगुणाभिमुखं (जडतश्चैतन्याभिमुखं) स्वभावत एवाग्रेसरति। तदानीं तमोगुणाद् रजोगुणाभिमुखं प्रतिष्ठमानस्य प्रकृतिप्रवाहस्य किञ्चित् समुन्नत्या चित्सत्ता सर्वत्र सत्त्वेऽपि तामसिकप्रवाह-मालिन्यात् तत्र नैव विकासमापद्यते। किन्तु प्राकृतिकः प्रवाहस्तमो-गुणस्यान्तिमकाष्ठातः किञ्चित् समुन्नतां प्रतिपद्यते। तदा तत्र स्वच्छीभूते सूक्ष्मप्रकृतिकेन्द्रे व्यापकस्य परमात्मनो यः प्रतिबिम्बो निपतति स एव ब्रह्मणः प्रतिबिम्बो जीवसंज्ञां धत्ते। तथा हि—

अविद्यायां च यत् किञ्चित् प्रतिबिम्बं नगाधिप।
तदेव जीवसंज्ञं स्यात् सर्वदुःखाश्रयं पुनः[१]॥

श्रीमद्भगवद्गीतायामपि भगवान् श्रीकृष्णः स्पष्टं प्रोवाच—

ममैवांशो जीवलोके जीवभूतः सनातनः।
मनः षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
जीवभूतां महाबाहो ययेदं धार्यते जगत्[२]॥

---

१. देवीभागवते-२/७/४५।
२. गीतायाम्-१५/७, ७/५।

महाभारतस्य शान्तिपर्वणि मोक्षधर्मेऽपि जीवात्मा परमात्मनोंऽश: स्वीकृतोऽस्ति। तद्यथा—

जीवमात्मगुणं विद्यादात्मानं परमात्मन:[१]।

एवं हि अंशशब्देन कल्पितस्य जीवात्मन: प्रथमविकाससमये अविद्याया: प्रबलेनान्धकारेण समाच्छन्ने तमोमयान्त:करणे एतावत्ताराल्पभाव-मात्रमात्मज्योति: प्रतिफलति यत् तत् चिदाभासत: चित् प्रतिबिम्बाद् वा अन्यत् किमपि अभिधातुं न शक्यते। तदेव ज्योति: प्रकृतिराज्ये समुन्नमद् यथा यथा अविद्या अन्धकारतो विमुच्यते तथा तथा तत् स्वीयां तां ज्ञानमयीं प्रभां प्रदर्शयति यया व्यापकेन चिन्मयस्वरूपेण सह तस्य अंशाशिभावसम्बन्धो ज्ञानराज्यविचरणशीलै: साधकै: सदैवानुभूयते। विषयमिमं स्पष्टयितुं भगवान् महर्षिवेदव्यास: स्वकीये वेदान्तदर्शने सूत्रयाञ्चकार—

अंशो नानाव्यपदेशात्[२]।

यथा एक एवाकाशो घटाकाशमठाकाशादिना भिद्यते, तथैव अन्त:करणोपाधिभेदेन एकमेव ब्रह्म संख्यातीतरूपेण परिव्याप्तं विलोक्यते। तस्मादेक एव विभु: परमात्मा उपाधियुक्त: समांशस्वरूपतो नानात्वं भजते। अत एवोक्तम्—

बालाग्रशतभागस्य शतधा कल्पितस्य च।
जीवो भाग: स विज्ञेय: स चानन्त्याय कल्पते[३]॥

यथा वा एक एव निराकारोऽग्नि: साकाररूपेण प्रज्वलित: सन् आधार-भेदाद्भिन्न: प्रतीयते तथैव जीवमात्रेऽन्तर्यामितया सर्वत्र स्थित: एक एव परमात्मा विभिन्नप्राणिषु तदनुरूपतया भिन्नरूपोऽनुभूयते। वस्तुत एक एवेश्वर आधारभूतस्य वस्तुन: शरीरानुरूपतया विश्वस्मिन् जीवरूपेण अनेक: प्रतीयते। तथा हि—

अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च[४]॥

---

१. महाभारते शान्तिपर्वणि-१४१/१९।

२. ब्रह्मसूत्रे-२/३/१९।

३. कौ.उ. ५/३।

४. क.उ. २/२९।

प्रकृतेरतिसूक्ष्मोंऽशो यत्र चैतन्यं प्रतिबिम्बितं भवति स एव कारण-शरीरनाम्ना निगद्यते। ततः प्रकृत्या सम्बन्धनिबन्धनस्य जीवस्य इच्छया सूक्ष्मशरीरमुत्पद्यते। तद्गतसंस्कारसमूहतीव्रवेगानुसारेण च दृश्यमानं स्थूलं शरीरमुद्भवति। एवं शरीरत्रयेण भोगादिना बद्धो जीव उद्भिज-स्वदेजाण्डजजरायुजानां योनिमतिक्रम्य मानवयोनिमुपढौकते।

मनुष्ययोनौ असंख्याकविभिन्नगतिलाभान् मानवयोनिसंख्या निर्धारयितु-मशक्या, केवलमुद्भिदादिचतुर्विधभूतसङ्घस्य संख्या शम्भुगीतायां निर्धारिता विलोक्यते। तदनुसारं विंशतिलक्षसंख्याकाः स्थावरयोनयः सन्ति, कृमियोनयः एकादशलक्षसंख्याकाः, जलचरयोनयो नवलक्षसंख्याकाः, पक्षियोनयो दशलक्षसंख्याकाः, पशुयोनय त्रिंशल्लक्षप्रकाराः, वानरयोनयश्च चतुर्लक्षभिदा भवन्ति। तथा चोक्तम्—

स्थावरे लक्षविंशत्यो कृमिणां रुद्रलक्षकम्।
जलजं नवलक्षं च पक्षिजं दशलक्षकम्।।
पश्वादीनां लक्षत्रिंशच्च चतुर्लक्षं च वानरे।
ततो हि मानवा जाताः कुत्सिता देवि लक्षकम्[१]।।

तथा चोद्भिज्जस्वेदजाण्डजजरायुजात्मकस्य चतुर्विधस्य भूतसङ्घस्य सङ्कलनया (२०+११+९+१०+३०+४=८४) चतुरशीतिलक्षप्रकारा योनयो भवन्ति। 'चतुरशीतिलक्षान्ते मानवः' इति वचनानुसारं जीवः पूर्वं प्रोक्तचतुरशीतिलक्षसंख्याकासु विविधासु योनिषु जन्म गृहीत्वा मनुष्ययोनौ जन्म गृह्णाति। तत्र सत्कर्मणा समुन्नतिमसत्कर्मणा चावनतिं लभमानस्तत्फले सुखदुःखे अनुभवति।

तत्त्वनिरूपणप्रसङ्गे देवर्षिनारदमुपदिशता ब्रह्मणा देवीभागवतेऽपि चतुरशीतिलक्षसंख्याका जीवयोनयः प्रोक्ताः, तथा हि—

सर्वे जीवा मिलित्वैव ब्रह्माण्डांशसमुद्भवाः।
चतुरशीतिलक्षाश्च प्रोक्ता वै जीवजातयः[२]।।

मानवेतरचतुर्विधभूतसङ्घस्य योनिषु स्वाभाविकसंस्काराश्रयेण तदा ते जीवाः क्रमेणोर्ध्वगामिनो भवन्ति। किन्तु मानवयोनौ जीवः स्वतन्त्रः सन्

१. शम्भुगीतायाम्-१७,१८।
२. देवीभागवते।

संस्काराधीनो जायते। अतोऽसौ क्रमोन्नतिमप्राप्तो निजकर्मानुसारेण कदाचिदुन्नतः कदापि चावनतो भिन्नां भिन्नां गतिमासादयति।

उद्भिज्जयोनिमारभ्य जरायुजयोनिपर्यन्तं जीवो निर्बाधं क्रमोन्नतिमासादयति, यतो हि तामसयोनिषु बुद्धेर्मालिन्येन जीवः स्वकर्मणा स्वतन्त्रसंस्कारार्जनं न कर्तुं पारयति, न केवलं प्रकृतिरेव माता शिशुमिव स्वाभाविकसंस्काराननुसृत्य क्रमशो जीवान् संवर्द्धयति। यथा नद्यां प्रवहमाणः काष्ठखण्डोऽपां वेगेनैव समुद्राभिमुखमानीयते तथैव मानवभिन्ना जीवाः प्रकृतेरूर्ध्वगामिना प्रवाहेण उद्भिज्जस्वदेजाण्डजजरायुजान्तां क्रमशः समुन्नतां योनिं नीयन्ते। तदानीं प्रकृतिमातुरधीनत्वाज्जीवानां क्रमोन्नतिर्निर्बाधं जायते। परन्तु मानवयोनिमधिगते जीवे पूर्णरूपेण पञ्चकोषा विकासं प्राप्नुवन्ति। बुद्ध्यहङ्कारयोरपि विकासो जायते। तदानीं मानवः प्रकृतौ स्वामित्वं स्थापयति। प्रकृतिमातुरधीनतां च परित्यजति। अतः प्रागेव प्रकृतिदायित्वस्य तिरोधाने स्वयं मानवः स्वकृतानां कर्मणां दायित्वं भजते। अतो मानवयोनौ धर्माधर्मयोरधिकारः समाम्नातः। तथा चोक्तम्—

मानवेषु महाराज धर्माधर्मौ प्रवर्ततः।
न तथान्येषु भूतेषु मनुष्यरहितेष्विह॥

इयं हि प्रथमा योनिर्या प्राप्य जगतीपते!।
आत्मा वै शक्यते त्रातुं कर्मभिः शुभलक्षणैः[1]॥

मनुष्ययोनौ कर्मानुष्ठात्रधीनत्वात् स्वीयपुरुषार्थैर्मानवः स्वीयां समुन्नतिमनुष्ठातुमर्हति। स्वकीयेन पापकर्मणा च नीचानामपि पापयोनिमागन्तुं शक्नोति। अतः शास्त्रेषु सर्वापेक्षया मानवजन्मनोऽभ्यर्हितत्वमुपपादितम्। अहङ्काराक्रान्तचित्तो मानवः प्रकृतेरूर्ध्वगामिनं प्रवाहं परित्यजन् स्वेच्छाचारी सन् विपरीतगतिस्वरूपामवनतिं लभते। तस्मिन् समये धर्मो हि मानवसाहाय्यमाचरन् शास्त्रीयविधानद्वारा तस्यावनतिं निरुध्य क्रमोन्नतिमार्गे तरिं चालयति। तथा चोक्तं शम्भुगीतायाम्—

सन्नतिं निखिला जीवा धर्मेणैव क्रमादिह।
विदधाना सावधाना लभन्तेऽन्ते परं पदम्[2]॥

---

१. देवीभागवते।

२. शम्भुगीतायाम्।

पुराणानुसारं धर्मद्वारैव सर्वे मनोरथाः पुरुषार्थाश्च सिध्यन्ति। अतो धर्मानुष्ठानमवश्यं कर्तव्यम्। तथा चोक्तं कूर्मपुराणस्य पूर्वार्द्धे—

धर्मात् सञ्जायते ह्यर्थो धर्मात् कामोऽभिजायते।
धर्म एवापवर्गाय तस्माद् धर्मं समाश्रयेत्[१]॥

धर्मो हि स्थावरजङ्गमात्मकस्य समस्तस्य पदार्थस्य धारकोऽस्ति, तत्प्राप्तिश्च कर्मणा ज्ञानेन च जायते। यदि मानवो ज्ञानकर्मभ्यां रहितो भवेत्तर्हि जगद्धारणार्थमपेक्षिताया शक्तेराविर्भावको न प्रभवेत्। अतो जगतो धारणमय्याः धर्माख्यायाः शक्तेः प्रादुर्भावाय कर्मणो ज्ञानस्य चावलम्बनमवश्यं विधेयम्।

धर्मात् सञ्जायते सर्वमित्याहुर्ब्रह्मवादिनः।
धर्मेण धार्यते सर्वं जगत् स्थावरजङ्गमम्॥

कर्मणा प्राप्यते धर्मो ज्ञानेन च न संशयः।
तस्मात् ज्ञानेन सहितं कर्मयोगं समाश्रयेत्[२]॥

एवमैहिकीं पारलौकिकीं वा समुन्नतिं साधयितुं समुद्यतेन पुंसा धर्मोऽवश्यमनुसर्तव्यः। धर्मो हि द्विविधः—देशधर्मो विश्वधर्मश्च। तत्र देशधर्मः स उच्यते यस्तत्तद्देशस्य संस्कृत्यनुसारं तत्तद्देशमाश्रितस्य मनुव्यवस्थानुष्ठेयो भवति। यथा भारतवर्षस्य देशधर्मो वर्णाश्रमधर्मः। विश्वधर्मश्च स एव भवितुमर्हति यो विश्वकल्याणभावनया समस्तस्य विश्वस्य मनुष्यैरनुष्ठेयो भवति। विश्वधर्माश्रयणेनैव विश्वबन्धुत्वस्योद्बोधनं सर्वत्र सौहार्दपूर्णाया भावनायाश्च सम्पर्कस्य स्थापनं भवितुमर्हति। इममेव धर्ममाश्रित्य भारतस्य वसुधैव कुटुम्बकमिति सर्वजनहितकारिणी भावना जागर्ति।

आनन्द एव जीवस्य जीवनशक्तेरखिलपुरुषार्थनाञ्च मौलिकोऽस्ति आधारः। आनन्दप्रवासी जीव आनन्दकन्दसच्चिदानन्दचरणसरसीरुहमाश्रयन् क्रमश आनन्ददायिनीं समुन्नतिकक्षामतिक्रामन् कृतकृत्यतामधिगच्छति। ये भगवद्गुणानुरक्तमात्मनो मन एकवारमपि भगवच्चरणकमलयोर्निवेशयन्ति न तेषां कदाचिदपि यमाद् यमपाशहस्तेभ्यो यमदूतेभ्यो वा किञ्चिद्भयं जायते। भगवति मनोनिवेशमात्रेणैव ते निर्धूतपापा भवन्ति। तथा चोक्तं श्रीमद्भागवते भगवता शुकदेवेन राजानं परीक्षितं प्रति—

---

१. कूर्मपुराणस्य पूर्वार्द्धे-२/५५।

२. कूर्मपुराणस्य पूर्वार्द्धे-२/६२,६३।

सकृन्मनः कृष्णपदारविन्दयोर्निवेशितं तद्गुणरागिणैरिह।
न ते यमं पाशभृतश्च तद्भटान्, स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः[1]॥

अत एव सारग्राहिणो गुणज्ञा सकलदोषदुष्टस्यापि कलेरेवं प्रशंसां कुर्वन्ति। यतस्तत्र भगवतो गुणनामकीर्तनेनैव मानवः सत्ययुगे ध्यानस्य त्रेतायां यज्ञस्य, द्वापरे भगवत्सेवायाश्च फलं लब्ध्वा सर्वविधं पुरुषार्थं प्राप्य कृतार्थो जायते। तद्यथा—

कलेर्दोषनिधे राजन्नास्ति ह्येको महान् गुणः।
कीर्तनादेव कृष्णस्य मुक्तसङ्गः परं व्रजेत्॥
कृते यद् ध्यायतो विष्णुं त्रेतायां यजतो मखैः।
द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात्[2]॥

इदमेव जीवभावविकासक्रमाभिव्यक्तिविज्ञानस्य सारभूतं तत्त्वम्, एतदेव च चिज्जडग्रन्थिस्वरूपजीवविज्ञानस्य सङ्क्षेपतो रहस्यमवगन्तव्यमिति।



१. श्रीमद्भागवते-६/१/१९।
२. श्रीमद्भागवते-१२/३, ५१/५२।

# शक्तिविचारः

**डॉ. उदयनाथझाः 'अशोकः'**

राष्ट्रियसंस्कृतसंस्थानम् (मान्यो विश्वविद्यालय:)

श्रीसदाशिव-परिसरः, पुरी, उत्कल:



इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा।।

इन्द्रियाणां=चक्षुरादीनां, स्वविषयेषु = चाक्षुषेषु घटादिषु, यथा अनादिर्योग्यता = तदीयचाक्षुषादिकारणता, तथा शब्दानामपि अर्थैः सह तद्बोधकारणतैवानादियोग्यता सैव शक्तिरिति कारिकार्थ:, बोधकारणता च बोधकतारूपा, एवञ्च घटबोधकता घटशब्दे वर्तते, अतो घटपदाद्घटार्थस्य बोधो भवति।

ननु बोधकारणत्वमनादिभूतं शक्तिर्न भवितुमर्हत्याधुनिक-देवदत्तादि-पदे (पित्रादिसङ्केतिते पदे) तदभावेन सङ्केतितार्थस्य तेन पदेन बोधानुपपत्तिः।

न चानादिभूतमिति प्रसिद्धिप्रदर्शनमात्रार्थकं न तु तच्छक्तिशरीरे प्रविष्टम्, बोधकारणत्वेनैव बोधकतायाः कारणत्वम्, न तु अनादिभूतबोधकारणत्वेन कारणत्वमिति वाच्यम्। एवं सति पित्रादिसङ्केतस्याऽज्ञानेऽपि अन्वयबोध-प्रसङ्गापत्तेः। एवञ्च सङ्केतज्ञानं हेतुर्वाच्यः, तथा चावश्यकत्वात् स एव सङ्केतश्शक्तिरस्तु, स चाधुनिके पित्रादेर्गवादौ चेश्वरस्य च सङ्केतश्शक्तिरस्तु इति चेन्न, सङ्केतो न स्वरूपेण हेतुरगृहीतशक्तिकात्पदादर्थबोधप्रसङ्गापत्तेः। नापि सामान्यतो ज्ञातस्सन् स सङ्केतोऽर्थबोधजनकः। प्रमेयत्वादिना तत्सङ्केतज्ञानेऽपि तदर्थबोधप्रसङ्गापत्तेः, नापि सङ्केतत्वेन सङ्केतज्ञानं तदर्थविषयशाब्दबोधजनकं भवितुमर्हति, गवादि-पदेषु ईश्वरसङ्केतत्वेन सङ्केतज्ञानविरहवतां लौकिक-मीमांसकादीनां तत्तदर्थबोधजनकत्वग्रहवतां बोधोदयेन तत्रेश्वरसङ्केते व्यभिचारस्य सत्त्वात्। न चार्थधीजनकतावच्छेदकत्वेन सङ्केतस्य ज्ञानं तदर्थविषयकशाब्दबोधे कारणमिति वाच्यम्। ततोऽपि लाघवेन अर्थधीजनकतात्वेन हेतुतायामस्मत्पक्षसिद्धेः।

न च बोधकताज्ञानाभावतोऽपि यज्ञदत्तस्याधुनिकसङ्केतितदेवदत्तादि-पदेभ्यो देवदत्ताद्यर्थबोधस्य संकेतज्ञानादेव दर्शनेन व्यभिचारान्न बोधजनकत्वरूपबोधकत्वज्ञानस्य तं प्रति कारणत्वम्, अन्वय-व्यतिरेकयोरेव कारणत्वस्य नियामकत्वात्। अन्यथा दण्डस्य पटम्प्रति कारणत्वापत्तेः। तुरीवेमादेरिव दण्डस्य पदार्थत्वाविशेषादिति वाच्यम्। संकेतमात्रादर्थबोधस्थलेऽपि इदं पदमिममर्थं बोधयत्वितीच्छाग्रहस्य तदर्थबोधकत्व-प्रकारक-पदविशेष्यकत्वेन बोधकत्वज्ञानस्य तत्रापि सत्त्वमिति व्यतिरेक-व्यभिचाराभावेन बोधकता-ज्ञाने कारणत्वस्य तदर्थ-विषयक-बोधम्प्रति सत्त्वात्। तत्सत्त्वे (कारणसत्त्वे) तत्कार्यसत्ता कारणाभावे कार्याभाव इति अन्वयव्यतिरेकौ। कारणत्वेनाभिमतस्य सत्त्वे कार्यसत्ता इत्यन्वयः कारणत्वेनाभिमतस्याभावे कार्यभाव इति व्यतिरेकः। कारणसत्त्वे कार्याभाव इत्यन्वयव्यभिचारः, कारणाभावे कार्यसत्तेति व्यतिरेकव्यभिचारः, इत्यन्वय-व्यभिचारस्य व्यतिरेकव्यभिचारस्य चोभयस्य प्रकृतेऽसत्त्वेन बोधकताज्ञानस्य पद-विशेष्यकबोधजनकत्व-प्रकारक-ज्ञानरूपसङ्केतज्ञाने घटकतया सत्त्वेन तत्राप्यन्वयव्यतिरेकयोः सत्त्वमिति बोधकताज्ञाने तदर्थविषयकबोधं प्रति कारणत्वस्य सत्त्वात्।

न च घटपदं न पटविषयकबोधजनकमिति ज्ञानवतोऽपि पुरुषस्य घटपदात्पटोऽनेन बुद्ध इति जानतो घटपदात्पटविषयकबोधापत्तिः, पटविषयक-बोधजनकत्वस्याभावे विशेषणीभूतस्य ज्ञानसत्त्वात्, अत इतरविशेषणं यद्बोधकत्वं तज्ज्ञानस्यैव शाब्दबोधम्प्रति कारणत्वं वक्तव्यं तथा 'चेदं पदमिममर्थं बोधयतु' इति सङ्केतितज्ञाने बोधकत्वस्येच्छारूपसङ्केतविशेषणत्वेन स्वातन्त्र्येण बोधकत्वज्ञानाभाव इति नोक्तदोष इति वाच्यम्। नेदं तद्धीजनकमिति (घटपदं न पटविषयकबोधजनकम्) बाधकज्ञानसत्त्वेन तद्बोधापत्तेरभावात्। नेदं रजतमिति ज्ञानवतोऽनेन शुक्तौ रजतं ज्ञातमिति ज्ञानवतो भ्रान्तत्वापत्तेः। अत इतरविशेषणीभूतार्थबोधकत्वज्ञानमेव शाब्दबोधम्प्रति कारणं वक्तव्यं तथा चेदम्पदमेतदर्थबोधं जनयत्वितीच्छाज्ञाने बोधकत्वस्येच्छाविशेषणत्वेनेतरविशेषणीभूतार्थबोधकत्वज्ञानाभावेन न ततो बोधापत्तिरिति हृदयम्।

ननु यत्रेदं पदमेनमर्थं बोधयत्वितीच्छारूपसङ्केतमात्राद् बोधो न तु तादृशसंकेतज्ञानात्तत्र बोधकताशक्तिवादिमते व्यतिरेकव्यभिचारो दुरुद्धर एव। तद्भावे तद्भावस्य कारणाऽभावे कार्याभावस्य वा तत्र सत्त्वे न बोधकताज्ञाने

तम्प्रति कारणत्वस्य ग्रहीतुमशक्यत्वात्। बोधकता-ज्ञानाभावेऽपि शाब्दबोधरूप-कार्यसत्त्वेन भवति व्यतिरेकव्यभिचारः। न चेदम्पदमेतदर्थविषयकबोधं जनयत्वितीच्छारूपसंकेतघटके बोधयत्वित्यत्र णिजर्थो जनकत्वं तथा च तदर्थविषयकबोधजनकत्व-प्रकारक-पदविशेष्यकेच्छा-घटकबोध-जनकत्वस्य प्रविष्टत्वेन सङ्केतज्ञानमेव बोधकताज्ञानमिति वाच्यम्। सविषयकज्ञानस्य तद्विषय-विषयकत्वेऽपि तद्विशेष्यांशे तत्प्रकारो न तेन विषयीक्रियते "घटमहं जानामि" इत्यनुव्यवसायेन ज्ञानांशे घटत्वप्रकारकत्व-घटविशेष्यकत्वयोरेव विषयीकरणात्। अन्यथा अभ्रान्तस्य भ्रान्तज्ञस्य भ्रान्तत्वापत्तिरनिवार्यैव स्यात्।

अयं तद्भाववन्निष्ठ-विशेष्यता-निरूपित-तन्निष्ठ-प्रकारताशालिज्ञानवानिति ज्ञाने तदभाववद्विशेष्यकत्व-तत्प्रकारकत्वयोः सत्त्वेन तज्ज्ञानस्य भ्रमत्वापत्त्या तज्ज्ञानवतो भ्रान्तिज्ञस्य भ्रान्तत्वापत्तिर्दुर्वारा स्यात्, मम तु नोक्तदोषः, अयं तद्भाववन्निष्ठविशेष्यता- निरूपित- तन्निष्ठप्रकारताशालिज्ञानविषयक- ज्ञाने तत्प्रकारकत्व-तद्विशेष्यकत्वयोरेव विषयत्वं न तु तद्-भाववन्निष्ठ-विशेष्यता-निरूपित-तन्निष्ठप्रकारतयोरिति न भ्रान्तिज्ञस्य भ्रान्तत्वमिति। अत एव शब्दचिन्तामणौ तात्पर्य-विषयसंसर्गज्ञानपूर्वकत्वस्य पदपक्षकानुमानेन सिद्धावपि नेतरपदार्थेऽभिमता परपदार्थ-संसर्ग-सिद्धिस्तादृशसंसर्ग-ज्ञानपूर्वकत्वानुमानेन तत्पदार्थतात्पर्याविषय-संसर्गस्याविषयीकरणादित्यस्वरसात् पदार्थपक्षकानुमान-मवतारितं पक्षधरमिश्रैरिति चेन्न। यत्रेदम्पदमेनमर्थं बोधयत्विति संकेत-मात्राच्छाब्दबोधस्तत्र बोधकता-शक्तिमते व्यभिचारो दुरुद्धर एवेति यदुक्तं तत्-कथनस्याप्रसङ्गतत्वात्।

तथा हि—बोधजनकत्वस्येच्छाविशेषणत्वेन इतराविशेषणीभूतबोध-जनकत्वज्ञानाभावेऽपि शाब्दबोधरूपव्यतिरेकव्यभिचारेण बोधकताज्ञानं शाब्द-बोधम्प्रति न कारणं कारणता-ग्राहकान्वय-व्यतिरेकयोरसत्त्वेन बोधकताज्ञानस्य शाब्दबोधं प्रत्यकारणत्वादिति पूर्वपक्षे वादी प्रतिप्रष्टव्यः, तत्र शाब्दबोधो भवतीत्यत्र प्रमाणाभावेन तादृश-व्यभिचारस्य कथयितुमशक्यतया बोधकताज्ञाने शाब्दबोधं प्रति कारणत्वस्यावश्यकत्वात्। किञ्च यस्माद्यज्जन्यते तदनुकूला शक्तिस्तत्र कल्प्यत इति विशेषमीमांसकमते बोधकता शक्तिस्तत्र कल्प्यतां किन्तु तत्राऽज्ञाता सा शक्तिः स्वकार्यजनिका भवतीतराविशेषणीभूतस्य बोधकत्व-स्येदम्पदमेनमर्थम्बोधयतु इत्यत्रैतदर्थबोधजनकत्व-प्रकारकेच्छा-विशेष्यक-मेतत्पदमिति ज्ञानमितराविशेषणत्वेन बोधजनकतायास्तत्र तव मतेऽभावेऽपि। यस्माद्यज्जन्यते तदनुकूला शक्तिस्तत्र कल्प्यत इति मते तत्राज्ञातायाश्शक्तेः

सत्त्वान्न व्यतिरेकव्यभिचार इति। एवञ्च क्वचिज्ज्ञाता शक्तिरुपयुज्यते क्वचिच्च ज्ञातोपयुज्यते। यथा कुब्जाशक्तिवादी श्रीकर एव दृष्टान्तः। तन्मतञ्च। व्यक्तिशक्तावस्माकं न वैमत्यम्, अपि तु व्यक्ति-शक्ति-ज्ञानत्वेन हेतुतायामेव वैमत्यम्। अत एव व्यक्त्यंशे कुब्जाशक्तिरिति गीयते (वाच्यत्वव्यवहाराजनिका शक्तिरिति गीयते) यद् विषयकत्वेन शक्तिज्ञानस्य तद्विषयक-शाब्दधीजनकत्वं तत्त्वमेव वाच्यताव्यवहार-नियामकम्, अन्वयांशे कुब्जाशक्ति-सत्त्वेऽपि यथाऽन्वयविषयकत्वेनान्वयज्ञानस्य नान्वयबोधजनकत्वं तथा व्यक्त्यंशे शक्तिसत्त्वेऽपि न व्यक्तिविषयकत्वेन व्यक्तिविषयकज्ञानस्य शाब्दबोधजनकत्वम्, किन्तु गोत्वादि-जाति-विषयकत्वेन गोत्वादि-जातिविषयक-शक्तिज्ञानस्य जातिविषयक-शाब्दबोधम्प्रति कारणत्वमिति गवादिपदानां गोत्वजाति-वाचकत्वमुपपन्नम्, गोत्वस्य च वाच्यत्वमुपपन्नम्। घटपटादावाकाशस्यैक-सम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयतीत्युपस्थित्या शाब्दबोधवारणाय शक्त्युपस्थितेरावश्यकत्वम्, अतोऽन्वये व्यक्तौ च वाच्यत्वव्यवहाराजनिका कुब्जाशक्तिः पदे स्वीक्रियते दृष्टान्तदार्ष्टान्तिकयोः सर्वथाऽसाम्येन बोधकताशक्तिः क्वचिज्ज्ञाता क्वचिच्चाज्ञाता शाब्दबोधोपयोगिनी सर्वत्र शक्तेर्विषयस्य वाच्यत्वमुपपद्यते। इदञ्चार्थ-धीजनकम्पित्रादि-संकेतज्ञानाद् गृह्यते, अतस्तज्ज्ञानात्पूर्वं न बोधो भवति।

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा।।

इत्यत्रानादिबोधकत्वस्य शक्तिरूपस्य ज्ञानं मीमांसकानामपि भवति। अध्यापकरूपाप्तमिदम्पदमेतदर्थबोधकमिति शिष्यमुपदिशति ततश्चानादि-बोधकताशक्तिज्ञानं जायते। न च शक्तिरूपसङ्केतज्ञानादिदम्पदमेनमर्थं बोधयत्वितीच्छाज्ञानादर्थज्ञानं यत्र जायते तत्रेतराविशेषणीभूतबोधकत्वस्या-ज्ञातत्वेन व्यतिरेकव्यभिचार इति वाच्यम्। यत्र बोधकतारूपशक्तिज्ञानमात्रात्तदर्थ-बोधो न सङ्केतज्ञानात्तत्र सङ्केतज्ञानेऽपि व्यतिरेकस्य तुल्यत्वात्। किञ्च तादृशस्थले बोधस्याप्रामाणिकत्वेन बोधकता-शक्तिवादिमते व्यतिरेक-व्यभिचारोऽपि न सम्भवति। किञ्च ज्ञाता बोधकतैव कारणमस्तु। बोधकता च क्वचिज्ज्ञाता क्वचिच्चाज्ञाता शाब्दबोध उपयुज्यते। अस्मन्मते इव तन्मते न निर्वाहः सर्वत्र सङ्केतज्ञानस्यैव शाब्दज्ञाने उपयोगित्वस्वीकारात्। न च शक्येव शक्तिग्राहकव्यवहारादेर्लक्ष्येऽपि तुल्यत्वमिति लाक्षणिकार्थबोधस्य बोधकता शक्यैव निर्वाहे तव मते लक्षणोच्छेदापत्तिरिति वाच्यमिष्टत्वात्।

ननु शक्य-लक्ष्य-व्यवहारानुपपत्यालक्ष्यव्यावृत्तैव बोधकताशक्तिर्वाच्या तथा च लक्ष्योपस्थितये लक्षणावृत्तिरावश्यकीति कथमिष्टापत्ति: सङ्गच्छत इति चेन्न। बोधकताया लक्षणायाश्चोभयो: वृत्तित्वकल्पने कार्यकारणभावद्वयं कल्पनीयं भवति तथा च लक्षणाया वृत्तित्ववादिमते गौरवमस्माकम्, पुन: शक्तिजन्योपस्थितित्वेनैव शाब्दबोधम्प्रति कारणत्वमिति लाघवम्। किञ्च शक्तिलक्षणयोर्वृत्तित्ववादिमते गौरवान्तरस्य सत्त्वेन तादृशगौरवं सोढव्यमिति कथयितुमशक्यत्वात्। तथा हि—तदर्थ-विषयक-बोधम्प्रति शक्तिजन्योपस्थिति: कारणम् क्वचिच्च लक्षणाजन्योपस्थिति: कारणमिति कार्यकारणभावद्वयम्भवति। यथा 'गङ्गायां घोष:' इत्यत्र घोषाधारत्वस्य गङ्गापदार्थे विलक्षणजले बाधेन लक्षणया तीरे घोष इति बोधस्तत्र लक्षणया तीरस्योपस्थितिस्तया च तथा शाब्दबोधो भवति। गङ्गायां मत्स्य: प्रतिवसतीत्यत्र शक्त्या विलक्षण-जलोपस्थित्या पुण्यजनकत्वोपलक्षितजलाधिकरणको मत्स्यकर्तृको वास इति बोधो भवति। तत्रोपस्थित्यो: परस्परव्यभिचारस्य वारणाय शक्तिज्ञानजन्य-गङ्गापदजन्यपुण्यजनकतावच्छेदकत्वोपलक्षित-धर्मावच्छिन्नजलोपस्थित्य-व्यवहितोत्तर-जायमान-गङ्गापदार्थविषयकशाब्दबोधं प्रति गङ्गापदजन्यशक्ति-ज्ञान-जन्य-गङ्गापदजन्य-विलक्षण-जलोपस्थिति: कारणम्। गङ्गापदजन्य-लक्षणाज्ञानजन्यलक्ष्यार्थ-विषयकोपस्थित्यव्यवहितोत्तर-जायमानलक्ष्यार्थ-विषयक-शाब्दबोधं प्रति लक्षणाज्ञानजन्यलाक्षणिकार्थोपस्थिति: कारणमिति कार्यकारणभाव:। लक्षणाया: वृत्तित्वस्वीकारे शक्तिजन्योपस्थितिं विनाऽपि लक्षणाज्ञानजन्योपस्थित्या 'गङ्गायां घोष:' इत्यत्र शाब्दबोधोदयेन शक्तिजन्योपस्थितौ व्यतिरेकव्यभिचार:, एवं 'गङ्गायां मत्स्य:' इत्यत्र लक्षणाज्ञानजन्योपस्थितिं विनाऽपि शक्तिज्ञानजन्योपस्थित्या विलक्षणजले मत्स्य इति बोधोदयेन व्यतिरेकव्यभिचारस्तद्-व्यभिचारवारणाय कार्यता-वच्छेदककोटावव्यवहितोत्तरनिवेश इति गौरवम्, भवतां लक्षणाया वृत्तित्ववादिनां सह्यमपि। परन्तु कार्यं विना कार्याव्यवहितोत्तरत्वनिवेश: कर्तुमशक्य:।'

ननु स्वध्वंसाधिकरणलक्षणानुत्पत्तिकत्वे सति स्वाधिकरणक्षणध्वंसा-धिकरणक्षणोत्पत्तिकत्वमव्यवहितोत्तरत्वम्। एतादृशाव्यवहितोत्तरत्वसम्बन्धेन तत्तदुपस्थितिमत्त्वं कार्यतावच्छेदकं, तत्तदुपस्थितित्वञ्च कारणतावच्छेदकम्। तथा च तदुपस्थितिमन्तं प्रति तदुपस्थिति: कारणमिति कार्यकारणभावे न परस्परव्यभिचार:। प्रकृते लक्षणाज्ञानजन्योपस्थितिजन्यशाब्दबोधे तादृशा-

व्यवहितोत्तरत्वसम्बन्धेन शक्तिज्ञानजन्योपस्थितिवैशिष्ट्याभावेन न तत्कार्यतावच्छेदकाक्रान्तत्वमिति न व्यभिचारः। एवं शक्ति-ज्ञानजन्योपस्थितिजन्यशाब्दबोधे लक्षणाज्ञानजन्योपस्थितिवैशिष्ट्यभावेन न तत्कार्यतावच्छेदकाक्रान्तत्वमिति न व्यभिचारः। अत्र सध्वंसाधिकरणेत्यादौ स्वपदं शक्तिज्ञानजन्योपस्थितिपरम्। लक्षणाज्ञानजन्यपदार्थोपस्थितिप्राग्वर्ति-शक्ति-ज्ञानजन्यपदार्थोपस्थितिजन्यशाब्दबोधे व्यभिचारवारणाय स्वाधिकरण-क्षणध्वंसाधिकरणक्षणोत्पत्तिकत्वमिति विशेष्यदलम्। तथा च लक्षणाज्ञानजन्योपस्थितिप्राग्वर्तिशक्तिज्ञानजन्योपस्थितिजन्यशाब्दबोधे स्वाधिकरण-क्षणध्वंसाधिकरणक्षणोत्पत्तिकत्वाभावेन न तं शाब्दबोधमादाय व्यतिरेकव्यभिचारः। शक्तिज्ञानजन्योपस्थितिजन्यशक्यविषयक-शाब्दबोधानन्तरभाविलक्षणाज्ञानजन्योपस्थितिजन्यशाब्दबोधे व्यभिचारवारणाय सध्वंसाधिकरणक्षणानुत्पत्तिकत्वे सतीति सत्यन्तस्योपादानम्। एवं शक्तिज्ञानजन्योपस्थितिजन्यशाब्दबोधे तादृशाव्यवहितोत्तरत्वसम्बन्धेन लक्षणाज्ञानजन्योपस्थितिवैशिष्ट्याभावेन न तत्कार्यतावच्छेदकाक्रान्तत्वमिति न व्यतिरेकव्यभिचार इति चेन्न। एवं सति स्वत्वस्य तत्तद्व्यक्ति-विश्रान्तत्वेनाननुगततया — स्वघटिताव्यवहितोत्तरत्वसम्बन्धेनोपस्थितिमत्त्वस्य कार्यतावच्छेदककोटौ निवेशे कार्यकारणभावस्यानन्त्यापत्तेः। अस्माद्दोषान्न तादृशकार्यकारणभावो वक्तव्यः। तथा च प्रागुक्तपरस्परव्यभिचारस्य शक्तिज्ञानजन्योपस्थितिः लक्षणाज्ञानजन्योपस्थित्योः सत्त्वेन न कस्या अपि उपस्थितेः शाब्दबोधम्प्रति कारणत्वं सेत्स्यति। अतो न लक्षणाया वृत्तित्वं मन्तव्यम्, किन्तु केवलबोधकतैव वृत्तिरिति न कोऽपि दोषः।

किञ्च शक्तिज्ञानं विनाऽपि लक्षणाज्ञानजन्यपदार्थोपस्थितिः, एवं लक्षणाज्ञानं विनाऽपि शक्तिज्ञानजन्यपदार्थोपस्थितिस्तयोरुपस्थितिहेतुतायां परस्परव्यभिचारः। तद्व्यभिचारवारणाय पूर्वोक्ताव्यवहितोत्तरत्वसम्बन्धेन तत्तत्कारणवैशिष्ट्यं तत्तत्कार्यतावच्छेदककोटौ निवेशे च पूर्वोक्तानन्त्यप्रयुक्तं गौरवमिव गौरवम्भवति। ननु बोधकताशक्तिवादिनस्तवापि गङ्गापदम्प्रवाहबोधकमिति शक्तिग्रहान्न तीरोपस्थितिर्न वा तद्विषयकः शाब्दबोधः, एवं गङ्गापदं तीरस्य बोधकमिति शक्तिग्रहान्न प्रवाहोपस्थितिर्न वा तद्विषयकशाब्दबोधः। एवञ्च गङ्गापदम्प्रवाहबोधकमिति शक्तिग्रहाभावेऽपि गङ्गापदं तीरस्य बोधकमिति शक्तिग्रहात्तीरोपस्थित्या गङ्गापदम्प्रवाहबोधकमिति शक्तिज्ञाने व्यतिरेकव्यभिचारः, गङ्गापदं तीरबोधकमिति शक्तिग्रहात्तीरोपस्थितौ न प्रवाहोपस्थितिरिति पूर्ववद् व्यतिरेकव्यभिचारस्तद्वारणाय पूर्ववदव्यवहितोत्तर-

सम्बन्धेन तत्तत्कारणवैशिष्ट्यस्य कार्यतावच्छेदककोटौ निवेशः कर्त्तव्यः, एवं रीत्योपस्थितिशाब्दबोधयोः व्यभिचारवारणाय तत्कारणवैशिष्ट्यं कार्यतावच्छेदककोटौ निवेश्यमिति द्वितीयमानन्त्यमिति चेन्न। गङ्गापदं तीरे शक्तमिति भ्रमदशायां तीरोपस्थित्यादेः सर्वमतसिद्धतया लक्षणाया वृत्तित्वं स्वीकर्तुस्तवापि तत्तदर्थभेदेन कार्यकारणभावान्त्यस्य साम्यात्। तथा हि गङ्गापदे शक्तिभ्रमज्ञानं गङ्गापदात्तीरोपस्थितिम्प्रति कारणं गङ्गापदे शक्तिप्रमाज्ञानं गङ्गापदात्प्रवाहोपस्थितिम्प्रति कारणमिति गङ्गापदे शक्तिज्ञानात्मकभ्रमाभावेऽपि गङ्गापदे शक्तिभ्रमाधीनगङ्गापदात्तीरोपस्थितिर्दृश्यत इति व्यतिरेकव्यभिचार-वारणाय तत्तत्कारणवैशिष्ट्यं तत्तत्कार्यतावच्छेदककोटौ निवेश्यम्। तच्च वैशिष्ट्यमव्यवहितोत्तरत्वसम्बन्धेन वक्तव्यमव्यवहितोत्तरत्वञ्च स्वत्वघटितं तत्कृतमानन्त्यं गलेपतितम्। एवं तत्तदुपस्थित्या तोस्तत्तच्छाब्दबोधयोः कार्यकारणाभावे परस्परव्यतिरेकव्यभिचारवारणाय तयोस्तत्तच्छाब्दबोध-रूपकार्यतावच्छेदककोटौ तत्तदुपस्थितिरूपकारणवैशिष्ट्यम्, अव्यवहितोत्तरत्व-सम्बन्धेन वाच्यम्। अव्यवहितोत्तरत्वञ्च स्वत्वघटितम्पूर्वोक्तं स्वत्वञ्च तत्तद्व्यक्ति-विश्रान्तमिति पूर्वदर्शितमानन्त्यं समानं लक्षणायाः पृथग् वृत्तित्ववादिनस्तवा-तिरिक्तं गौरवमधिकमिति तव मते गौरवस्याधिक्यात्।

अथ सङ्केतो लक्षणा चार्थे पदवृत्तिशक्तिवादस्य हरिनाथिटीकायां 'चकारार्थः समुच्चयः', तच्च धीविशेषविषयत्वं द्वित्वं पर्यवसितम्। इत्थं शक्तिरेका इयं लक्षणैकेति इमौ द्वाविति बुद्धिविशेषविषयत्वं द्वित्वम्। वृत्तिश्च शाब्दबोधोपयोगिकस्सम्बन्धः। तथा चार्थप्रतियोगिकपदानुयोगिकमर्थानुयोगिकं पदप्रतियोगिको वा तादृशसम्बन्धस्सङ्केतलक्षणाद्वयमित्यर्थः। तथा चेदं पदमेतदर्थबोधं जनयतु, किं वाऽस्माच्छब्दादयमर्थो बोधव्य इत्याकारक-सङ्केतश्शक्तिस्पदपदार्थविषयकेच्छारूपपूर्वसङ्केतः पदविशेष्यकः पदञ्च सङ्केतार्थविशेष्यकं लक्षणा च शक्यसम्बन्धेति मुक्तावल्यां दृश्यते। तथा चेदम्पदमेतदर्थशक्यसम्बन्धं, किं वा अयमर्थ एतत्पदशक्यार्थसम्बन्धीति पदपदार्थविशेष्यिका लक्षणा बोध्या। एवञ्च वृत्तिजन्योपस्थितित्वेनैकेनैव शाब्दबोधहेतुता, वृत्तिज्ञानत्वेनैवोपस्थितिकारणतेति मया वाच्यमिति लक्षणाया वृत्तित्वस्य स्वीकारेऽपि नाधिकं गौरवमिति चेन्न। शक्तिलक्षणोभयसाधारणस्य वृत्तित्वस्य दुर्वचत्वेन तद्धर्मप्रकारक-तद्विशेष्यक-बोधम्प्रति वृत्तिज्ञानजन्य-तत्प्रकारकतद्विशेष्यकोपस्थितिः कारणमित्यनुगतकार्यकारणभावस्य कथयितु-मशक्यत्वात्। न च कथमसङ्गतमिति वाच्यम्। शक्तिलक्षणोभय-

साधारणवृत्तित्वस्य दुर्वचत्वेनाऽनुगततादृशकार्यकारणभावस्य दुर्वचत्वात्। न च शक्तिलक्षणान्यतरत्वमनित्यतरत्वमुभयसाधारणमनुगतमिति तत्प्रकारक-तद्विशेष्यकशाब्दबोधम्प्रति शक्तिलक्षणान्यतरत्वरूपवृत्तित्वावच्छिन्नविषयकज्ञानस्य कारणत्वमित्यनुगतकार्यकारणभाव: सम्भवतीति वाच्यम्। शक्तिलक्षणान्यतरत्वं वृत्तित्वं त्वया वाच्यं तच्चान्यतरत्वं शक्तिभिन्नत्वे सति लक्षणाभिन्नं यत्तद्-भिन्नत्वं रूपं तत्र जगत: प्रवेशेन गौरवमिति तव मते पूर्वोक्त-कार्यकारणभावस्याऽनुगतस्याऽभावात्।

न च कथं जगत्-प्रवेश इति वाच्यम्। शक्तिभिन्नत्वे सति लक्षणाभिन्नत्वेन घटपटादीनां सर्वेषामनुयोगितया शक्तिभिन्नत्वे सति लक्षणाभिन्नं यत्तद्भिन्नत्वेन प्रतियोगितया घटपटादीनां सर्वेषां जगतां प्रवेशेन गौरवात्। न चान्यतरत्वं जातिरिति शक्तिलक्षणान्यतरत्वे न कारणत्वेन गौरवमिति वाच्यम्। अन्यतरत्वस्य जातिरूपाभावात्। नित्यत्वे सत्यनेकसमवेतत्वं जातित्वमिति समवायेन तस्यावृत्तित्वेन जातित्वाभावात्। शक्तिभिन्नत्वे सति लक्षणाभिन्नं यत्तद्भिन्नत्वरूपान्यतरत्वरूपवृत्तित्वस्य स्वरूपसम्बन्धेन वृत्तित्वमिति तत्रान्यतर-रूपवृत्तित्वे समवेतत्वाभावेन तस्य जातित्वाभावात्। प्रमाणाभावेन तस्य जातित्वाभावाच्च।

न च शाब्दबोधहेतुपदार्थोपस्थित्यनुकूलपदपदार्थसम्बन्धत्वं वृत्तित्व-मनुगतं तेन रूपेण शाब्दबोधम्प्रति कारणत्वेन गौरवमिति वाच्यम्। बोधकताशक्तित्वमपेक्ष्य गौरवस्याऽत्रापि सत्त्वात्। गुरुधर्मावच्छिन्नकारणत्वे लाघवस्य सत्त्वात्। किञ्च, शाब्दबोधानुकूलत्वस्य तद्गमकत्वस्य कारणता-वच्छेदकोपस्थित्यधीनत्वेन, तस्य च पदवृत्तिज्ञानजन्योपस्थितित्वात्मकतया तज्ज्ञानस्य स्वघटकवृत्तित्वज्ञानं विनाऽसम्भवेन कार्यकारणभावस्य दुर्घटत्वात्। तथा हि। वृत्तित्वग्रहे शाब्दबोधपदार्थोपस्थित्यो: कार्यकारणभावग्रह:, तद्ग्रहे च शाब्दबोधहेतुपदार्थोपस्थित्यनुकूलपदपदार्थसम्बन्धत्वरूपग्रह इति परस्पराश्रयेण शाब्दबोधहेतुपदार्थोपस्थित्यनुकूलपदपदार्थसम्बन्धत्वरूपवृत्तिग्रहासम्भवात्।

ननु लक्षणावादिनो मम शक्यलक्ष्योपस्थितिम्प्रति शक्तिज्ञानत्वेनैव हेतुता, शक्यसम्बन्धरूपलक्षणायां शक्ते: प्रवेशेन लक्षणाज्ञाने शक्ते: प्रविष्टत्वादिति चेन्न। शक्तिज्ञानपदार्थोपस्थित्यो: कार्यकारणभावे समानविषयत्वस्यावश्यकत्वेन शक्तिलक्षणाज्ञानयो: शक्तिज्ञानत्वेनोपस्थितिम्प्रति कारणत्वासम्भवात्। तदर्थविषयकोपस्थितिम्प्रति तदर्थनिरूपिततत्पदनिष्ठशक्तिज्ञानत्वेनावश्यकत्वात्। शक्तिज्ञानपदार्थोपस्थित्यो: कार्यकारणभावे समानविषयकत्वस्यानुपादाने

लक्षणाऽग्रहवतः प्रवाहरूपार्थनिरूपितबोधकत्वशक्तिं गङ्गापदे जानतोऽपि गङ्गायां घोष इति वाक्यात्तीरबोधप्रसङ्गः, शक्तिज्ञानस्य तीरोपस्थापकस्य सत्त्वेन तद्द्वारकशाब्दबोधापत्तिप्रसङ्गस्स्यात्। शक्ति-ज्ञान-पदार्थोपस्थित्योः समान-विषयकत्वनिवेशे च नोक्तदोषः। तीरोपस्थितिं प्रति गङ्गापदे तीरनिरूपित-शक्तिज्ञानं कारणं न तु गङ्गापदे प्रवाहनिरूपितशक्तिज्ञानं कारणमिति न गङ्गापदे प्रवाहनिरूपितबोधकत्वशक्तिग्रहवतो गङ्गापदे लाक्षणिकगौणतीरनिरूपित-बोधकताशक्तिग्रहाभाववतः पुरुषस्य गङ्गापदे प्रवाहार्थनिरूपितबोधकताशक्ति-ज्ञानात्तीरोपस्थितिर्न वा तीरे घोष इति गङ्गायां घोष इति वाक्याज्जायते गङ्गापदे प्रवाहनिरूपितशक्तिज्ञानस्य गङ्गापदजन्यतीरोपस्थितिं प्रत्यकारणत्वात्। न हि कारणं विना कार्योत्पत्तिर्भवति। अन्यथा जगति व्यवहारो विलुप्येत। घटार्थी घटकारणमृत्तिकायाम्प्रवर्तते न घटाकारणे तुरीवेमादौ, कारणं विना कार्यं यद्युत्पद्येत तदा तुरीवेमादिभ्योऽपि घट उत्पद्येत, घटार्थी तुरीवेमादावपि प्रवर्तेत, न प्रवर्तते, अतस्तदर्थिनस्तत्कारणे प्रवृत्तिदर्शनेन न कारणं विना कार्योत्पत्तिर्भवतीति मन्तव्यम्।

ननु गङ्गापदे तीरनिरूपितबोधकताशक्त्यग्रहवतः प्रवाहरूपार्थ-निरूपितशक्तिग्रहवतः पुरुषस्य गङ्गायां घोष इति वाक्यात्तीरे घोष इति शाब्दवारणाय गङ्गापदं तीरविषयकशाब्दबोधम्प्रति गङ्गापदे तीरनिरूपित-बोधकताशक्तिज्ञानमेव कारणमित्येवास्त्विति वृत्तिज्ञानपदार्थोपस्थित्योः कार्य-कारणभावे समानविषयकत्वं मास्त्विति चेन्न। घटमानयेति वाच्यम्, हस्तिनश्च स्मरतो घटपटादिभ्यो घटादेर्गजाद्धस्तिपकस्य च समूहालम्बनस्मरणवतो घटानयनवद्धस्तिकस्यापि शाब्दबोधापत्तेः। समूहालम्बनरूपायाम्पदार्थोपस्थितौ पदजन्यत्वस्य सत्त्वात्। अत्र हस्तिपकस्मृतिर्वृत्तिज्ञानजन्या बोध्या। तदर्थविषयकशाब्दबोधम्प्रति वृत्तिज्ञानजन्यतदर्थविषयकोपस्थितिः कारणं तदर्थोपस्थितिम्प्रति पदज्ञानं कारणम्, न तु पदे तदर्थ-निरूपित-शक्तिज्ञानं कारणम्। तथा च प्रकृते घटपदनिष्ठघटार्थनिरूपितबोधकताशक्तिमज्ज्ञानजन्या घटोपस्थितिरानयपदनिष्ठानयननिरूपितबोधकताशक्तिमज्ज्ञानजन्या नयनोप-स्थितिः गजार्थ-निरूपितबोधकता-शक्तिमज्ज्ञानजन्यगजोपस्थितिर्गजोपस्थित्या च हस्तिपकस्यैकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयतीति नियमाद्धस्तिपकस्योप-स्थितिः, स्मरणात्मकं ज्ञानम्-तद्व्यवहितोत्तरजायमानम्प्रति तत्कारणमिति सर्वासां घटानयन-हस्तिहस्तिपक-विषयकोपस्थितीनां शक्तिज्ञानजन्यत्वं पदजन्यत्वं च वर्तेते। अम्पदात्कर्मणोपस्थितिः ङस्पदात्सम्बन्धस्योपस्थितिर्ह-

स्तिनो हस्तिपकस्यैकसम्बन्धिज्ञानेनोपस्थितिर्न तु हस्तिपकपदनिष्ठहस्तिपकार्थ-निरूपितबोधकताशक्तिमज्ज्ञानजन्य-हस्तिपकस्योपस्थितिः। तथा च घटकर्मकानयन-विषयक-शाब्दबोधकारणस्य तं तद्विषयकोपस्थितेर्हस्ति-तत्सम्बन्धिहस्तिपकोपस्थितेः च हस्ति-तत्सम्बन्धि-हस्तिपक-विषयक-शाब्द-बोधकारणस्य च सत्त्वेन घटकर्मकानयनं हस्तिसम्बन्धि-हस्तिपकमिति शाब्दबोधापत्तिः स्यात्। न चेष्टापत्तिः, हस्तिपकपदं हस्तिपकार्थबोधकता-शक्तिमदिति ज्ञानजन्यहस्तिपकोपस्थितेरभावात्। एतच्छाब्दवारणाय शक्तिज्ञानोपस्थित्योः कार्यकारणभावे समानविषयकत्वं वाच्यम्। तथा च विषयतासम्बन्धेन शाब्दबोधम्प्रति विषयतासम्बन्धेन तदर्थनिरूपित-वृत्तिज्ञानजन्यपदजन्यतदर्थविषयकोपस्थितिः कारणमिति वाच्यम्। एवञ्च हस्तिपकार्थनिरूपितशक्तिज्ञानजन्यहस्तिपकपदजन्यहस्तिपकोपस्थितेर्हस्तिपक-विषयकशाब्दबोधकारणस्यांशत्वेन न तद्विषयकगजसम्बन्धिहस्तिपक-विषयकशाब्दबोधः।

लक्षणाज्ञानस्य शक्तिज्ञानत्वेन न कारणत्वम्, असम्भवात्। गङ्गापदं प्रवाहार्थनिरूपितबोधकताशक्तिमदिति शक्तिज्ञानजन्यायाः लक्षणार्थविषयको-पस्थितेः विषयतासम्बन्धेन लाक्षणिकार्थेऽसत्त्वात् न शक्तिज्ञानाल्लाक्षणिकार्थो-पस्थितिर्भवितुमर्हति। तथा च शक्तिज्ञानं शक्यार्थोपस्थितिम्प्रति कारणं लक्षणाज्ञानं लाक्षणिकार्थविषयकोपस्थितिम्प्रति कारणमिति पृथक्पृथगेव शक्तिज्ञानलक्षणज्ञानयोस्तत्तदुपस्थितिं प्रति कारणत्वं वक्तव्यम्। पृथक्पृथगेव तत्तदुपस्थित्योस्तत्तच्छाब्दबोधौ प्रति कारणत्वं वक्तव्यमिति लक्षणायाः पृथक्शक्तित्वमिति वादिनो गौरवं स्फुटमेव प्रतिभाति। तदर्थविषयक-शाब्दबोधम्प्रति शक्तिज्ञानाधीनोपस्थितिः कारणं लक्षणाज्ञानाधीनोपस्थितिश्च कारणमिति एकं प्रति द्वयोः कारणत्वे भवति व्यतिरेकव्यभिचारः, तद्वारणाय कार्यतावच्छेदककोटावव्यवहितोत्तरत्वसम्बन्धेन कारणवैशिष्ट्यं निवेशनीयम्। अव्यवहितोत्तरत्वं स्वत्वघटितं पूर्वोक्तमिति तत्तदर्थभेदेनानन्त्यं लक्षणावादि-नामधिकमिति सूक्ष्मधिया बोध्यम्। एतेन शक्तिप्रयोज्यैवोपस्थितिहेतुरिति न लक्षणाज्ञाने कार्यकारणभावान्तरं लक्षणावादिनो ममापीति परास्तम्। शक्तेर्लक्षणकुक्षिप्रविशिष्टत्वेन लक्षणाजन्यार्थोपस्थितिम्प्रति प्रयोजकत्वेऽपि तदर्थनिरूपितत्वस्य शक्तौ लक्षणायाञ्च प्रवेशेन लाक्षणिकार्थोपस्थितिम्प्रति न शक्तेर्प्रयोजकत्वं सम्भवति, शक्तौ लाक्षणिकार्थनिरूपितत्वस्याऽसत्त्वात्। प्रयोजकत्वस्य शक्तिलक्षणोभयसाधारणस्य तत्तदर्थभेदेन शक्तिलक्षणयोर्भेदाद्

वक्तुमशक्यत्वात्। एवं शक्तिज्ञानजन्यलक्षणाज्ञानजन्योपस्थित्योस्तत्तदर्थ-विषयकयोरर्थभेदेन भिन्नतया शक्तिप्रयोज्यत्वस्योभयोपस्थितिसाधारणस्य वक्तुमशक्यत्वाच्च।

नन्वेवं भाषादितो बोधदर्शनाद् बोधकतारूपा शक्तिर्भाषादिशब्देऽपि स्यात्तथा च साधुता च स्यात्, शक्तत्वस्यैव साधुताया व्याकरणाधिकरणे प्रतिपादनादिति चेदत्र केचिद् गव्यादिभाषाशब्देन गवादिसाधुशब्दानुमानेन गवादिविषयकबोधो भवति। न बोधकताशक्तिर्भाषादिशब्देऽस्तीति न तस्य साधुत्वं शक्तत्वस्य तत्रासत्त्वात्।

ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः।
तादात्म्यमुपगम्यैव शब्दार्थप्रकाशकाः।।

तेऽपभ्रंशाः साधुशब्दविषयानुमानेनानुमीयमानसाधुशब्देनेति यावत्। गावीत्यादयोऽपभ्रंशाश्शब्दाः स्वार्थगवाद्यर्थविषयकशाब्दबोधकारणानि भवन्ति। पक्षान्तरमाह—तादात्म्यमिति। ते गाव्यादयोऽपभ्रंशाश्शब्दाः साधुगवादि-शब्दतादात्म्यप्रकारकज्ञानविषयतामापद्य गोपदे उच्चारणीये कारणापाटवेन गावीत्युच्चारितं वस्तुतो गोपदमेवेदमिति तादात्म्येन भासमाना गाव्यादिशब्दा गवादिरूपार्थस्य प्रकाशका इत्यर्थः। अपभ्रंशा गाव्यादयो न वाचका इत्यत्र युक्तिमाह—

न शिष्टैरनुगम्यन्ते पर्याया इव साधवः।
ते यतः स्मृतिमात्रेण तस्मात्साक्षाच्च वाचकाः।।

यतस्तेऽपभ्रंशा गाव्यादिशब्दाः साधवः पर्याया इव शिष्टैरिष्टसाधने भ्रमशून्यैः स्मृत्यादिना न प्रतिपद्यन्तेऽतो न वाचका गवाद्यर्थशक्ता भवन्ति। ते साधुष्वित्याद्युक्तमर्थं विशदयन्ति—

बम्बम्बेति यथा बालः शिक्ष्यमाणः प्रभाषते।
अव्यक्तं तद्विदां तेन व्यक्ते भवति निर्णयः।।

अव्यक्तमिति क्रियाविशेषणम्। यथा शिक्ष्यमाणः बालो बं बम्बेति अव्यक्तं यथा स्यात्तथा प्रभाषते, तेनाऽव्यक्तापभ्रंशशब्देन व्यक्ते साधुशब्दे सति निर्णयस्तदर्थशाब्दबोधो भवतीत्यर्थः।

एवं साधौ प्रयोक्तव्ये योऽपभ्रंशः प्रयुज्यते।
तेन साधुव्यवहितः कश्चिदर्थोऽप्यभिधीयते।।

एवमित्थम्, साधौ गवादिशब्दे प्रयोक्तव्ये यः पुरुषोऽपभ्रंशगाव्यादिशब्दं प्रयुङ्क्ते। तेनाऽसाधुशब्देन साधुव्यवहितः साधुस्मृतिद्वारकः कश्चित्प्रसिद्धोऽम्बादिरूपोऽर्थोऽभिधीयते बोध्यत इत्यर्थः। नन्वपभ्रंशा गाव्यादिशब्दाः साक्षात्स्वार्थवाचका इत्यत्र किं मानं शक्तिग्राहकव्यवहारस्य तुल्यत्वात्? यथा गामानयेत्युत्तमवृद्धेनोच्चारिते तदर्थमवगत्य गवानयने प्रवृत्ते मध्यमवृद्धे बालस्तदर्थज्ञानमेतच्छब्दं विनाऽनुपपन्नमिति समुदाये वाक्ये समुदायार्थनिरूपितशक्तिग्रहे याते पश्चाद् गां नय, अश्वमानयेत्यावापोद्वापाभ्यां गवार्थनिरूपितशक्तिं गोपदे, आनयनार्थनिरूपितशक्तिमश्वपदे गृह्णाति तथा गाव्यादिशब्दे अपभ्रंशशब्द-व्यवहाराच्छक्तिं गृह्णातीति चेत्सत्यम्।

तत्तद्देशभेदाद्भिन्नभिन्नेषु अपभ्रंशेषु शब्देषु शक्तिकल्पने सर्वदेशेषु एकसाधुशब्दे शक्तिकल्पनापेक्षया गौरवात्। न चापभ्रंशशब्दानां साधुशब्दपर्यायतुल्यताशङ्कया तेषां साधुशब्दपर्यायशब्दानां सर्वदेशेषु एकजातीयत्वेन विनिगमनाविरहेण सर्वेषु साधुशब्देषु शक्तिकल्पनं समीचीनम्, असमीचीनञ्च तत्तद्देशभेदेन भिन्नभिन्नेष्वपभ्रंशशब्देषु गौरवाच्छक्तिकल्पनम्। अन्यथा भाषाणां पर्यायतया गणनापत्तेः। नैयायिकमीमांसकादयः शक्तत्वं साधुत्वमिति मन्यन्ते। वैयाकरणा बोधकताशक्तिवादिनः पुण्यजनकता-वच्छेदकशक्तिमत्त्वं तु साधुत्वम्मन्यन्ते। शक्तत्वं वाचकत्वं तु साधुशब्दे वाऽसाधुशब्देऽविशेषं बोधकताशक्तेरुभयत्र बोधदर्शनेनापि शेषादिति ते वदन्ति।

पारम्पर्यादपभ्रंशा विगुणेष्वभिधातृषु।
प्रसिद्धिमागता येषु तेषां साधुरवाचकः।।

विगुणेष्वभिधातृषु सत्सु परम्परया येष्वर्थेषु प्रसिद्धिमागता अपभ्रंशास्तेषामर्थानां साधुशब्दोऽवाचक इत्यर्थः। तेन तेषामर्थानामपभ्रंशशब्दा वाचका भवन्तीत्यर्थापत्त्या आपतति।

देवीवाग्व्यवकीर्णेयमशक्तैरभिधातृभिः।
अनित्यदर्शिनां त्वस्मिन् वादे भवेद् विपर्ययः।।

देवीवाग् संस्कृतवाणी अशक्तैः करणापाटववद्भिः सम्यगुच्चारणेऽ-शक्तैरभिधातृभिरियं देववाणी व्यवकीर्णा उच्छिन्नानुपूर्वीका कृता अनित्यदर्शिनां शब्दानित्यत्ववादिनामस्मिन् वादे शक्तिविचारे बुद्धिविपर्ययः। एते संस्कृतशब्दा एव वाचका नान्येऽपभ्रंशशब्दा वाचका इति बुद्धिविपर्यय इत्यर्थः।

किञ्च विनिगमनाविरहात्संस्कृतशब्दे इव भाषाशब्देऽपि शक्तिः कथं न स्वीकार्या, न च भाषाशब्दानां देशभेदेन नानात्वात्सर्वेषु भाषाशब्देषु शक्तिकल्पनायां गौरवम्, सर्वत्र देशे संस्कृतशब्दानामेकत्वेन तत्र शक्तिकल्पने लाघवमिति वाच्यम्। संस्कृतवन्मैथिलीभाषायाः सर्वत्रैकत्वेन प्रत्येकं विनिगमनाविरहतादवस्थ्यात् संस्कृतमिव मैथिलीभाषायामपि शक्तिकल्पने गौरवाभावात्। किञ्च! सर्वासां तत्तद्देशीयभाषाणां सर्वदेशेषु एकत्वेन सर्वदेशीयापभ्रंशेषु शक्तिकल्पने गौरवाभावात्संस्कृतमिव तत्तद्देशीयभाषाशब्दे शक्तिकल्पनं विनिगमनाविरहाद्युक्तमेव। न च संस्कृतभाषासु शक्तिकल्पने सकलदेशशिष्टपरिगृहीतत्वमेव विनिगमकमिति वाच्यम्। बोधजनकतावच्छेदिकानुपूर्वी सा च घटादिपर्यायकलशादिशब्देष्विव भाषायामन्यान्यैवेति कस्तयोर्विशेषेति सूरिभिर्विभावनीयत्वात्। न च शक्तत्वाविशेषाद्घटपर्यायकलशादीनामिव गगरीत्यादिशब्दानां पर्यायतया गणनापत्तिरिति वाच्यम्। साधुशब्दानामेव कोशादौ विभागाभिधानेन साधुशब्दानामेव पर्यायत्वात्। किञ्च घटपर्यायत्वस्य गगरीत्यादिशब्दे इष्टत्वात्। यः शब्दो यत्रार्थे व्याकरणे व्युत्पादितः स शब्दस्तत्रार्थे साधुरिति संस्कृतशब्दस्येव नापभ्रंशशब्दस्य तदर्थसाधुत्वमिति बोध्यम्। साधुभिर्भाषितव्यमिति विधिः साधूनां पुण्यजननबोधनाय, पापजननबोधनाय—'नासाधुभिर्भाषितव्यमिति' निषेधस्तथा च पुण्यजननयोग्यत्वं साधुत्वम्, पापजननयोग्यत्वमसाधुत्वम्। तत्र जनकतावच्छेदिका जातिस्तज्ज्ञापकञ्च कोषादि व्याकरणादि चेति।

अथ बोधकता बोधजनकता च सा प्रयुक्तशब्दे एव स्वीकार्या, एवञ्च स्वशास्त्रविरोधो भवति, वैयाकरणानां तथा हि—बोधाव्यवहितपूर्ववर्तिशब्दनिष्ठा बोधकारणतारूपा वाच्या, सा कारणता च विद्यमानशब्दे एव स्वीकार्या न तु ततः स्मृतेषु शब्देषु ततो बोधाजननात्। एवञ्च रामो गच्छतीत्यत्र रामपदाद्रामरूपार्थस्य बोधः, संख्यायाश्च विसर्गाद्बोधः, गमनस्य च गच्छशब्दाद् बोधः कर्तुश्च तिशब्दाद् बोधो भवतीति तत्तद्बोधकता तत्तच्छब्देषु मन्तव्या भवति वैयाकरणानाम्। तथा च द्व्येकयोर्द्विवचनैकवचने सूत्रविरोधः, द्वित्वे वाच्ये द्विवचनमेकत्वे वाच्ये एकवचनम्, द्विवचनैकवचनसंज्ञे तु सुप्रत्ययस्यौप्रत्ययस्य च भवतः तान्येकवचनद्विवचनेति सूत्रात्ततश्च विसर्गस्मृतः सुप्रत्ययः संख्याबोधको न तु विसर्गः। एवं गच्छतीत्यत्र गमनबोधकः 'गम्' धातुः गम्लृ गतौ इति व्याकरणस्मृतेः कर्तृबोधकस्तिशब्दो न तु ततस्स्मृतो लशब्दः 'लः कर्मणि चेति' सूत्रं लकारस्य कर्तृवाचकत्वं

प्रतिपादयति न तु तत्स्थाने जायमानस्य तिशब्दस्येति स्वशास्त्रविरोधाद् बोधकताशक्तिर्न स्वीकार्येति चेत्, अत्र ब्रूमः। साधुशब्दान्तर्गतवर्णस्मारिता वाचका न वेति विप्रतिपत्तिर्भवति, तत्र विधिकोटिर्नैयायिकानां निषेधकोटिश्च वैयाकरणानाम्।

आदेशानां विसर्गादिति वादिनां मुख्यवाचकत्वबोधकत्वादीनां प्रत्ययादीनां स्वादिलकारादीनां गौणं कल्पितवाचकत्वं बोधकत्वमिति न तत्तत्सूत्रविरोधापत्तिः। न चादेशा बहवस्तेषां बोधकत्वे गौरवमादेशिनोऽल्पास्तेषां बोधकत्वे लाघवम्। एकस्यादेशिनो लकारस्य तिबादयोऽष्टादशादेशा भवन्तीति तेषाम्बोधकत्वे स्फुटं गौरवम्। 'एधाञ्चक्रे ब्रह्मे'त्यादावादेशलुगादेरभावरूपस्य बोधकत्वासम्भवाच्च। किन्तु तैः स्मृता लकाराः स्वादयश्च वाचका बोधकाः, लत्वस्य जातिरूपस्य शक्ततावच्छेदकत्वौचित्यानादव्यभिचाराच्च। आदेशानां भिन्नभिन्नतया व्यभिचारात् शक्ततावच्छेदकनानात्वाच्च। तव मते कर्तृबोधकास्तिबादयो बहवस्तेषां परस्परव्यभिचारस्तिशब्दस्य सत्त्वेऽपि भवतः भवन्तीत्यादितः कर्तुर्बोधात्। तद् व्यभिचारवारणाय कार्यतावच्छेदककोटौ कारणवैशिष्ट्यमव्यवहितोत्तरत्वसम्बन्धेन वाच्यमव्यवहितोत्तरत्वञ्च स्वत्व-घटितमिति भवत्यानन्त्यदोषः स्वत्वस्य तत्तद्व्यक्तिपरत्वादादेश-बोधकवादिकानामव्यवहितोत्तरत्वञ्च। स्वध्वंसाधिकरणक्षणानुत्पत्तिकत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणोत्पत्तिकत्वमिति वाच्यम्। आदेशिनामपि तत्तद्वैयाकरणैः स्वेच्छया भिन्नभिन्नानामभ्युपगमने नानात्वमिति तवापि परस्परव्यभिचारस्तद्वारणाय कार्यतावच्छेदककोटौ अव्यवहितोत्तरत्वसम्बन्धेन कारणवैशिष्ट्यनिवेश इत्यानन्त्यदोषस्य समानत्वात्। आदेशानां प्रयोगान्तर्गतत्वेन नियतत्वमिति तेषां शक्तत्वं बोधकत्वञ्च युक्तम्। आदेशिनां व्याकरणभेदेन भिन्नत्वमिति कः शक्तः को नेति व्यवस्थानापत्तेश्च। सर्वेषां शक्तत्वे बोधकत्वे व्यभिचारो गले पतितः, तद्वारणायाव्यवहितोत्तरत्वसम्बन्धेन कारणवैशिष्ट्यं कार्यतावच्छेदकोटौ निवेशनीयमित्यानन्त्यदोषस्य समानत्वाच्च। किञ्च लकारस्य वाचकत्वे भूल इतोऽबोधापत्तेः। किञ्च व्याकरणभेदेनादेशिनां भेदेन लत्वस्य शक्ततावच्छेदकतया जातित्वासिद्धेश्च। किञ्च पचतीत्यत्र लकारमविदुषां ज्योतिर्विदां बोधेन तस्य न बोधकत्वं वाचकत्वञ्चेति स्वीकर्त्तव्यम्। आदेशेषु व्यवहारस्य शक्तिग्राहकेषु मुख्यस्य सत्त्वेन शक्तिकल्पनाया आवश्यकत्वाच्च। तव तु पचतीत्यत्रादेशिनां लकाराणां स्मरणकल्पनायां गौरवाच्च। तस्माच्छक्तिग्राहकमुख्यव्यवहारेणादेशानामेव

वाचकत्वं बोधकत्वञ्च नादेशिनां लकारादीनामिति शाब्दिकमतं सुसिद्धमिति बोधकतायाः शक्तित्वमपि सिद्ध्यति।

बोधकतावादिनां वैयाकरणानां मते देवदत्तो गच्छतीत्यत्र शाब्दबोधस्तु देवदत्ताश्रयवृत्तिगमनानुकूलव्यापारः। गमनञ्च संयोगः, 'भावप्रधानमाख्यात'मिति विशेषयास्कवचनेन प्रकृतिप्रत्यययोः सहार्थं ब्रूते। तत्र प्रत्ययार्थस्य प्राधान्यमिति सामान्यनियमस्य बाधः।

ननु बोधजनकत्वं पदेऽसम्भवि, वर्णानामाशुतरविनाशशालित्वात्, पदञ्च वर्णसमुदायरूपमाशुतरविनाशिनां वर्णानां कुतः समुदायित्वम्, तत्तु स्थायिपदार्थानां भवति। समुदाय इति शक्तम्पदमिति व्यवहारो लुप्येतेति चेन्न। यश्चोभयोः समो दोषः परिहारस्तयोः सम इति कथयित्वा विरमामि। किञ्च वर्णानां नित्यत्वेन वर्णसमुदाये पदत्वस्य सम्भवात्। न च नष्टः ककारो नष्टो गकार इति व्यवहारेण वर्णानामनित्यत्वमिति वाच्यम्। अस्य व्यवहारस्याविर्भावतिरोभावविषयत्वात्। कण्ठताल्वादिविध्यादयो वर्णव्यञ्जका न तु जनकाः। अत एव सूत्रादीनां वेदापि-मन्त्राणाञ्चाभ्यासो युज्यते। सोऽयं गकारेत्यादि-प्रत्यभिज्ञापि वर्णानां नित्यत्वे प्रमाणम्। किञ्च ध्वनीनामनित्यत्वेऽपि तद्व्यङ्ग्यस्फोटस्य नित्यत्वेन शक्त्याश्रयश्च स्फोट एव स्फुटत्यर्थोऽस्मात् स्फोट इति लभ्यते। न च पूर्व-पूर्व-वर्णज्ञानजन्यचरमवर्णानुभवस्यैव तदर्थबोधम्प्रति कारणत्वमस्तु तेनैवोपात्तं बलं स्फोटेनेति वाच्यमुद्बोधकवैपरीत्ये स्मरणस्यापि वैपरीत्यमिति येन क्रमेण सरेत्यत्र वर्णानुभवस्तेनैव क्रमेण वर्णस्मरणमित्यत्र नियामकाभावेन सरेत्यतः कदाचिद्रसस्यापि बोधापत्तेः, नदीत्यतः कदाचिद् दीनस्यापि बोधापत्तेः। स्फोटवादिनां तु नोक्तदोषस्तत्तत्स्फोटस्य भेदात्। ननु वृद्धव्यवहारस्य मुख्यग्राहकस्य राजपुरुषमानयेत्यत्र राजसम्बन्धिपुरुषस्य बोधेन तदनुकूला तद्बोधकता-शक्तिस्तत्र स्वीकार्येति तथा च बोधकताशक्तिवादिनां पदशक्तिभिन्ना वाक्यशक्तिरापद्येतेति गौरवमिति वाच्यमिष्टापत्तेः। न च पदशक्त्यैव निर्वाहे वाक्ये शक्तिकल्पनायां मानाभावः। यथा घटमानयेत्यत्र व्यवहारेण समुदाये समुदायार्थनिरूपितां शक्तिमवधार्य पश्चादापोद्वापाभ्याम्पदे शक्तिं गृह्णन् बालः पश्चात् तां शक्तिं त्यजति, पदे स्वार्थनिरूपितां शक्तिमवधारयति तथैव राजपुरुषमानयेत्यत्र राजपुरुष-निरूपितां शक्तिमवधार्य पश्चादापोद्वापाभ्यां तां शक्तिं वाक्ये त्यजन् लाघवात्पदे शक्तिमवधारयतीति पदशक्त्यैव निर्वाहे समासे समासार्थनिरूपितशक्तिकल्पनमयुक्तम्। न च बोधकताशक्तिवादिनामपि तथैव

स्वीक्रियतामिति वाच्यम्। इदम्पदमिममर्थम्बोधयत्वितीच्छाशक्तिवादिनां समास-घटकपदेषु तत्तदर्थनिरूपितशक्तिकल्पनस्य सम्भवेऽपि बोधकताशक्तिवादिनां तथा शक्तिकल्पनाया असम्भवाद् इति चेत्, न। इदम्पदमिममर्थम्बोधयतु, अस्माच्छब्दादयमर्थो बोद्धव्य इति सङ्केतरूपेच्छावादिनां राजपुरुषेत्यत्र राजपदस्य राजसम्बन्धिनि लक्षणा, पुरुषपदे सङ्केतरूपा शक्तिश्च भवतीति युगपद्वृत्तिद्वयविरोधो भवति नामार्थयोरभेदातिरिक्तः सम्बन्धोऽव्युत्पन्न इति व्युत्पत्तिविरोधवारणाय तत्र राजसम्बन्धिनीं लक्षणां स्वीकुर्वन्ति ते। राजसम्बन्ध्यभिन्नः पुरुष इति बोधमेति।

न च स्वत्वसम्बन्धेन राजविशिष्टपुरुषस्यैव तत्र बोधोऽस्तु किं लक्षणया सा व्युत्पत्तिरपि न स्वीकार्येति वाच्यम्। तथा सति, तण्डुलः पचतीत्यापत्तेर्बोधानुसारिप्रयोगवादिनां नैयायिकानां तत्र कर्मत्वसम्बन्धेन तण्डुलप्रकारकपाकविशेष्यकानुकूलत्वसंसर्गकपाकप्रकारककृतिविशेष्यकसमवाय-संसर्गककृतिप्रकारकपुरुषविशेष्यको बोधस्तत्र भवति, कृतिश्च निर्वर्येति। बोधकताशक्तिवादिनान्तु तण्डुलः पचतीति प्रयोगो न भवितुमर्हति; कर्तुरीप्सितमिति सूत्रेण कर्मसंज्ञा कर्मणि द्वितीयेति द्वितीया च भवति। लः कर्मणि चेति सूत्रेण कर्तृबोधको लकारः, त आदेशानां स्थान्यर्थबोधकत्वं स्थान्यर्थसमर्था एवादेशा भवन्तीति तिबर्थः कर्त्ता 'भावप्रधानमाख्यात'मिति यास्कवचनेन प्रकृतिप्रत्यययोः ब्रूते। तत्र प्रत्ययार्थस्य प्राधान्यमित्यस्य बाधात्। देवदत्ताभिन्नाश्रयवृत्तितण्डुलकर्मकपाकानुकूलो व्यापार इति बोधो भवति। पचो विक्लित्त्यनुकूलव्यापारबोधकता आख्याते च कर्तृबोधकता चेति शक्तिस्तत्र बोध्या। राजपुरुषेत्यत्र राजसम्बन्ध्यभिन्नपुरुषनिरूपितबोधकतां शक्तिञ्च स्वीकुर्वन्ति वैयाकरणा न राजसम्बन्धिनीं लक्षणां स्वीकुर्वन्ति, तेषां न वृत्तिद्वयविरोधो न वा राज्ञि ऋद्धस्य विशेषणस्यान्वयो राज्ञः पदार्थैकदेशत्वात्पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेत्यनुशासनानुरोधात्। पदार्थश्च पदजन्यमुख्यविशेष्यः पदार्थैकदेशश्च मुख्यविशेष्यभिन्नवृत्ति-जन्यतत्पदजन्योपस्थितिविषयः राज्ञः पुरुष इत्यतो राजनिरूपितसत्त्ववान् पुरुष इति बोधो भवति। बोधकताशक्तिवादिनो ङस्प्रत्ययस्य स्वत्वे शक्तिं स्वीकुर्वन्ति ते। न चाऽसत्त्वस्य संसर्गतयैव भानमस्तु ङस्प्रत्ययस्य तच्च कल्पनं तदुपस्थितेश्च तत्र कारणत्वकल्पनञ्च गौरवमिति वाच्यम्। राजनिरूपितस्वत्त्वाभावान् पुरुष इति प्रत्यक्षम्प्रति राज्ञः पुरुष इति शाब्दसामग्र्याः विभिन्नविषयकबोधप्रयोजकत्वेन प्रतिबन्धकत्वापत्तेः।

विभिन्नविषयकप्रत्यक्षम्प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वात्। बोधकता-शक्तिवादिनां तु बाधाभावरूपयोग्यतायाः सहकारिणोऽभावेन बोधाभावान्न शाब्दसामग्र्याः तत्प्रत्यक्षम्प्रति बन्धकत्वकल्पनमिति लाघवस्य सत्त्वात्।

नैयायिकास्तु इदम्पदमिममर्थम्बोधयत्विति अस्माच्छब्दादयमर्थो बोधव्य इति सङ्केतरूपावृत्तिः शक्तिरिति मन्यन्ते। वृत्तिश्च सङ्केतलक्षणान्यतररूपा, सङ्केतो लक्षणा चार्थे पदवृत्तिरिति शक्तिवादः। सर्वैश्शब्दैः श्रूयमाणैरपि सदा सर्वेषां न तदर्थप्रतिपत्तिः, न वा सद्यः किन्तु कदाचित् शब्दैः केषाञ्चित्स्वल्पाचिरेण जन्यते कल्प्यते च तस्मात्तत्सम्पादिनी पदपदार्थसम्बन्धविशेषधीजनितपदार्थ-सार्थोपस्थितिरेवेतरेषान्तु अन्वयव्यतिरेकनियमविरहगौरवादिदोषकवलितत्वेन न तत्कल्पनसम्भवः, स च सम्बन्धविशेषवृत्तिरूपश्शाब्दबोधौपयिकः सम्बन्धः। सम्बन्धश्च प्रतियोगितानुयोगितयोर्निरूपको भवति यथा घटवद् भूतलमित्यत्र घटप्रतियोगिको घटानुयोगिकः संयोगः सम्बन्धो भवति, तथा चात्रार्थ-प्रतियोगिकास्पदानुयोगिकः अर्थानुयोगिकास्पदप्रतियोगिको वा तादृशः सम्बन्धविशेषस्सङ्केतलक्षणाद्वयम्भवद्विनिगमनाविरहात्। वृत्तिश्च शाब्दौपयिकः सम्बन्धः। पदप्रतियोगिकार्थानुयोगिकसङ्केतरूपाऽस्माच्छब्दादयमर्थो बोधव्य इतीच्छारूपसङ्केतरूपवृत्तिज्ञानात् किं वार्थप्रतियोगिक-पदानुयोगिकसंकेत-रूपेदं पदमिममर्थं बोधयत्वितीच्छारूप-सङ्केतरूपवृत्तिज्ञानाद् घटघटत्वयोरुपस्थित्या घटार्थस्य बोधो भवति। एवं गङ्गायां घोष इत्यत्र गङ्गापदवाच्यजलप्रवाहे घोषान्वयबाधदर्शनेन गङ्गापदशक्यजलप्रवाहसम्बन्धिनि तात्पर्यानुपपत्त्या गङ्गापदं गङ्गापदशक्यजलप्रवाहसम्बन्धिनि तीरे लाक्षणिकं किं वा तीररूपार्थो गङ्गापदशक्यजलप्रवाहसम्बन्धीति लक्षणाज्ञानजन्या लाक्षणिकगङ्गापदजन्या तीरोपस्थितिर्लाक्षणिकार्थस्य बोधो भवति।

ननु मुखं विकसितस्मितं वशितवक्रिमप्रेक्षितमित्यत्र परस्परविभाग-जनकक्रियारूपविकासस्य कमलादिपुष्पनिष्ठस्य मुखे बाधाल्लक्षितार्थस्य विस्तृतस्यान्वयबोधानन्तरं मुखे कुसुमतुल्यसौरभतायाश्चमत्कृतिरमणीयताया वा बोधस्यानुभवसिद्धस्यापलपितुमशक्यतया व्यञ्जनया वृत्तित्वमावश्यकमिति चेत्, न। मनस्येव तत्तत्पदार्थस्य स्मृतिसहकारेण बोधनिर्वाहात्तदर्थव्यञ्जनाया वृत्तेः कल्पनाऽनावश्यकत्वात्। न चैवं घटमानयेत्यादिश्रवणानन्तरं घटघटत्व-कर्मत्वानयनत्वादीनामुपस्थितिसहकृतमनसैव घटकर्मकानयनविषयकबोधो भवतु किं शक्तिलक्षणयोरपि वृत्तित्वकल्पनयेति वाच्यम्। घटेति श्रवणानन्तरं समवायेनाकाशस्योपस्थितिस्तत्राकाशस्य मानसिकबोधापत्तिवारणाय तदर्थ-

विषयकशब्दजन्यबोधम्प्रति तदर्थनिरूपितवृत्तिमत्पदजन्यपदार्थोपस्थिति-करणमित्यवश्यं वक्तव्यं तथा चाकाशस्य वा घटशब्दश्रवणानन्तर-मेकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयतीति समवायेनोपस्थितिस्तस्यास्तदर्थ-निरूपितवृत्तिमत्पदजन्यतदर्थविषयकोपस्थितिः कारणमिति वाच्यं तथा चाकाशस्य वा समवायद्वारोपस्थितिः सा न वृत्तिज्ञानाधीना। गगनं घटपटाद्बोद्धव्यमितीश्वरसङ्केताभावात्तथा च शाब्दबोधम्प्रति वृत्तिजन्योपस्थितेः करणत्वस्यावश्यकत्वात्। न चास्तु मुखपदे सौरभत्वरूपव्यङ्ग्यार्थनिरूपिता शक्तिरिति शक्त्यैव मुखं विकसितमित्यत्र सौरभत्वप्रकारबोध इति वाच्यम्, तथा सति मुखपदाद्घटविषयकबोधस्येव सौरभस्यापि सर्वत्र बोधापत्तेः। न चेष्टापत्तिरिति वाच्यमनुभवविरोधात्। व्यङ्ग्यार्थविषयकबोधश्च सहृदयानामेव भवति स च व्यङ्ग्यार्थ-विषयकः पदजन्योऽनियतविषयको बोधो न नियतविषयकः, अर्कोऽगमदिति वाक्यश्रवणानन्तरं रात्रौ युद्धस्य निषेधाद्युद्धान्निवर्तताम्, सन्ध्यावन्दनस्य समयोऽतः कार्यकरणाद् भृत्यो निवर्तताम्, रात्रावभिसारिकायाः समय आयात इत्याद्यनियतविषयक-बोधदर्शनेनासहृदयानां जनानां व्यङ्ग्यार्थविषयकबोधादर्शनेन च व्यङ्ग्यार्थनिरूपितशक्तिपदेनास्तीत्यस्य मन्तव्यत्वात्। न चैवं कथं व्यङ्ग्यार्थविषयको बोधो भवतीति वाच्यम्। तद्बोधस्य तत्तदुपस्थितिसहकारेण मानसत्वमित्यस्य पूर्वमेव प्रतिपादनात्। न चाऽर्कोऽगमदिति वाक्यश्रवणानन्तरं सर्वेषामुपदर्शिसर्वपदार्थबोधापत्तिरिति वाच्यम्। तत्तत्प्रकरणस्य तत्तात्पर्यस्य च नियामकत्वेन तद्दोषानवकाशात्। तत्प्रकरणज्ञस्तत्तात्पर्यज्ञश्च तमर्थं जानाति न तदन्य इति। एवञ्च शक्तिलक्षणयोरेव शाब्दबोधौपयिकत्वाद् वृत्तित्वं नान्यस्या व्यञ्जनाया वृत्तित्वमिति स्थितम्। ननु तदर्थविषयकशाब्दबोधम्प्रति तदर्थनिरूपितशक्तिज्ञानजन्यपदजन्यतदर्थोपस्थितिकरणत्वे कथं नीलो घट इति वाक्याद् भेदसम्बन्धविषयको बोध उपपद्येताभेदसम्बन्धनिरूपितशक्तेस्तत्रा-भावादिति चेत्, न। केचिदनन्विताभिधायिनः पदानुयायिनः सम्बन्धांशे तात्पर्याख्यां वृत्तिं स्वीकुर्वन्ति। प्रकारश्चान्वितो घटो घटपदशक्त्येत्यन्विताभि-धायिनो वदन्ति। तात्पर्याख्यायाः पूर्वाया वृत्तेः स्वीकारे च गौरवमित्यपि वदन्ति। नैयायिकास्तु शाब्दबोधे चैकपदार्थोऽपरपदार्थाकाङ्क्षया भासते इत्यामनन्ति। तथा चोक्तं व्युत्पत्तिवादारम्भे 'शाब्दबोधे चैकपदार्थेऽपरपदार्थः संसर्गमर्यादया भासते' इति 'संसर्गमर्यादापदार्थश्चाकाङ्क्षायुक्तं चेति'। शक्तिलक्षणयोरेव वृत्तित्वस्वीकारेणैव सर्वत्र शाब्दनिर्वाहे तात्पर्याख्य-वृत्तिस्वीकारेऽन्वितपदार्थे च पदशक्तिस्वीकारे च गौरवम्भवति गौरवस्य च

तयोरस्वीकारादिति। न च सम्बन्धस्य शाब्दबोधे भाने आकाङ्क्षाया नियामकत्वे शाब्दबोधे नियतसम्बन्धभानं स्यादिति वाच्यम्। तत्तदाकाङ्क्षाया नियतविषयकत्वेन प्रथमान्तपदोपस्थित्यादेशनियतसम्बन्धभानस्य नियामकत्वेन तदुपपत्तेः। न चेश्वरसङ्केतवादिनां कथमाधुनिकपदाच्छाब्दबोध इति वाच्यम्। संकेतो द्विविधः—ईश्वरेच्छारूपः परिभाषारूपश्चेति विभागेनोक्तदोषाभावात्। एवञ्चेश्वरसङ्केतश्शक्तिस्तया चार्थबोधकं पदं वाचकम्। यथा गोत्वादिविशिष्टबोधकं गवादिपदं तद्बोध्योऽर्थो गवादिर्वाच्यः स एवार्थो मुख्य इत्युच्यते। परिभाषाया बोध्योऽर्थ इदतोदन्तः, शब्दः आ-ऐ-औ इत्यादिशब्दः। अथेश्वरसङ्केतस्य वस्तुत्वव्यापकविषयताकत्वेन लाक्षणिकार्थतीरादिविषयकत्वं स्वीकरणीयं तथा च तीरादिवाचकता गङ्गायां घोष इत्यत्र गङ्गादिपदानां स्यात्। न चास्माच्छब्दादयमर्थो बोधव्य इतीच्छया भगवदुच्चरितत्वं वाचकत्वमिति गङ्गायां घोष इत्यत्र गङ्गापदस्य तथात्वेन न लाक्षणिकतीरवाचकत्वमिति वाच्यम्। तथा सत्यस्मा दाद्युच्चरितपदेष्वव्याप्तेः।

न चास्माच्छब्दादयमर्थो बोधव्य इतीच्छया भगवदुच्चरितसजातीय-वाचकत्वमिति नोक्तदोषस्तस्यानुपूर्व्यातत्सजातीयत्वादिति वाच्यम्। तथा सति वेदस्थलाक्षणिकायुर्घृतमादित्यो यूप इत्यादावायुरादिपदे आयुर्जनादित्यसदृश-बोधनेच्छया तत्तत्पदानां भगवदुच्चरितत्वेन तत्तदर्थे वाचकत्वापत्त्या वाचकत्वस्याऽस्माच्छब्दादयमर्थो बोधव्य इतीच्छया भगवदुच्चरितत्वस्याति-व्याप्त्यापत्तेः। सादिदेवदत्तादिपदेऽव्याप्तेश्च, द्वादशेऽह्नि पिता नाम कुर्यादिति भगवदुच्चरितस्य नामपदस्य देवदत्तादिपदपरत्वेऽपि देवदत्त इत्यादिरूपाणां भगवदनुच्चरितत्वात्। किञ्चेश्वरानङ्गीकर्तृमते ईश्वरसङ्केतत्वेनेश्वरसङ्केतज्ञाना-भावेन शाब्दबोधानुपपत्तेस्तदर्थनिरूपितवृत्तिज्ञानजन्यपदजन्यपदार्थोपस्थितेस्तदर्थ-विषयकशाब्दबोधम्प्रति कारणत्वात्।

पदज्ञानन्तु करणं द्वारं तत्र पदार्थधीशाब्दबोधः फलं तत्र शक्तिधीः सहकारिणीति मुक्तावल्यां प्रदर्शितमिति चेत्सत्यम्। तदर्थविषयकशाब्दबोधम्प्रति सङ्केतज्ञानजन्या तदर्थविषयकबोधजनकपदजन्या तदर्थविषयककोपस्थितिः कारणम्, सङ्केतश्चास्माच्छब्दादयमर्थो बोधव्य इति इदम्पदमिममर्थम्बोधयत्वि-तीश्वरेच्छारूपमेव, एवञ्च शाब्दबोधोपयोगितायामीश्वरीयत्वस्यानुपादेयत्वेनोक्त-दोषाभावात्। न चाऽऽधुनिकसङ्केतज्ञानजन्याधुनिकदेवदत्तादिपदजन्या तदर्थोपस्थित्या देवदत्तादिविषयकशाब्दबोधापत्तिः, शाब्दबोधकारणतावच्छेदक-कोटौ त्वयेश्वरीयत्वस्यानुपादनादिति वाच्यम्। आधुनिकसङ्केते

वृत्तित्वस्येष्टत्वात्। वृत्तित्वञ्चात्र शाब्दबोधकारणतावच्छेदककोटिप्रविष्टत्वरूप-शाब्दबोधौपयिकसम्बन्धत्वं बोध्यम्। तेनेश्वरेच्छारूपसङ्केतस्य वृत्तित्ववादिनां न क्षतिः। न चैवमाधुनिकसङ्केतत्वे नानार्थकहरिपदाद् विष्णुविषयकशाब्दबोधम्प्रति वक्तृतात्पर्यस्यास्माद्धरिपदाद् विष्णुर्बोद्धव्य इत्याकारकस्य किं वेदं हरिपदं विष्णुम्बोधयत्वित्याकारकस्य कारकत्वेन विनिगमनाविरहाद् वृत्तित्वप्रसङ्ग-स्तस्यापि बोधकत्वेन पदविषयकतया सङ्केतरूपत्वादिति वाच्यमिष्टापत्तेः। न च तात्पर्यस्य वृत्तित्वे गङ्गायां घोष इत्यादौ लक्षणास्थलेऽपि गङ्गायां घोष इत्यत्र गङ्गापदं तीरम्बोधयत्वित्याकारकवक्तृतात्पर्यस्य तात्पर्यानुपपत्त्या लक्षणाबीजस्य वृत्तिरूपत्वेन तज्ज्ञानजन्योपस्थापितस्य तीरादेश्शाब्दबोधनिर्वाहिण लक्षणायाः सङ्केतो लक्षणा चार्थे पदवृत्तिरिति ग्रन्थेन वृत्तिरूपाया उच्छेदापत्तिरिति वाच्यम्। पदज्ञानजन्यपदार्थोपस्थितिव्यापारकत्वे सति सङ्केतत्वं वृत्तित्वमिति स्वीकारेण तात्पर्यस्य वृत्तित्वाभावोपपत्तेः।

तात्पर्यज्ञानस्य साक्षादेव शाब्दबोधोपयोगित्वेन पदार्थोपस्थितिद्वारा तात्पर्यज्ञानस्य शाब्दबोधम्प्रति कारणत्वाभावाद् वृत्त्युपस्थापितपदार्थ एव प्रकरणादिना वक्तृतात्पर्यावधारणात्। एवञ्च लक्षणायाः वृत्तित्वानभ्युपगमे गङ्गायां घोष इत्यादौ गङ्गादिपदात्तीरानुपस्थितौ तीरे गङ्गापदव्यक्तेस्तात्पर्या-ग्रहात्तीरविषयकशाब्दबोधानुपपत्तिरतो लक्षणाया वृत्तित्वमावश्यकमिति। न च प्रकरणादिना तात्पर्यग्रहार्थं लक्षणाधीनोपस्थितेरपेक्षितत्वेऽपि लक्षणाधीनोप-स्थितित्वेन तस्याः शाब्दहेतुत्वे मानाभावाल्लक्षणाया वृत्तित्वासिद्धिः, शाब्दबोधजनकोपस्थितिः प्रयोजकत्वरूपवृत्तित्वस्य लक्षणायामसत्त्वेन लक्षणाया वृत्तित्वासम्भवात्सम्पद्यते तात्पर्यज्ञानानन्तरं च तात्पर्यरूपसङ्केतग्रहाधीनोप-स्थितितः शाब्दबोध इति तात्पर्ये शाब्दबोधजनकोपस्थितिप्रयोजकत्वरूप-वृत्तित्वस्य सत्त्वाद् आधुनिकसङ्केतस्थले तात्पर्याधीनोपस्थितेः शाब्दबोधप्रयोजकतायाः क्लृप्तत्वादिति वाच्यम्। लक्षणाधीनपदार्थोपस्थितिसत्त्वे मुख्यार्थबाधादिना तत्तदर्थे लाक्षणिकतीराद्यर्थे तत्तत्पदव्यक्तेस्तात्पर्यग्रहे उपस्थित्यन्तरमन्तरेणैव तत्तदर्थरूपलाक्षणिकार्थविषयकानुभवस्य सर्वानुभव-सिद्धत्वेन लक्षणाया वृत्तित्वस्य पूर्वोक्तरूपस्यावश्यकत्वात्। आधुनिकसङ्केतस्थले पूर्वसङ्केतकर्तृपुरुषवाक्यतोऽर्थविशेष इत्यादिपदस्य सङ्केतग्रहात्तत्तत्पदेनार्थविशेषस्य काष्ठमयहस्त्यादेरुपस्थितौ प्रकरणादिना डित्थादितत्तत्पदव्यक्तेस्तत्र काष्ठमयहस्त्यादौ तात्पर्यग्रहे सति डित्थादिपदं हस्त्यादिबोधनेच्छाया कर्त्रोच्चारितमिति तात्पर्यग्रहे सति शाब्दबोधस्य वृत्त्यन्तराधीनोपस्थित्यन्तरं विनैवोत्पत्त्या आधुनिकसङ्केतस्य वृत्तित्वापत्तेः। न च सम्बन्धस्य सानुयोगित्व-

सम्प्रतियोगिकत्वनियमस्य घटवद् भूतलमित्यत्र संयोगदर्शनेन सङ्केतस्यातथात्वान्न सम्बन्धत्वं मानाभावात्। एकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयतीति द्वारेण पदज्ञानेनापरसम्बन्धिनोऽर्थस्योपस्थित्यभावसाक्षात्सङ्केतस्य शाब्दबोधौपयिकसम्बन्धत्वाभाव इति सङ्केतस्य न वृत्तित्वम्, शाब्दबोधजनकोपस्थितिप्रयोजकस्यैव वृत्तित्वादिति वाच्यम्।

विषयताया विषयिताया वा सम्बन्धत्वेन तन्निरूपकस्यापि याचितमण्डनन्यायेन सम्बन्धत्वमितीच्छारूपसङ्केतस्य सम्बन्धत्वोपपत्ते:। एवञ्च सङ्केतस्य सम्बन्धत्वकल्पने सम्बन्धत्वाभावव्याप्यनिष्प्रतियोगिकत्वज्ञानमेव प्रतिबन्धकमिति परास्तम्। सङ्केते सप्रतियोगिकत्वस्य याचितमण्डनेन दर्शितत्वात्।

ननु तद्विषयकशाब्दबोधे वृत्तिज्ञानजन्यतदुपस्थितित्वेन हेतुत्वे घटपदं घटत्वे शक्तं, घटे च शक्तमिति स्वतन्त्रवृत्तिज्ञानजन्यविशेष्यविशेषणभावनापन्नयो: घटघटत्वयोरुपस्थित्या घटत्वप्रकारकघटविशेष्यकशाब्दबोधस्य वारणाय तद्धर्मप्रकारकतद्विशेष्यकशाब्दबोधे वृत्तिज्ञानजन्यतद्धर्मप्रकारकतद्विशेष्यकशाब्दबोधे वृत्तिज्ञानजन्यतद्धर्मप्रकारकतद्विशेष्यकोपस्थिति: कारणमिति कार्यकारणभावो वक्तव्य:। एवञ्च घटपदस्य घटघटत्वसमवायेषु कथं शक्तिरुपपन्ना? शक्तिज्ञानपदार्थोपस्थित्यो: समानविषयकत्वेनैव कार्यभावोऽवश्यं वक्तव्योऽन्यथा वृत्तिज्ञानाधीनोपस्थितौ उद्बोधकान्तरादुपस्थितपदार्थस्यापि शाब्दबोधापत्ते:। न च माऽस्तु सम्बन्धे शक्तिरिति वाच्यम्। वृत्त्यनुपस्थितस्यापि पदार्थद्वयसंसर्गस्य शाब्दबोधविषयकत्वोपगमे सम्बन्धभाने नियामकाभावेन सर्वत्राबाधितसंसर्गस्य भानापत्ते:।

ननु घटपदाद्घटघटत्वसमवायानामिव घटघटत्वकालिकसम्बन्धानामपि शाब्दबोधविषयत्वापत्तिरिति, चेत् न। कयोश्चित् पदयो: केनचित् सम्बन्धेन स्वार्थान्वयबोधसाकाङ्क्षतयाऽऽकाङ्क्षाज्ञानस्यैव पदार्थयो: संसर्गनियामकत्वम्। ययो: पदयो: नानासम्बन्धेन स्वार्थान्वयबोध: आकाङ्क्षातज्जन्यशाब्दबोधे संसर्गविशेषतात्पर्यज्ञानं कारणमिति कार्यकारणभावस्य सम्बन्धविशेषनियामकत्वमिति कथने नैवाभिलषितसंसर्गस्य शाब्दबोधविषयत्वोपपत्ति:। इयं व्यवस्था च भवति वृत्त्यविषयसम्बन्धे वृत्तिभावस्य सम्बन्धे यदि वृत्तिं न स्वीकरोषि चेत्तर्हि सम्बन्धभासको भवेदिति विचार्यताम्। अनियमे च घटपदश्रवणानन्तरं समवायस्य भानं तस्मान्नियामकाभावादतोऽत्र घटघटत्वसमवायेषु शक्ति: स्वीकार्या। सा च शक्तिरीश्वरेच्छारूपा इच्छारूपा वा

भवतु। भगवदिच्छा तु तत्तत्पदजन्यबोधीययादृशविषयत्वेन यमवगाहते तत्र शाब्दबोधीयविषयतां प्रयुङ्क्ते इति नियमो बोध्यः।

तथा चेश्वरेच्छायास्तत्पदजन्यशाब्दबोधविषयताप्रयोजकसम्बन्धेन तत्र तत्तदर्थे तत्पदशक्तिनियामकः घटपदाद्घटो बोद्धव्य इत्येतादृशेच्छायाञ्च घटत्वावच्छेदेन बोधविषयत्वमवगाहमानायां समवायसम्बन्धावच्छिन्नं बोधविषयतावच्छेदकत्वं घटत्वे भासते। घटत्वे बोधविषयतायाः संसर्गविधया भासमानेऽवच्छेदकत्वेऽवच्छेदकतया भासमानत्वं समवायस्येति त्रितयमेव घटपदजन्यबोधविषयतायां ज्ञातुमुपजन्यत इति त्रयाणां घटपटत्वसमवायानां घटपदवाच्यताया उपपत्तेः।

एवञ्चाश्रयत्वसम्बन्धावच्छिन्नबोधविषयत्वप्रकारतानिरूपितेच्छीयविषयत्वं घटस्य। घटपदजन्यबोधविषयत्वं घटे भासमाने सद्विशेष्यघटपारतन्त्र्येणा-वच्छेदकतासम्बन्धेन घटत्वे भासते। घटत्वे बोधविषयतायाः संसर्गविधया भासमानेऽवच्छेदकत्वेऽवच्छेदकतया भासमानत्वं समवायस्य। एवञ्च तत्तत्-पदजन्यबोधीयविषयतात्वावच्छिन्नेच्छीयप्रकारतानिरूपितविशेष्यतात्वावच्छिन्न-प्रकारतानिरूपितघटादिनिष्ठमुख्यविशेष्यताशालिज्ञानम्। एवं तत्तत्पदजन्य-बोधीयविषयतात्वावच्छिन्नेच्छीयप्रकारत्वावच्छिन्नावच्छेदकत्वसम्बन्धावच्छिन्नप्रकारता-निरूपितविशेष्यताप्रकारकं घटत्वादिमुख्यविशेष्यताशालिज्ञानमेव तत्तत्पदजन्य-बोधीयविषयतात्वावच्छिन्नेच्छीयप्रकारत्वावच्छिन्नप्रकारतानिरूपितावच्छेदकत्वनिष्ठ-संसर्गतानिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपिता-धेयत्वसम्बन्धावच्छिन्नावच्छेदकतया प्रकारकं समवायादिनिष्ठमुख्यविशेष्यता-शालिज्ञानं च, समवायेन घटत्वादिप्रकारकघटादिविशेष्यकान्वयबुद्धौ हेतुर्भवति।

नन्वेतावता सङ्केतविषयतानां धर्मधर्मिसम्बन्धनिष्ठानां शक्तित्वमायातम्। सा च तत्तन्निष्ठविषयतारूपा शक्तिः पदार्थतदवच्छेदकधर्मः, तद्धर्मनिष्ठा-वच्छेदकतावच्छेदकतत्तत्सम्बन्धभेदेन भिन्न इति कुतस्त्रिषु घटघटत्वसमवाय-सम्बन्धादिषु एका शक्तिरिति प्रवादः सङ्गच्छते चेदित्यपि न वाच्यम्। घटघटत्वसंसर्गेषु सङ्केतविषयतानां मिथ्योक्तवैलक्षण्येऽपि तन्निरूपकसङ्केतीय-विषयतानिरूपकबोधनिष्ठविषयताया ऐक्यात् शक्त्यैक्यप्रवादः, न तु सङ्केतैक्यात्। एवं शक्तशक्यत्वावच्छेदकभेदेनापि न शक्तिभेदः भगवत्सङ्केतस्याभेदाद् ऐक्यात्। न च सुन्दरत्वस्य घटेऽन्वयतात्पर्येण सुन्दरो घट इव घटत्वे नित्यत्वतात्पर्येण नित्यो घट इति प्रयोगापत्तिरिति वाच्यम्। आश्रयत्वसम्बन्धावच्छिन्नतत्पदजन्यबोधविषयत्वप्रकारतानिरूपितसङ्केत-

मुख्यघटादिनिष्ठविशेष्यताशालिज्ञानस्यैव भिन्नवृत्त्युपस्थापितार्थान्वयबोधोपयोगित्वस्वीकारेणोक्तदोषाभावात्। एतन्मूलक एव पदार्थ: पदार्थेऽन्वेति न तु पदार्थैकदेशेनेति।

ननु शक्यतावच्छेदकभेदेन शक्तिभेदावश्यकोऽन्यथा हर्यादिपदानां नानाधर्मावच्छिन्नवाचकानामपि शक्त्यैक्यापत्त्या नानाशक्तिमत्वरूपनानार्थत्वानुपपत्ते:। एवञ्च पुष्पवन्तपदस्यापि नानाधर्मावच्छिन्ननिरूपितनानाशक्तिमत्वरूपनानार्थत्वापत्ति:। न चेष्टापत्ति:। एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकराविति विरोधापत्तेरिति चेत्; न, पुष्पवन्तपदाच्चन्द्रत्वावच्छिन्नविषयकसूर्यत्वावच्छिन्नविषयकशाब्दबोधो भवत्वित्याकारक इव पुष्पवन्तपदे भवदिच्छारूप: सङ्केत इति स्वीकारेणादोषात्। न चैतादृशशक्तिस्वीकारेऽपि कथं पुष्पवन्तपदे नानाधर्मावच्छिन्ननिरूपितशक्तिमत्वरूपनानार्थत्वस्य वारणमिति वाच्यम्। 'एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ' इत्यमरकोषे उक्तिपदं शक्तिपरं पुष्पवन्तपदं तत्-प्रतिपाद्यपरं तथा च सूर्याच्चन्द्रमसावेकशक्त्या पुष्पवन्तप्रतिपाद्यावित्यर्थ:। एवञ्च चन्द्रसूर्योभयविषयकत्वावच्छिन्नायास्तादृशबोधनिष्ठभगवदिच्छीयविषयताया ऐक्येन शक्तेरैक्यमित्येकशक्तिमत्वस्य पुष्पवन्तपदस्य सत्त्वेन नानाशक्तिमत्वरूपनानार्थत्वाभावोपपत्ते:।

ननु तच्छब्दस्यापि तच्छब्दादघटत्वादि-नानाधर्मावच्छिन्नविषयकबोधो भवत्विति भगवत्-सङ्केतीयबोधनिष्ठविषयताया ऐक्येन शक्त्यैक्यमिति नानाशक्तिमत्वरूपनानार्थत्वस्यानुपपत्ति:। अन्यथा पुष्पवन्तपदाच्चन्द्रविषयकसूर्यविषयकबोधो भवत्विति भगवत्सङ्केतीयबोधनिष्ठविषयताया ऐक्येऽपि शक्त्यैक्यानुपपत्त्या तस्य नानाशक्तिमत्वरूपनानार्थत्वापत्ते:। न च तच्छब्दाद् बुद्धिस्थो बोद्धव्य इति भगवत्सङ्केताद् बुद्धिस्थत्वेन घटपदादयो बुद्ध्यन्त इति तस्य बुद्धिस्थत्वरूपैकधर्मावच्छिन्नैकशक्तिमत्वेन न नानाधर्मावच्छिन्ननिरूपितशक्तिमत्वरूपनानार्थत्वमिति वाच्यम्। तच्छब्देन विशिष्यघटत्वपटादिनैव बुद्धिस्था घटपटादय: प्रत्याय्यन्ते, न बुद्धिस्थलेनात्र घटोऽस्ति तमानयेत्यादिवाक्यजन्यघटकर्मकानयनादिबोधानन्तरं विशिष्यानयनं घटकर्मकं न वेति संशयानुत्पादस्य सर्वानुभवसिद्धतया दुरपह्नवत्वात्। तथा च तत्पदजन्यघटत्वपटत्वादिनानाधर्मावच्छिन्नविषयबोधानुरोधेन तद्धर्मावच्छिन्ननिरूपितनानाशक्तिस्वीकारस्य तच्छब्दे आवश्यकतया नानाशक्तिमत्वरूपनानार्थत्वापत्तेर्दुर्वारत्वात्।

एवञ्च वक्तृबुद्धिस्थत्वं न तच्छब्दशक्यतावच्छेदकमपि तु घटत्वपटत्वाद्येव तादृशघटत्वपटत्वादिनानाधर्मावच्छिन्नेषु पुष्पवन्तपदवन्नैकशक्ते:

सम्भवस्तथा सति घटत्वादिप्रत्येकमात्रधर्मावच्छिन्नबोधानुपपत्तिरिति तच्छब्दस्य नानार्थत्वं दुर्वारम्। न च तस्य मास्तु नानार्थत्वं, का क्षतिरिति वाच्यम्, यादृशधर्मावच्छिन्ने यत्पदस्य वृद्धव्यवहारो येन पुरुषेण दृश्यते, तद्धर्मावच्छिन्ने तत्पदस्य तेन पुरुषेण शक्तिरवगम्यते। अनन्तरं तत्पदात्तत्पदार्थः स्मर्यते प्रतिपद्यते च तेन पुंसा तदर्थः। एवञ्च येन पुंसां यद्धर्मावच्छिन्ने यत्पदव्यवहारो न दृष्टस्तद्धर्मावच्छिन्ने यत्पदस्य शक्तिग्रहो न तस्य पुरुषस्याभूतद्धर्मावच्छिन्नाभिप्रायेण प्रयुक्ताद् देवदत्तो गच्छतीति तं पश्येत्यादौ तच्छब्दात्तस्य पुरुषस्य प्रक्रान्ततादृशदेवदत्तप्रतिपत्तिस्तद्धर्मावच्छिन्ने शक्त्यग्रहेण तदर्थस्यानुपस्थित्या कथं स्यात्। यस्मिन् धर्मिणि शक्तिग्रहस्तद्धर्मिणः शक्तिग्रहादुपस्थित्या बोधेति सर्वैर्मन्यते।

न च बुद्धिस्थत्वं प्रकारीभूतघटत्वादीनामेवानुगमकं तथा च बुद्धिप्रकारवान् तत्पदशक्येत्याकारक एव शक्तिग्रहो वृद्धव्यवहारादिना जायते, तादृशग्रहश्च बुद्धिप्रकारत्वरूपधर्मप्रकारेण सामान्यप्रत्यासत्त्या सकलघटत्वपटत्वादिधर्मविषयक एव सम्भवति बुद्धिषु सकलघटपटत्वादीनां प्रकारत्वेन तेषु सर्वेषु घटत्वादिधर्मेषु प्रकारत्वं सामान्यं वर्तत इति न पूर्वप्रकारेण बोधानुपपत्तिः। सामान्यञ्च प्रकारीभूतो धर्म एव न जातिस्तेन प्रकारत्वं सामान्यं बोध्यम्।

सामान्यलक्षणानभ्युपगमपक्षे तु बुद्धिप्रकारवान् तत्पदशक्येति शक्तिग्रहविशेष्यतावच्छेदकः प्रकारो धर्मस्तदाश्रयस्यापूर्वधर्मिणः शक्तिग्रहविषयस्य शक्तिग्रहविषयव्यक्तिसजातीयस्य योग्यताबलेन यथा शाब्दबोधे भानं तथा घटोऽस्ति, तमानय, पटोऽस्ति, तं परिधेहीत्यादिवृद्धव्यवहारतो बुद्धिस्थत्वरूपघटत्वपटत्वाद्यनुगमकधर्मेण घटत्वपटत्वादिविशिष्टे तच्छब्दस्य शक्तिग्रहाद् अत्र चैत्रोऽस्ति तं पश्येति वाक्यघटकेन पूर्वाननुभूतचैत्रत्वाद्यवच्छिन्नपरतत्पदेनाऽननुभूतचैत्रत्वाद्यवच्छिन्नस्य स्मरणासम्भवेऽपि अनुभूतघटत्वाद्यवच्छिन्नस्य स्मरणे सति योग्यतावशेनापूर्वचैत्रत्वावच्छिन्नस्यापि शाब्दबोधे भाने बाधकाभावः शक्तिधियः शाब्दज्ञानसमानविषयकत्वस्वतन्त्रत्वादिति वाच्यम्। बुद्धिस्थत्वस्य तत्पदशक्यतावच्छेदकघटत्वादिनिष्ठावच्छेदकतानवच्छेदकत्वेन शक्यतावच्छेदकघटत्वादिधर्मानुगमकत्वायोगात्। बुद्धिस्थस्वस्य शक्यतावच्छेदकतावच्छेदकत्वे च तस्यापि तत्पदजन्यशाब्दबोधे तत्पदशक्यतावच्छेदकघटत्वादिविशेषणतया भानप्रसङ्गात्। स्वरूपतो घटत्वादिधर्माणां तत्पदजन्यबोधे भानासम्भवात्। उपलक्षेण तेन बुद्धिस्थत्वेन तत्पदशक्यतावच्छेदकघटत्वेनानुगमे शक्यस्याप्युपलक्षणीभूतेनाऽनुगतशक्यतावच्छेदकेनानुगमसम्भवे कुत्रापि विशिष्टे शक्यभावापत्तेः।

अथ द्रव्यादिपदाद्घटत्वादिप्रकारकशाब्दबोधवारणाय घटत्वविशिष्टे शक्तिरुपेयते प्रकृते बुद्धिस्थत्वस्योपलक्षणत्वेऽपि तेन घटत्वादीनामनुगमनेन किञ्चिद् बाधकमिति चेत्, सत्यम्। अस्तु वा बुद्धिस्थत्वेनोपलक्षणीभूतेनाननुगतघटत्वादिधर्माणां तत्पदे शक्तिधीविषयत्वं तथापि तत्पदस्य नानार्थत्वं दुष्परिहरमेव। साक्षात्परम्परया वा यदनुगमकमवच्छेदकं तदैक्यादेवावच्छेद्यैक्यमिति बुद्धिस्थत्वस्य तच्छब्दशक्यतावच्छेदकतानवच्छेदकत्वेन तच्छब्दे घटत्वाद्यननुगतधर्मावच्छिन्नशक्तेरैक्यासम्भवादननुगतनानाधर्मावच्छिन्ननिरूपितशक्तिमत्त्वरूपनानार्थत्वस्य तच्छब्दे सत्त्वात्। किञ्चोपलक्षणैक्येन शक्तेरैक्ये हर्यादिपदशक्यतावच्छेदकविष्णुत्वसूर्यत्वसिंहत्वादीनामुपलक्षणीभूतेनान्ततो बुद्धिविषयत्वादिनाऽनुगमसम्भवेन नानार्थमात्रोच्छेदापत्ते:। एवञ्च बुद्धिस्थप्रकारवान् तत्पदशक्येत्याकारकशक्तिज्ञानात् स्वरूपतो घटत्वादिप्रकारकोपस्थितिस्मरणशाब्दबोधौ तच्छब्दान्न सम्भवत:।

जातित्वेन हस्तित्वावगाहिजातिमान् हस्तिपकसम्बन्धीति ज्ञानात् स्वरूपतो हस्तित्वप्रकारकस्मरणानुदयेन स्वरूपतो यद्धर्मप्रकारेण यस्य सम्बन्धो गृहीतस्तादृशसम्बन्धिज्ञानात् स्वरूपतस्तद्धर्मप्रकारकापरसम्बन्धिन: स्मरणं भवति। तथा च यादृशरूपेण यस्य सम्बन्धो गृहीतस्तादृशसम्बन्धेन सम्बन्धिनोरेकज्ञानमपरसम्बन्धिस्मरणे कारणमिति कार्यकारणभावो वाच्य:। यथा याभ्यां रूपाभ्यां सम्बन्धिनो: धर्मिण: सम्बन्धो गृहीतस्तदेकतररूपप्रकारकसम्बन्धिज्ञानादेवापरतद्रूपेणैव सम्बन्ध्यन्तरस्मरणमित्यनुभव:। तथा च यादृशरूपाभ्यां धर्मिणो: सम्बन्धग्रहस्तादृशैकधर्मप्रकारकज्ञानादेव तादृशापरधर्मप्रकारकधर्मिस्मरणमित्यप्यनुभवो ज्ञेय:। तथा च यत्र किञ्चिद् विशेषितधर्मप्रकारकसम्बन्धज्ञानं तत्राविशेषिततद्धर्मप्रकारकस्मरणस्याननुभविकतयेष्टापत्तेरयोगात्। अन्यथा कदाचित् स्वरूपतस्तत्प्रकारिका कदाचिद्धर्मानन्तरावच्छिन्नतत्प्रकारिका स्मृतिरित्यत्र नियमाभावप्रसङ्गात्।

एवञ्च बुद्धिस्थप्रकारवान् तत्प्रकारिकेति शक्तिज्ञानात् स्वरूपतो घटत्वादिप्रकारकोपस्थितिरूपस्मरणशाब्दबोधौ तत्पदजन्यौ न भविष्यत इति चेन्मैवम्। दृष्टानुसारेणादृष्टभगवदिच्छारूपसङ्केतास्पदे कल्पनीयस्तथा च तच्छब्दो न नानार्थक:। हरिशब्दश्च नानार्थक इत्यस्य सिद्धये बुद्धिविषयतावच्छेदकरूपावच्छिन्नस्तत्पदाद् बोद्धव्य इत्याकारकस्य तत्पदं बुद्धिविषयतावच्छेदकरूपावच्छिन्नं बोधयन्नित्याकारकस्य वा भगवत्सङ्केतस्य विषयताया अवच्छेदकतासम्बन्धेनाननुगतघटत्वपटत्वनिष्ठाया अप्यनुगतबुद्धि-

विषयतावच्छेदकत्वरूपावच्छिन्नतया तच्छब्दे शक्तेरैक्यम्। नानार्थकहर्यादि-पदसङ्केतविषयानामनुगतकिञ्चिद्धर्मावच्छिन्नत्वाभावान्न हर्यादि-नानार्थकशब्दे शक्तेरैक्यम्। हर्यादिपदे उपलक्षणीभूतकिञ्चिद्धर्मप्रकारेणाभासमानस्यैव विष्णुत्व-सूर्यत्वसिंहत्वधर्मादेर्भगवत्सङ्केतरूपायां शक्तौ हर्यादिपदजन्यबोधविषयता-वच्छेदकत्वं भासत इति न नानार्थमात्रोच्छेदेति व्यवस्थास्वीकारेण पूर्वोक्तदोषाभावादिति तत्पदम्।

अथ स्वघटितवाक्यजन्यबोधाश्रयत्वेन वक्त्रभिप्रेते स्वसम्बोध्ये पुष्पशब्दस्य शक्तौ स्वं युष्मत्पदम्, स्वोच्चारयितरि स्वोच्चारणकर्त्तरि अस्मच्छब्दस्य च शक्तौ स्वमस्तत्पदम्। तथा च देव्युवाच—'मया त्वयि हतेऽत्रैव गर्जिष्यन्त्याशु देवताः' इत्यादि ऋष्यादिवाक्याद् देवीकर्तृकमहिषासुरकर्मकघातादिबोधानुपपत्तिस्तत्र देव्युच्चरितत्वस्य महिषासुर-सम्बोध्यत्वस्य चाभावात्। ऋष्यादिकर्तृकसुरथकर्मकघातादिबोधस्य च योग्यताभ्रमादापत्तिश्च। ऋष्यादेस्तादृशवाक्यप्रयोक्तृत्वाद्। सुरथादेशश्च तत्सम्बोध्यत्वादिति चेत्, न। मया त्वयि हतेऽत्र सुरथादेस्तादृशता-दृशानुपूर्वीप्रकारेण ऋष्याद्युच्चरितवाक्यश्रावणप्रत्यक्षानन्तरं देवीवाक्यस्यानु-पूर्वीरूपसामान्यप्रत्यासत्त्या ज्ञानम्। सुरथादिभिन्नानां जनानान्तु पुस्तकस्थ-तत्तद्वर्णचिह्नज्ञानादिनाऽनुभूततत्तद्वर्णस्मरणेन मनसा मत्वान्वयत्वाऽऽत्वादि मया त्वादि सामान्यप्रत्यासत्त्या मया त्वयि हतेऽत्रेत्यादिवाक्यघटकनिखिलमादि-मयादि वर्णज्ञानसहकारेण ऋष्यादिवाक्यज्ञानोत्तरम्, एकदैव देवीवाक्यज्ञानं वा जायते, ततश्च देव्युच्चरिततादृशवाक्यघटकास्मत्पदोच्चारणकर्तृत्वं देव्यास्तद्-घटकयुष्मत्पदसम्बोध्यत्वञ्च महिषासुरादौ प्रतिसन्धतः पण्डितादेः पुरुषस्य निराबाधं तत्तदर्थेषु तत्तत्पदानां शक्तिज्ञानं सम्भवत्येवेति तत्तद्वृत्ति-ज्ञानाधीनतत्तदर्थोपस्थितिभिः देवीकर्तृकमहिषासुरकर्मकहननादिशाब्दबोध इति सुधियो विभावयन्तु।

ननूक्तरीत्या मया त्वयि हतेऽत्रेत्यत्र देवीकर्तृकेति पूर्वोक्त-युष्मच्छब्दान्महिषासुरकर्मादिबोधस्योपपन्नत्वेऽपि ऋष्यादेः कथं नास्मच्छब्दाद् बोध इति चेच्छृणु, स्वीयान्मदीयस्वार्थतात्पर्यकोच्चारणानधीनोच्चारण-कर्तृत्वोपलक्षितात्, मत्वावच्छिन्ने स्वतन्त्रोच्चरितास्मत्पदस्य शक्तिरिति स्वीकारेण नोक्तदोषः। अन्यदीयं प्रकृतास्मत्पदोच्चारणकर्तृभिन्नकर्तृकं यत् स्वार्थतात्पर्य-कोच्चारणं तच्च प्रकृतास्मत्पदघटितवाक्यजन्यबोधाश्रयत्वेनेच्छाप्रयोज्योच्चारणं तादृशश्च प्रकृते देव्युच्चारणं तदधीनोच्चारणं प्रकृतेः ऋष्यादिकर्तृकं

तद्भिन्नोच्चारणं स्वतन्त्रोच्चारणं तादृशोच्चारणकर्त्तृकत्वोपलक्षितात् मत्वावच्छिन्ने स्वतन्त्रोच्चारितास्मत्पदस्य शक्तिरिति बोध्यम्।

अहं गच्छामीत्यत्र देवदत्तोच्चारितेऽस्मत्पदे प्रकृतास्मदुच्चारणकर्त्ता देवदत्तस्तद्भिन्नकर्तृकं यत्स्वार्थतात्पर्यकोच्चारणं चैत्रकर्तृकास्मत्पदोच्चारं तदनधीनास्मत्पदोच्चारणकर्त्तृकत्वोपलक्षितात् मत्वावच्छिन्नदेवदत्तनिरूपिता शक्तिस्तेनास्मत्पदवाच्यो देवदत्तो भवति। मया त्वयि हतेऽत्रैवेत्यादौ ऋष्युच्चारणं न तथा न च स्वतन्त्रोच्चारणम्। तस्यार्थप्रतिपादनद्वारा देव्युच्चारणाधीनत्वात्तेन मया त्वयि हतेऽत्रेत्यादौ अस्मत्पदेन न ऋष्यादेर्बोधः ऋषिकर्त्तृकास्मदः स्वतन्त्रोच्चारितत्वाभावात्।

न च चैत्रेणान्यदीयात् चैत्रः सुन्दरेत्यादिवाक्यादेव वाक्यार्थं प्रतीत्याहं सुन्दरेति प्रयुज्यते। तत्रास्मच्छब्दस्य स्वसमानार्थकवाक्योच्चारणसापेक्षत्वान्न स्वतन्त्रोच्चारितत्वमिति। वाक्यान्तरस्थक्रियाकर्मतापन्नस्वघटितवाक्यार्थ-प्रत्यायनेच्छानधीनं स्वोच्चारणमेव स्वतन्त्रोच्चारणमिति विवक्षणेनादोषात्। अन्यदीयाच्चैत्रः सुन्दरेत्यादिवाक्यादेव सुन्दराभिन्नस्वात्मानमिति वाक्यार्थं ज्ञात्वा चैत्रेणाहं सुन्दरेति प्रयुज्यते। तत्र स्वसमानार्थकं यच्चैत्रः सुन्दर इति वाक्यं तद्वाक्यसापेक्षस्याहं सुन्दर इति वाक्यस्य न स्वातन्त्र्यक्षतिः। अहं सुन्दर इति वाक्यस्यान्यदीयस्वार्थतात्पर्यकचैत्रः सुन्दरेत्युच्चारणाधीनत्वेऽपि वाक्यान्तरस्थ-क्रियाकर्मतापन्नस्वघटितवाक्यार्थप्रत्यायनेच्छानधीनत्वात् स्वतन्त्रोच्चारत्वस्य तत्र सत्त्वात्। मया त्वयि हतेऽत्रैवेत्यत्र देव्युवाचेति वाक्यान्तरस्थोक्तिक्रियैव तत् क्रियाकर्मतापन्नस्वास्मद्घटितवाक्यार्थबोधनेच्छाधीनं मया त्वयीत्यादि ऋषिकर्तृकोच्चारणं तस्य न स्वतन्त्रोच्चारणत्वमिति स्वतन्त्रोच्चारणकर्त्तृकत्वोप-लक्षितात्मा न ऋषिरिति ऋषौ न मयेत्यस्यास्मत्पदस्य शक्तिरतो मयेत्यनेन न ऋषेर्बोधः।

निरुक्तस्वतन्त्रोच्चारणरहितस्य चास्मच्छब्दस्य स्वघटितवाक्यार्थकर्मक-वाक्यान्तरस्थक्रियाकर्तर्येव शक्तिरिति मया त्वयि हतेऽत्रैवेत्यत्र तादृशक्रिया देव्युवाचेति वाक्यान्तरस्थोक्तिक्रियैव तत्कर्तृत्वं देव्या इति देव्या बोधो मयेत्यनेन भवति। तथा च वाक्यान्तरस्थक्रियाकर्मतापन्नस्वघटितवाक्यार्थ-प्रत्यायनेच्छानधीनं स्वोच्चारणं स्वतन्त्रोच्चारणं तादृशस्वतन्त्रोच्चारण-कर्तृत्वोपलक्षितात् मत्वावच्छिन्ने स्वतन्त्रोच्चरितास्मत्पदस्य शक्तिः। तादृशस्वतन्त्रोच्चारणरहितस्य चास्मदः स्वघटितवाक्यार्थकर्मकवाक्यान्तरस्थ-क्रियाकर्तरि शक्तिरिति बोध्यम्।

अथ सर्वशब्दस्य कुत्र शक्तिः, अशेषत्वविशिष्टे अनेकत्वविशिष्टे वा। सर्वे घटा इत्यत्र सर्वपदाद् अशेषा घटा इति बोधः, किं वा अनेके घटा इति बोधः प्रामाणिकः। अस्माच्छब्दादयमर्थो बोद्धव्य इति भगवदिच्छा अविसंवादिनी अशेषनिरूपिता किं वानेकनिरूपितेति सन्देहनिवृत्तये सर्वशब्दशक्तिविचार आवश्यकः।

ननु सर्वे घटा रूपवन्त इत्यादौ सर्वपदादुद्देश्यतावच्छेदक-घटत्वाद्यवच्छिन्नस्याशेषताप्रतीत्याशेषत्वं सर्वपदार्थः स्वीकार्यः। तथा चादृश्याया अस्माच्छब्दादयमर्थो बोद्धव्य इतीच्छायाः किं वेदम्पदमिममर्थं बोधयत्वि-तीच्छायाः शक्तिरूपायाः कार्यानुमेयायाः तादृशबोधदर्शनेनाशेषत्वनिरूपितैव शक्तिस्तत्र स्वीकार्या। अशेषत्वञ्च विधेयशून्यावृत्तितदुद्देश्यतावच्छेदकवत्त्वमिति चेत्, न, सर्वे घटाः प्रमेया इत्यादौ केवलान्वयिनः प्रमेयत्वस्याभावाप्रसिद्ध्या तत्रैतादृशाशेषत्वस्याप्रसिद्ध्याऽशेषत्वनिरूपिता भगवदिच्छारूपा सर्वशब्दे शक्तिरिति कथयितुमशक्यत्वात्। अव्याप्यवृत्तिवृत्तिमदभावाप्रतियोगित्वं केवलान्वयित्वमिति तर्कसङ्ग्रहस्य न्यायबोधिन्यां केवलान्वयिलक्षणस्य दृष्टत्वात्। यत्र वा विधेयशून्ये उद्देश्यतावच्छेदकीयसम्बन्धे वृत्तेरप्रसिद्धिस्तत्रापि गत्यन्तराभावाच्च। यथा सर्वे घटा जातिमन्त इत्यादौ उद्देश्यतावच्छेदकघटत्व-प्रतियोगिकसमवायसम्बन्धावच्छिन्नजातिरूपविधेयशून्या भावादिनिरूपितत्व-स्याप्रसिद्धिरिति। न च तदुद्देश्यतावच्छेदकव्यापकतातद्विधेयवत्त्वमशेषत्वमिति वाच्यम्। रूपवन्तः सर्वे घटा रूपवन्त इत्यस्य प्रामाणिकस्यादर्शनेन तद्विधेयोद्देश्यतावच्छेदकव्यापकतत्तद्विधेयवत्वावच्छिन्ने विधेयान्वयस्या-व्युत्पन्नत्वेन रूपाविधेयोद्देश्यतावच्छेदकघटत्वव्यापकरूपावच्छिन्ने घटे रूपावच्छिन्नघटस्यानन्वयापत्तेः। अभेदान्वयबोधे तद्धर्मभेदस्य कारणत्वात्। अन्यथा घटो घट इत्यत्राभेदबोधापत्तेः। तथा च घटाभिन्नघटबोधतात्पर्येण घटो घट इति वाक्यस्य प्रामाण्यापत्तेरिति चेत्, न। अशेषत्वं न सर्वपदार्थः। न वा तन्निरूपिता शक्तिः सर्वशब्दे स्वीकार्या उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयोपगमादेवाशेषत्वलाभोपपत्त्योक्ताशेषस्य सर्वपदार्थत्वाभावात्। अनन्यलभ्यो हि शब्दार्थ इत्यस्य सर्वमान्यत्वात्। न हि किल लब्धस्य लाभं स्वीकुर्वन्ति मान्याः किन्त्वलब्धस्य लाभमिच्छन्ति। अतोऽनेकत्वं सर्वपदार्थस्तन्निरूपितभगवत्सङ्केतरूपा शक्तिः सर्वशब्दे स्वीकार्येति कथनेनोक्तदोषाभावात्। अनेकत्वञ्चोद्देश्यतावच्छेदकसमानाधिकरणभेदप्रति-योगित्वरूपं बोध्यम्। सर्वे घटा रूपवन्त इत्यादौ रूपविधेयोद्देश्यतावच्छेदक-

घटत्वसमानाधिकरणतत्तद्घटो नेति भेदप्रतियोगित्वस्य चालिनीन्यायेनोद्देश्यतावच्छेदकघटत्वाधिकरणे तत्तद्घटभेदमादाय सत्त्वात्। अत एव सर्वं गगनं शब्दवदित्यादयो न प्रयोगाः प्रामाणिका भवन्ति। शब्दविधेयोद्देश्यतावच्छेदकगगनत्ववति गगनं नेति भेदस्यासत्त्वेन तद्भेदप्रतियोगित्वरूपानेकत्वस्यापि गगनेऽसत्त्वात्। भेदस्य स्वीयप्रतियोगितावच्छेदकेन विरोधान्न भवति घटो घटो नेति घटे घटभेदः। अनेकत्वं सर्वपदार्थस्तन्निरूपिता भगवदिच्छारूपसङ्केतरूपा शक्तिः सर्वशब्दे इत्यपि न युक्तम्। गगनं न गगनघटोभयमिति द्वित्वावच्छिन्नप्रतियोगिताकभेदस्य केवलान्वयित्वेन गगनेऽपि सत्त्वेनोद्देश्यतावच्छेदकगगनत्वसमानाधिकरणभेदप्रतियोगित्वरूपानेकत्वस्य गगने सत्त्वेन सर्वं गगनं शब्दवदिति प्रयोगस्य प्रामाणिकत्वापत्तेरिति चेदत्र ब्रूमः।

स्वार्थान्वयितावच्छेदकधर्मव्यापकतादृशधर्मावच्छिन्नान्वयितावच्छेदकधर्मावच्छिन्नव्याप्यपर्याप्तिकधर्मावच्छिन्नः सर्वपदार्थस्तादृशपदार्थनिरूपिता भगवत्सङ्केतरूपा शक्तिः सर्वशब्दे स्वीकार्येति भगवदिच्छाया अप्यविसंवादित्वमुपपन्नम्। स्वपदार्थः सर्वशब्द इत्यादौ स्वार्थान्वयितावच्छेदकत्वविधया स्वसमभिव्याहृतपदप्रतिपाद्यत्वेन या वक्तृबुद्धिः तद्विषयकधर्मव्यापकत्वे सति स्वार्थान्वयि अन्वयितावच्छेदकत्वविधया स्वसमभिव्याहृतप्रतिपाद्यत्वेन या वक्तृबुद्धिः तद्विषयतावद्धर्मावच्छिन्नव्याप्याया पर्याप्तिस्तत्प्रतियोगिकयावत्वावच्छिन्ने सर्वशब्दस्य शक्तिर्वाच्या। स्वार्थान्वयितावच्छेदकत्वञ्च स्ववृत्तिग्रहजन्योपस्थितिप्रयोज्यस्वार्थनिष्ठविषयतानिरूपितविषयतावच्छेदकत्वम्। तदाश्रयधर्मव्यापकत्वञ्च तद्वन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वम्। तद्वत्वञ्च स्वार्थान्वयितावच्छेदकताघटकसम्बन्धेन।

सर्वे घटा रूपवन्त इत्यादौ स्वं सर्वशब्दस्तदर्थो यावत्त्वावच्छिन्नोऽर्थः, तदन्वयी घटपदार्थः तन्निष्ठान्वयितावच्छेदकरूपत्वावच्छिन्नव्याप्या या घटगतयावत्त्वप्रतियोगिकपर्याप्तिस्तत्पर्याप्तिप्रकारो यावत्वावच्छिन्नः, सर्वपदार्थस्तस्य घटेऽन्वयस्तत्रैव रूपस्यान्वयः। तथा च यावदभिन्ना घटा रूपवन्त इति शाब्दबोधो भवति।

अथ किं शब्दात्कुत्रापि चैत्रस्य कुत्रापि वितर्कादेर्बोधदर्शनेनोदेति सन्देहः किं शब्दस्य कुत्र शक्तिरिति। कः पचति इति प्रश्ने चैत्रः पचति इत्युत्तरं ददातीति चैत्रस्य किमिन्दुः किं पद्मं किमु मुकुरबिम्बं किमु मुखमित्यादौ वितर्कस्य च बोधदर्शनात् तादृशः सन्देहो जायते सन्देहश्चैकस्मिन् धर्मिणि विरुद्धकोटिद्वयावगाहिज्ञानम्। तथा च किं शब्दश्चैत्रवाचको न वा, किं शब्दो

वितर्कवाचको न वेति सन्देहः फलति, सन्देहश्च न निःसन्दिग्धाम्प्रवृत्तिं करोतीति किंघटितप्रश्नोत्तरदाने कथं जनो निःसन्दिग्धं प्रवर्तेतेति चेच्छृणु। स्वीयजिज्ञासाज्ञापनाय किंपदघटितवाक्यप्रयोगस्य दर्शनेन किंपदस्य जिज्ञासितेऽर्थे शक्तिरिति बोध्यम्। तथा च किंपदं जिज्ञासितार्थं बोधयतु किं वा जिज्ञासितार्थः किंपदाद्बोद्धव्य इति भगवत्सङ्केतरूपा शक्तिः, किं पदे बोध्या। उद्देश्यवाचककिंपदाद्विधेयवाचककिंपदाच्च जिज्ञासा भिन्ना भिन्ना भवति। उद्देश्यवाचककिंपदस्य स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकधर्मावच्छिन्न-विधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन वक्तृजिज्ञासितधर्मावच्छिन्ने शक्तिरुप-स्थाप्यतावच्छेदकत्वान्तमुपलक्षणतयाऽनुगमकं शाब्दबोधे तदभावात्। एवञ्च कः पचतीत्यतः विक्लित्त्यनुकूलव्यापारानुकूलकृतित्वावच्छिन्नविधेयता-निरूपितोद्देश्यतावच्छेदकत्वेन वक्तृजिज्ञासितः चैत्रत्वादिधर्मस्तद्वान् चैत्रो मैत्रो वा पचतीत्यन्वयबोधो भवति। तथा च किञ्चिद्धर्मावच्छिन्नोद्देश्यताक-पाककर्तृत्वविधेयकज्ञानं भवत्वित्याकारकजिज्ञासायाः किञ्चिद्धर्मा-वच्छिन्नोद्देश्यताकपाककर्तृत्वविधेयकज्ञानविषयकत्वेन किञ्चिद्धर्मा-वच्छिन्नोद्देश्यताकपाककर्तृत्वविधेयकज्ञानं भवत्वितीच्छाविषयीभूतज्ञान-जनकाद्ब्राह्मणः पचतीत्युत्तरवाक्यात्तज्जिज्ञासानिवृत्तिरिति कः पचतीति प्रश्नानन्तरं ब्राह्मणः पचतीत्युत्तरं प्रयुज्यते।

न च कः पचतीति प्रश्नानन्तरं प्रमेयः पचतीति कथं न प्रयुज्यते। प्रमेयः पचतीति वाक्यजन्यपाकानुकूलव्यापारानुकूलकृतिमान् प्रमेय इति ज्ञानस्य किञ्चिद्धर्मावच्छिन्नोद्देश्यताकपाककर्तृत्वविधेयकज्ञानं भवत्वितीच्छाविषयत्वेन तादृशेच्छाविषयीभूतज्ञानजनकात्प्रमेयः पचतीति वाक्यात्तादृशजिज्ञासाया निवृत्तेरिति वाच्यम्। जिज्ञासाविषयीभूतविधेयन्यूनवृत्तिधर्मावच्छिन्न एव किंपदशक्तेः स्वीकारेणादोषात्। न्यूनवृत्तित्वञ्च विधेयसमानाधिकरण-भेदप्रतियोगितावच्छेदकत्वे सति विधेयसमानाधिकरणत्वम्। कः पचतीति जिज्ञासानिवर्तकज्ञानजनकीभूतब्राह्मणः पचतीत्युक्तवाक्यघटकब्राह्मणपदवाच्यता-वच्छेदकब्राह्मणत्वस्य पाककर्तृत्वरूपविधेयसमानाधिकरणभेदप्रतियोगिताकत्व-विशिष्टतादृशविधेयसामानाधिकरण्येन पाककर्तृत्वरूपविधेयव्याप्यत्वम्। चैत्रः पचतीत्यत्र चैत्रोद्देश्यकपाककर्तृत्वसमानाधिकरणो भेदः, न पचति ब्राह्मणो ब्राह्मणो न पचतीति वाक्यजन्यतादृशब्राह्मणोद्देश्यकपाककर्तृत्ववात्र ब्राह्मण इत्याकारकपाककर्तृत्वे ब्राह्मणभेदः किं वा तादृशकर्ता न ब्राह्मण इत्याकारक-तादृशभेदप्रतियोगितावच्छेदकत्वं ब्राह्मणत्वे वर्तते, ब्राह्मणः पचतीत्यत्र ब्राह्मणोद्देश्यकपाककर्तृत्वविधेयसामानाधिकरण्यमपि वर्तत इति भवति ब्राह्मणत्वं

पाककर्तृत्वरूपविधेयन्यूनवृत्ति:। प्रमेयत्वस्य केवलान्वयित्वेन सर्वत्र विद्यमानत्वेन तादृशविधेयव्यापकत्वात् प्रमेयत्ववान्नेति भेदस्यालीकतया न तादृश-विधेयसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम्।

विधेयवाचककिंपदस्य स्वसमभिव्याहृतपदोपस्थाप्यता-वच्छेदकत्वोपलक्षितधर्मावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकतया जिज्ञासितो यो विशेषधर्मस्तदवच्छिन्ने शक्ति:। धर्मे विशेषत्वञ्च स्वसमभिव्याहृत-पदोपस्थाप्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नोद्देश्यताकविधेयतावच्छेदकत्वेन वक्तृज्ञानविषयत्वं तच्च प्रकरणादिना ज्ञायते। अयं क इत्यादौ जिज्ञासायामिदन्त्वावच्छिन्नांशे विधेयतावच्छेदकत्वेन जिज्ञासितधर्मवानित्या-कारको बोध:, तेन तद्विषयकजिज्ञासाविषयीभूतज्ञानजनकत्वञ्चायं ब्राह्मण इत्याद्युत्तरवाक्यं तादृशप्रश्नानन्तरं प्रयुज्यते। विधेयवाचकं किं पदमयं क इत्यत्र कशब्दप्रकृतिरूपं किं पदम्, तत्समभिव्याहृतेदंपदोपस्थाप्यतावच्छेदकत्वोप-लक्षितेदन्त्वरूपधर्मावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकतया जिज्ञासितो विशेषधर्मो ब्राह्मणत्वादिरूपस्तद्धर्मावच्छिन्नोऽयं क इत्यत्र विधेयवाचकस्य कशब्दप्रकृतिरूपस्य किंशब्दस्य शक्ति:।

अथ योऽयं घट: सोऽयं घट: स ब्राह्मणो देवपूजको य आगच्छतीत्यादिवाक्यघटकयत्पदात् नानाधर्मावच्छिन्नानां बोधेन यत्पदस्य कुत्र शक्तिरिति सन्देहनिवृत्तये यत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयतावच्छेदकत्वोप-लक्षितधर्मावच्छिन्ने यत्पदस्य शक्तिरिति बोध्यम्। अत एव यत्पदेनार्थप्रत्यायने नियमतस्तत्पदापेक्षा दृश्यते। तत्पदसमभिव्याहारज्ञानं विना तत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितानुगमकधर्मस्याग्रहेण शक्तिज्ञानमेव न सम्भवति।

ननु तत्पदजन्यप्रतिपत्तिश्च तत्पदघटितवाक्यजन्या तत्पदघटितवाक्यञ्च यत्पदघटितं यत्तदोर्नित्यसम्बन्धादतो यत्पदस्य शक्त्यग्रहे तत्पदजन्य-प्रतीत्यसम्भवस्तत्पदजन्यप्रतीत्यभावे यत्पदजन्यप्रतीत्यभावे यत्पदजन्यप्रतीत्य-भाव इत्यन्योन्याश्रय:, अन्योन्याश्रयदोषेण च यत्तत्पदाभ्यां कथं शक्तिग्रह इति चेत्, न।

प्रकरणादिना तच्छब्दजन्यप्रतीतिपूर्वमपि तत्प्रतिपाद्यतया वक्तुर्बुद्धि: सुग्रहा इति न तच्छब्दजन्यप्रतीते यत्पदशक्तिग्रहापेक्षेति यत्पदशक्तिग्रहे वा तत्पदशक्तिग्रहजन्यतत्पदजन्यबोधस्यापेक्षेति, यत्तत्पदशक्तिग्रहयोर्न परस्परापेक्षेति यत्पदे शक्तिग्रहस्योपपन्नत्वात्। ननु—

साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके।
उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः।।

इत्यादौ तत्पदासत्त्वेन तत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्माज्ञानेन तादृशधर्मावच्छिन्ने यत्पदस्य कथं शक्तिग्रह इति चेच्छृणु। इयञ्च व्युत्पत्तिः प्रक्रम्यमाणपरामर्शकयच्छब्दस्य चैत्रेण समागतो यस्तत्रावलोकित इत्यादौ चैत्रपदेनाप्युपस्थापितस्य चैत्रस्य यच्छब्देन बोधः, पूर्वप्रक्रान्तस्य कृतपदोपस्थाप्यव्यापारस्यैवाभेदेन मीलनान्वयितया यच्छब्देन बोध इति।

'यं सर्वशैला' इत्यादावपि तदनुरोधेन पूर्वप्रयुक्तपदोपस्थापितेऽपि शक्त्यन्तरं स्वीकरणीयम्। यं हिमालयनामकं पर्वतमित्यर्थः। यं सर्वशैला इत्यत्र तच्छब्दं विनापि यच्छब्देन चैत्रव्यापारादिबोधनेन पूर्वपदोपस्थापितेऽप्यर्थे यच्छब्दस्य शक्तिश्शक्त्यन्तरं पूर्वकथितशक्तिभिन्ना शक्तिः स्वीकार्या। ननु यथा हिमालयः प्रक्रान्तस्तथा तोयनिधिरपि तर्हि कुतो हिमालयस्यैव बोधो न तु तोयनिधिरिति चेत्, न। स्वप्रयोजकबुद्धिविषयतावच्छेदकत्वे सति पूर्वपदजन्योपस्थितिविषयतावच्छेदको यो धर्मस्तदवच्छिन्नेऽपि यत्पदस्य शक्तिरिति।

यं घटमद्राक्षं तमहं स्पृशामीत्यनुव्यवसायस्य पृथक्पृथगात्मविषयकत्वेन तत्तद्विषयकत्वेन च भिन्नत्वमित्यनुव्यवसायभेदो स्वविषयभेदमवलम्बते, एवञ्च तत्तदात्मतत्तद्घटव्यक्तिभेदस्तच्छब्दशक्तिम्भेदयति। तच्छब्दो नानार्थको न वेति निवृत्तये तत्पदे शक्तिनिर्णय आवश्यकोऽन्यथा तत्र निःसन्दिग्धा प्रवृत्तिर्न स्यादिति चेत्सत्यम्। यत्पदोपस्थाप्ये तत्पदशक्तिर्बोध्या। अत एव प्रक्रम्यमाणवाचकतच्छब्देनापि नियतो यत्पदमपेक्ष्यते तमादाय य इहास्तीति-वत्तमानय घट इहास्तीत्यादितो घटानयनादिप्रतीतेरनुभवविरुद्धत्वात्। एवञ्च यत्पदजन्योपस्थितिविषयकत्वेन वक्तृबुद्धिविषयतावच्छेदकावच्छिन्ननिरूपिता शक्तिस्तत्पदे स्वीकार्या। तथा च यत्पदजन्योपस्थितिविषयत्वेन वक्तृबुद्धि-विषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नस्तत्पदाद्बोद्धव्य इति सङ्केतरूपेच्छा शक्तिः, किं वा तत्पदं यत्पदजन्योपस्थितिविषयत्वेन वक्तृबुद्धिविषयता-वच्छेदकत्वोपलक्षितधर्मावच्छिन्नं बोधयत्विति सङ्केतरूपा शक्तिर्बोध्या। शब्दार्थयोर्भेदेन भवेदस्य भेदो विनिगमनाविरहेणार्थविशेष्यकः पदविशेष्यको वा उक्तसङ्केतस्य शक्तित्वमङ्गीकार्यम्।

एवमिदमेतदोः वक्तृप्रत्यक्षज्ञाननिरूपितलौकिकविषयतावच्छेदकत्वो-पलक्षितधर्मावच्छिन्ने शक्तिर्ज्ञेया, वक्तृप्रत्यक्षज्ञाननिरूपितलौकिकविषयता-

वच्छेदकत्वमुपलक्षणविधया धर्मे भासते, तस्य न शाब्दबोधविषयत्वं किन्तु केवलधर्मावच्छिन्नस्यैवेति विज्ञेयम्। तेनातीन्द्रियस्य गगनादेरलौकिकप्रत्यक्ष-विषयत्वेऽपि इदं गगनम्, एतन्मन इत्यादी न प्रयोगौ। न चैवमिदं द्व्यणुकं नित्यमणुत्वादित्यादौ अतीन्द्रिये द्व्यणुके कथमिदं दीधितिकृता प्रयुक्तं सङ्गच्छते। तस्येदम्पदस्य वक्तृप्रत्यक्षज्ञाननिरूपितलौकिकविषयतावच्छेदकत्वोपलक्षित-धर्मावच्छिन्ने शक्तत्वादिति वाच्यम्। तत्तद्व्यक्तित्वावच्छिन्नेऽपीदमेतदो: शक्त्यन्तरस्वीकारेणादोषात्।

अदसश्च परोक्षविषये शक्ति:। तथा च लौकिकप्रत्यक्षभिन्नज्ञानविषयता-वच्छेदकत्वोपलक्षितधर्मावच्छिन्नं बोधयतु अदस्पदम्, किं वा अदस्पदाल्लौकिकप्रत्यक्षभिन्नज्ञानविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नो बोद्धव्य इतीच्छात्मिका भगवत्सङ्केतरूपा शक्तिरदस्पदे बोध्या। अवच्छेदकत्वान्तमुपलक्षणम्, अत एव न तस्य शाब्दबोधविषयत्वम्। 'देवोऽसौ विरतप्रपञ्चरचनाकल्लोलकोलाहल:' इत्यादौ परमेश्वरस्य लौकिकप्रत्यक्षा-विषयत्वेऽपि अलौकिकप्रत्यक्षविषयत्वमादायासावित्यादिना तस्य परमेश्वरस्य बोध:। संयोग-संयुक्तसमवाय-संयुक्तसमवेतसमवाय-समवाय-समवेतसमवाय-विशेष्यविशेषणभावरूपलौकिकसन्निकर्षजन्यप्रत्यक्षं लौकिकप्रत्यक्षम्। चक्षुरर्थयो: संयोगेनायं घट इति प्रत्यक्षम्। चक्षुस्संयुक्तसमवायाद्रूपस्य चाक्षुषं प्रत्यक्षम्। चक्षु: संयुक्तसमवेतसमवायेन रूपत्वस्य चाक्षुषप्रत्यक्षम्, समवायेन शब्दस्य प्रत्यक्षम्, समवेतसमवायेन कत्वखत्वादे: प्रत्यक्षम्। विशेष्यविशेषणभावसन्निकर्षेण घटाभाववद् भूतलमिति प्रत्यक्षम्, सर्वाण्येतानि प्रत्यक्षाणि लौकिकानि। अलौकिकसन्निकर्षजन्यं ज्ञानमलौकिकं प्रत्यक्षम्। अलौकिकसन्निकर्षस्त्रिविध: सामान्यलक्षणा ज्ञानलक्षणा योगजश्च इति भेदेन बोध्यम्। घटत्वेन सकलघटविषयकं ज्ञानं घटत्वरूपसामान्यलक्षणजन्यलौकिकप्रत्यक्षम्। ज्ञानलक्षणाजन्यं ज्ञानं सुरभिचन्दनमिति चाक्षुषप्रत्यक्षम्, योगिनान्तु योगजसन्निकर्षजन्यं ज्ञानं सकलपदार्थविषयकं प्रत्यक्षमलौकिकप्रत्यक्षम्। तथा चालौकिकसन्निकर्षजन्यानि प्रत्यक्षज्ञानानि त्रिविधानि ज्ञेयानि। वस्तुतस्तु 'क्रमादमुं नारद इत्यबोधि स:', 'दधाति परममी सायका निष्पतन्त:' इत्यादयो लौकिकप्रत्यक्षविषयेऽपि भूरितरप्रयोगदर्शनादतिसन्निकृष्टलौकिकविषयताभिन्न-प्रत्यक्षीयविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नेऽदसश्शक्तिर्वाच्येति शक्ति-वादमूले परोक्षपदं तादृशविषयताशालिप्रत्यक्षपरम्। अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयादिति शाब्दिकैर्गीतम्। सन्निकृष्टं विप्रकृष्टं तु वक्तृनिरूपितं

ज्ञेयम्। तेन विप्रकृष्टे अदःशब्दप्रयोगः। सन्निकृष्टे इदमेतदोः प्रयोग इति बोध्यम्।

अथ चैत्रः स्वपुत्रं पश्यतीत्यत्र स्वशब्देन यथा चैत्रस्य बोधः, तथा स्वं चैत्रपुत्रः पश्यतीत्यत्रापि स्वशब्देन कथं न चैत्रस्य शाब्दबोधः, एकधर्मावच्छिन्न-निरूपितैकायाः शक्तेः स्वशब्दे सत्त्वात्। न च स्वघटितवाक्यजन्यबोधीय-मुख्यविशेष्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने स्वशब्दस्य शक्तिस्वीकारे नोक्तदोषः, स्वं चैत्रपुत्रः पश्यतीति वाक्यजन्यबोधीयमुख्यविशेष्यता पुत्रे वर्तते, न चैत्रे प्रकारत्वासमानाधिकरणविशेष्यता मुख्या भवति, चैत्रत्वनिष्ठप्रकारता-निरूपिता विशेष्यता न मुख्या भवितुमर्हति, तस्याः पुत्रनिष्ठविशेष्यतानिरूपित-प्रकारतासमानाधिकरणत्वादिति वाच्यम्। तथा सति स्वपुत्रदर्शिनं चैत्रं मैत्रः पश्यतीत्यत्र स्वपदेन चैत्रबोधानुपपत्तेः। स्वत्वनिष्ठप्रकारतानिरूपित-स्वार्थनिष्ठविशेष्यतायाः पुत्रनिष्ठविशेष्यतानिरूपितप्रकारतासमानाधिकरणत्वात्। नन्ववान्तरवाक्यार्थबोधे चैत्रस्य मुख्यविशेष्यतया, नेयमनुपपत्तिरवान्तरवाक्यं स्वपुत्रदर्शिनं चैत्रमिति चेत् तज्जन्यबोधे चैत्रो मुख्यविशेषतया भासते, स्वपुत्रदर्शिनामाश्रयाभिन्नं चैत्रमिति बोधात्। तथा च स्वघटितं वाक्यं स्वपुत्रदर्शिनं चैत्रमिति वाक्यम्, तज्जन्यबोधः स्वसम्बन्धिपुत्रकर्मकदर्शनवदभिन्नं चैत्रमित्याकारकस्तदीयमुख्यविशेष्यता चैत्रनिष्ठा तदवच्छेदकत्वोपलक्षित-चैत्रत्वावच्छिन्ने चैत्रे स्वशब्दे शक्तेः सत्त्वेन तच्छक्तिज्ञानजन्योपस्थितिजन्य-शाब्दबोधीयमुख्यविशेष्यतायाः प्रकारत्वासमानाधिकरणायाः चैत्रे सत्त्वात्। न च प्रकृतिप्रत्ययार्थौ सहार्थं ब्रूतस्तत्र प्रत्ययार्थस्यैव प्राधान्यमिति, स्वपुत्रदर्शिनं चैत्रम्मैत्रः पश्यतीत्यत्रावान्तरवाक्यं स्वपुत्रदर्शिनं चैत्रमित्यन्तं तज्जन्यबोधः, द्वितीयार्थः कर्मत्वमुख्यविशेष्यकस्वपुत्रदर्शिचैत्रप्रकारक एव जायते, संख्याकालातिरिक्तविभक्त्यर्थस्य प्रकृत्यर्थविशेष्यतया भाननियमात्, तथा च चैत्रे मुख्यविशेष्यत्वविरहेण कुतः स्वपदेन चैत्रस्य बोध इति वाच्यम्। सुबर्थकर्मत्वादिकं प्रकृत्यर्थविशेषणतयैव भासत इति प्राचीनमते उक्तदोषाभावात्। अवान्तरवाक्यजन्यप्रदर्शितबोधे चैत्रस्यैव प्रधानत्वादिति चेच्छृणु—शाब्दबोधो द्विविधः, विशिष्टवैशिष्ट्यावगाही, उपलक्षितावगाही च। तत्र विशिष्टवैशिष्ट्या-वगाहिज्ञानं प्रति विशेषणतावच्छेदकप्रकारेण विशेषणज्ञानस्य कारणत्वेन तत्सम्पादनार्थं महावाक्यघटकखण्डवाक्यजन्यबोध आवश्यको भवति। अन्यथा विशेषणतावच्छेदकप्रकारेण विशेषणज्ञानानुपपत्तेः। विशेषणे यद्विशेषणं तदेव विशेषणतावच्छेदकमिति मुक्तावल्याः प्रत्यक्षखण्डे दृश्यते।

विशिष्टवैशिष्ट्यावगाहिज्ञानं प्रति विशेषणतावच्छेदकप्रकारकं ज्ञानं कारणम्, विशेषणे यद्विशेषणं तदेव विशेषणतावच्छेदकमिति प्रत्यक्षखण्डे सिद्धान्तमुक्तावल्याम्, उपलक्षितावगाहिज्ञाने च विशेषणज्ञानस्यानावश्यकतया महावाक्यघटकप्रत्येकपदार्था उपस्थिता: 'खले कपोतन्यायेन' एकं विशेषणमपरञ्च विशेष्यमिति रीत्या युगपद्भासन्ते। तत्र कुत्र कस्यचिद्विशेषणत्वं कस्यचिद्विशेष्यत्वमिति नियमस्त्वाकाङ्क्षाज्ञानादेवोपपद्यते योग्यतया वा। खले कपोतन्यायाकारस्तु सिद्धान्तमुक्तावल्यां विश्वनाथेनोक्त:। तथा हि—

वृद्धा युवान: शिशव: कपोता: खले यथामी युगपत्पतन्ति।
तथैव सर्वे युगपत्पदार्था: परस्परेणान्वयिनो भवन्ति।। इति।

महावाक्यघटकप्रत्येकपदजन्यप्रत्येकपदार्थोपस्थित्यव्यवहितोत्तरमेव जायमाने, अवान्तरवाक्यार्थबोधं विनैव विशेष्ये विशेषणमिति रीत्या खले कपोतन्यायेन महावाक्यार्थबोधे यत्र तात्पर्यं तत्र चैत्रे मुख्यविशेष्यत्वाभावेन स्वपुत्रदर्शिनं चैत्रम्मैत्र: पश्यतीत्यत्र स्वशब्देन चैत्रबोधानुपपत्ते:। स्वघटित-वाक्यजन्यबोधीयमुख्यविशेष्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्न: स्वपदाद्बोद्धव्य इति सङ्केतात्मकभगवदिच्छारूपशक्तिज्ञानाधीनमहावाक्यजन्यबोधे चैत्रस्य न मुख्यविशेष्यतया भानम्, किन्तु मैत्रस्य पश्यतिवाक्यघटकदर्शननिरूपिततया विभक्त्यर्थे कर्मत्वे तस्य विशेषणत्वेन तन्निष्ठविशेष्यतानिरूपितप्रकारतया सामानाधिकरण्यस्य तन्निष्ठविशेष्यतायां किं वा मैत्रनिष्ठविशेष्यता-निरूपितप्रकारतासामानाधिकरण्यस्य च तत्र सत्त्वात्। कुत्रचिद्विशिष्टवैशिष्ट्या-वगाहिज्ञानं कुत्रचिदुपलक्षितावगाहिज्ञानमित्यत्र तात्पर्यस्यैव नियामकत्वमिति धीधनैर्बोध्यम्। न च स्वार्थस्य साक्षात्परम्परया वा विशेषणत्वं तादृशवाचकत्वं स्वशब्दस्येति कथन्नायं दोष:, तथा हि स्वार्थनिष्ठप्रकारतानिरूपितविशेष्यता-वच्छेदकत्वेन वक्त्रभिप्रायविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्न: स्वपदाद् बोद्धव्य:, किं वा स्वपदं स्वार्थनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकत्वेन वक्त्रभिप्रायविशेष्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नं बोधयत्विति भगवत्सङ्केत-कल्पने नायं दोष:। स्वं चैत्रपुत्र: पश्यतीत्यादौ स्वपदार्थे चैत्रपुत्रादेर्विशेष्यतया स्वपुत्रदर्शिनं चैत्रम्मैत्र: पश्यतीत्यादौ च स्वार्थे चैत्रस्य विशेष्यतया च स्वशब्देन चैत्रपुत्रस्य चैत्रस्य च बोध इति स्वं चैत्रपुत्र: पश्यतीत्यत्र चैत्रपुत्रस्य स्वपदेन बोध:, स्वपुत्रदर्शिनं चैत्रं मैत्र: पश्यतीत्यादौ च स्वपदेन चैत्रस्य बोध उपपन्न इति वाच्यम्। एवमपि स्वपुत्रश्चैत्रेण दृश्यत इत्यादौ चैत्रपुत्रबोधानुपपत्ते:।

व्युत्पत्तिवादे तु चाक्षुषत्वावच्छिन्नवाचकदृश्यादिसमभिव्याहृतद्वितीयाया लौकिकविषयत्वमर्थः, तादृशकर्माख्यातस्य लौकिकविषयत्वमर्थः। एवञ्च स्वपुत्रश्चैत्रेण दृश्यते इत्यत्र कर्माख्यातस्थले आख्यातेन स्वपुत्रे दृश्धात्वर्थनिरूपितलौकिकविषयित्वं बोध्यते। तथा च चैत्रसमवेतचाक्षुष-प्रत्यक्षात्मकज्ञाननिरूपितलौकिकविषयितानिरूपितविषयितावान् स्वचैत्रसम्बन्ध्य-भिन्नः पुत्र इति बोधो भवति। प्रथमान्तार्थमुख्यविशेष्यताशालिशाब्दबोध इति नैयायिकसिद्धान्तः। अत एव शिरोमणिकृताख्यातशक्तिवादे अत्र प्राञ्चः चैत्रेण पच्यते तण्डुल इत्यत्र चैत्रनिष्ठभावनाविषयपाकजन्यफलशाली तण्डुल इति प्रतीयते।

'मैत्रेण ज्ञायते इष्यते क्रियते घटे'त्यादौ सविषयकपदार्थाभिधायि-धातुयोगे कर्मप्रत्ययेन यथायथं विषयित्वं विषयत्वञ्च कर्तृतिङा स्वाश्रयत्वं तृतीयया चाधेयत्वं बोध्यत इति शिरोमणिकृते शक्तिवादे विद्यते। यथायथमिति सुपां विषयित्वं कर्मतिङाञ्च विषयत्वमर्थेत्यर्थः। तथा च स्वपदार्थस्य पुत्रे विशेषणत्वेन शाब्दबोधीयमुख्यविशेष्यत्वाभावात् स्वपदेन चैत्रस्य बोधानुपपत्तेः। चैत्रस्य समवायसम्बन्धावच्छिन्न आधेयतासम्बन्धेन प्रत्यक्षात्मकज्ञाने विशेषणत्वान्न शाब्दबोधीयमुख्यविशेषत्वमिति चेच्छृणु, साक्षात् परम्परया वा यः स्वार्थस्य विशेष्यः, यश्च समभिव्याहृतक्रियाकारकपदार्थस्तदुभयत्रैव स्वपदस्यैव शक्तिः। मतुपो भेदसम्बन्धेनान्वयतात्पर्यग्राहकत्वं न तु सम्बन्ध्यर्थकत्वमिति मते शुक्लत्ववान् घटेत्यादौ स्वपदार्थे साक्षाच्छेषस्य घटस्य बोधाय साक्षादिति। एवञ्च शुक्लः स्वाभिन्नो घट इति बोधः। अत्राभेदसम्बन्धस्य प्रतियोगी स्वपदार्थः, अनुयोगी घटस्तत्र शुक्लशब्दार्थः शुक्लगुणवानित्यर्थः। तस्याभेदेन घटेऽन्वयस्तथा च शुक्लाभिन्नः स्वाभिन्नो घटेति बोधस्तत्र स्वपदार्थस्य साक्षादविशेष्यो घटस्तस्य बोधाय साक्षादित्युक्तम्। तथा च स्वपदं स्वसाक्षादन्वयिमुख्यपदार्थतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नो बोधयत्वितीच्छा-रूपभगवत्सङ्केतः स्वशब्दे वर्तते। स्वव्यापकवह्निसमानाधिकरणो धूम इत्यत्र स्वपदेन धूमस्य बोधनाय परम्परयेति। स्वस्य व्यापको यो वह्निस्तत् समानाधिकरण इति बोधो भवति, तत्र स्वपदार्थस्य मुख्यविशेष्यपरम्परा मुख्यविशेष्यो धूमस्तथा च स्वपरम्परयान्वयिमुख्यपदार्थतावच्छेदकत्वोप-लक्षितधर्मावच्छिन्नं स्वपदं बोधयत्विति भगवदिच्छारूपसङ्केतः स्वशब्दे वर्त्तते, अतोऽत्र स्वशब्देन धूमस्य बोधो भवति। चैत्रः स्वं पश्यति, चैत्रेण स्वपुत्रो दृश्यते, इत्यादौ चैत्रस्य बाधनार्थम्, चैत्रमभिवन्दने स्वपुत्रेत्यत्र च स्वपदेन

चैत्रस्य बोधनार्थम्, समभिव्याहृतक्रियाकारकपदार्थेति। तथा च स्वसमभिव्याहृतक्रियाकारकपदार्थतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नं स्वपदं बोधयत्वितीच्छारूपसङ्केत: स्वशब्दे वर्त्तते। चैत्रभ्राता स्वपुत्रं पश्यति, चैत्रभ्राता स्वपुत्रो दृश्यत इत्यादौ चैत्रस्य तु पदार्थस्य विशेष्यत्वाभावेन स्वसमभिव्याहृतक्रियाकारकपदार्थत्वाभावेन च न स्वशब्देन बोध:। क्रियाकारकत्वं च क्रियान्वितविभक्त्यर्थान्वयिपरम्। तच्च चैत्रभ्रातर्येव न तु चैत्रे इति बोध्यम्।

साक्षात्परम्परया वा य: स्वार्थस्य विशेष्य:, यश्च स्वसमभिव्याहृतक्रियाकर्त्तृके पदार्थस्तदन्यतरपदार्थतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नं बोधयतु स्वशब्देति भगवत्सङ्केतस्तद्धर्मावच्छिन्नवाचक: स्वशब्द:। मुख्यत्वस्य निवेशान्न स्वव्यापकवह्निसमानाधिकरणो धूम इत्यत्र स्वशब्देन वह्नेर्बोध:। तस्य मुख्यत्वाभावात् प्रकारत्वासमानाधिकरणविशेष्यत्वं मुख्यविशेष्यत्वम्। प्रकृते च धूमनिष्ठविशेष्यतानिरूपितसामानाधिकरण्यस्वनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रकारत्वावच्छिन्नविशेष्यतानिरूपितप्रकारताया वह्नौ सत्त्वेनाभेदसम्बन्धावच्छिन्नव्यापकनिष्ठप्रकारतानिरूपितवह्निनिष्ठविशेष्यतायां सामानाधिकरण्यान्न वह्निनिष्ठायां मुख्यत्वम्। धूमनिष्ठाया स्वव्यापकनिष्ठाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपिता विशेष्यतातदवच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नसामानाधिकरण्यनिष्ठप्रकारतानिरूपिता विशेष्यता तस्यां प्रकारताया असामानाधिकरण्येन मुख्यत्वमुपपन्नं तद्वतो धूमस्य स्वव्यापकतेति घटकस्वशब्देन बाधोपपद्यते।

वस्तुतस्तु, स्वपदजन्यबोधत्वेन वक्तृतात्पर्यविषयत्वे सति साक्षात्परम्परया वा य: स्वार्थस्य विशेष्य:, यश्च स्वसमभिव्याहृतक्रियाकारकपदार्थस्तदन्यतरनिष्ठपदार्थतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने स्वशब्दस्य शक्तिरित्येव वक्तव्यम्। अमुख्यविशेष्यताश्रये एतादृशतात्पर्यविषयत्वस्य अभावेन न स्वशब्देन तत्र बाधेति।

अत्रैको घटस्तिष्ठति इत्यत्र द्वितीयघटो नास्तीति बुद्ध्यते, एकशब्दस्य एकत्वावच्छिन्नशक्तत्वात् शब्दनिष्ठवृत्तिज्ञानजन्यपदार्थोपस्थिते: कारणत्वेन द्वितीयो घटो नास्तीति बोधकोपस्थितेरभावादिति चेच्छृणु। एकशब्दस्य कैवल्यादिविशिष्टे शक्ति:, कैवल्यञ्च सजातीयद्वितीयरहितत्वम्। तच्च स्वजातीयनिष्ठभेदाप्रतियोगित्वम्। साजात्यञ्च स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टस्वशक्यतावच्छेदकधर्मवत्त्वेन बोध्यम्। तथा च देशान्तरस्थस्वशक्यता-

वच्छेदकवति स्वभेदस्य सत्त्वेऽपि न दोषः। तत्र स्वसमभिव्याहृत-पदार्थसंसर्गित्वाभावात्। स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टे स्वशक्यता-वच्छेदकाभावात् स्वशक्यभेदसत्त्वेऽपि न दोषः। तत्र स्वशक्यतावच्छेदक-धर्मवत्त्वाभावेन स्वजात्याभावात्। अत्रायमेको भुङ्क्ते इत्यादौ एतद्देशाधिकरणकभोजनकर्तृनिष्ठभेदाप्रतियोग्ययमत्र भुङ्क्ते इत्याद्याकारको बोध इत्येष शब्द इति।

अथ मीमांसकास्तु गवादिपदानां जातावेव शक्तिर्लाघवान्न व्यक्तौ व्यक्तेरनङ्गत्वेन शक्तेरानन्त्यापत्त्या गौरवपराहतत्वात्। नापि आकृतौ गवादिपदानां शक्तिरवयवसंयोगविशेषरूपायास्तस्यानन्त्यात् शक्तेरानन्त्यापत्त्या गौरवात्। इति चेच्छृणु अशक्त्या जात्याकृत्योरेकतरविनिर्मोकेनापरभानविरहाद् उभयविशिष्टे गवादिपदस्यैकैव शक्तिः स्वीक्रियते। न च परस्परभानसामग्रीसहकारेणोभय-विशिष्टस्य भानसम्भवेनोभयनिरूपिता नैका शक्तिरिति वाच्यम्। लाघवादुभयनिरूपितैकस्याः शक्तेः स्वीकारात्। न च हर्यादिशब्देषु शक्यविशेषणसिंहत्वविष्णुत्वादिभेदेन शक्तिभेदो दृश्यते। अन्यथा तत्राप्येक-शक्तिस्वीकारेण नानार्थत्वोच्छेदापत्तेरिति वाच्यम्। शक्यविशेषणभेदेऽपि शक्त्यैक्यस्य पुष्पवन्तपदे धेन्वादिपदे च दृष्टत्वात्। अत एव जात्याकृतिव्यक्तयः पदार्थ इति सङ्गच्छते। एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरा-वित्यमरकोषोक्तिपदं शक्तिपरम्। पुष्पवन्तपदं तत्प्रतिपाद्यपरम्। तथा च सूर्यचन्द्रमसावेकशक्त्या पुष्पवन्तप्रतिपाद्यावित्यर्थः सङ्गच्छते।

तत्र शक्तिविशेषणयोश्चन्द्रत्वसूर्यत्वयोर्भेदेऽपि यथाशक्तेरैक्यं तथा प्रकृतेऽपि जात्याकृत्योः शक्यगोव्यक्तिविशेषणयोरखण्डसखण्डयोर्भेदेऽपि शक्तेरैक्यं लाघवान्मन्तव्यम्। एवं धेनुपदे धानकर्मतानिरूपिता गोत्वनिरूपिता चैका शक्तिर्लाघवात् स्वीकार्या। धानकर्मता च दुग्धपानकर्मता दुग्धपानञ्च दुग्धानुयोगिकर्मवादिप्रतियोगिकविभागजनकत्वे सति दुग्धप्रतियोगिकगलाधः-संयोगानुकूलो वत्सादिवृत्तिव्यापारस्तद्रूपम्, तत्कर्मता च तादृशविभाग-प्रतियोगित्वं तदाश्रयतया गवादिकं कर्म। अत एव गां धयति, स्तनं पिबतीत्यादिकः प्रयोगश्च सङ्गच्छते।

ननु धेनुपदस्य धानकर्मताविशिष्टे एव शक्तिरस्तु, न तु गोत्वं शक्तौ विशेषणं गोत्वाधानकर्मत्वोभयविशेषणम्, गोत्वस्य शक्त्युपाधित्वेन शक्तिनियन्त्रकत्वाद्धानकर्मत्वस्य महिष्यादिसाधारणत्वेऽपि न धेनुपदात्तद्बोधः। न

च धेनुपदाद् गोत्वप्रकारकबोधस्यानुभवसिद्धत्वेन धानकर्म महिष्यादिमतिदेशे धेनुर्नास्तीति विशेषदर्शिनां प्रयोगस्य मुख्यतया च धेनुपदजन्यबोधे गोत्वभानमवश्यमङ्गीकरणीयम्। तथा च धानकर्मत्ववद् गोत्वेऽपि शक्तेरावश्यकताऽशक्यस्यापि प्रकारतया शाब्दबोधे भानोपगमे द्रव्यत्वप्रमेयत्वादेरपि प्रकारतया गोपदजन्यशाब्दबोधे भानापत्तिरिति वाच्यम्। शाब्दबोधेऽशक्यस्य प्रकारतया भाने शक्यतावच्छेदकत्वस्य नियामकत्वेन गोत्वस्य शक्यतावच्छेदकत्वेन गोपदजन्यशाब्दबोधे विषयत्वेऽपि द्रव्यत्वप्रमेयत्वादेस्तदनवच्छेदकत्वेन गोपदजन्यशाब्दबोधतदभानोपपत्ते:। न च गोत्वस्य वृषभादिसाधारणस्य धेनुपदशक्यताया अतिप्रसक्ततया शक्यतानवच्छेदकत्वमिति शक्तौ नावच्छेदकत्वसम्भव:। तथा च तत्तत्पदजन्यतत्तद्धर्मप्रकारकशाब्दबोधं प्रति तत्तद्धर्मावच्छिन्नशक्यताकत्वसम्भवेन तत्तद्धर्मावच्छिन्नप्रकारकपदविशेष्यकज्ञानं कारणमिति कार्यकारणभावस्वीकारेऽपि गोपदजन्यबोधे गोत्वस्याशक्यत्वेऽपि शक्यतायामवच्छेदकत्वात्मक-सम्बन्धविशेषोपगमाद् गोत्वस्य भानं न प्रमेयत्वादेर्भानं प्रमेयत्वादेस्तस्य शक्यतानवच्छेदकत्वादिति कथयितुं न शक्यते, धेनुपदशक्यताया अतिप्रसक्तत्वं प्रमेयत्वद्रव्यत्वगोत्वादिसाधारणमिति नियामकाभावेन धेनुपदजन्यशाब्दबोधे गोत्वस्येव प्रमेयत्वादेरपि विनिगमकाभावेन भानापत्तिरिति वाच्यम्।

धानकर्मत्वविशिष्टगोत्वस्य धेनुपदशक्यतावच्छेदकत्वोपगमेन गोत्वस्य धेनुपदजन्यशाब्दबोधे भानापत्ते:, धानकत्वविशिष्टप्रमेयत्वादेर्महिष्यादि-साधारणताया अतिप्रसक्तत्वमिति तत्र प्रकारतया प्रमेयत्वादेर्भानाभावोपपत्तेश्चेति चेच्छृणु। यद्धर्मविशिष्टे शक्तिस्तद्धर्माश्रयस्य यावत: शक्यत्वनियमेन गोत्वस्य शक्यत्वे वृषभादेरपि तथात्वापत्ते:, धानकर्मताविशिष्टाया गो: शक्यत्वे च गोत्वाश्रयगोनिष्ठधानकर्मताव्यक्तीनां विशेषणतया तासाञ्च महिष्यादिव्यावृत्ततया महिष्यादेश्च धेनुपदशक्यत्वापत्तिविरहादिति प्रकारा वदन्ति। तच्चिन्त्यम्। अशक्येन शक्यानुगमे सर्वत्रैवं विशेषणशक्त्युच्छेदप्रसङ्गात्। अतिप्रसक्तेन धानकर्मतात्वेन विशिष्टे धानकर्मताविशेषे धेनुपदशक्तिग्रहोपगमे लाघवाद् गोत्वविशिष्टे गोविशेष एव धेन्वादौ गवि शक्तिर्धानकर्मत्वमेव शक्त्युपाधिरित्येवोचितम्। अननुगतेन ततद्धानकर्मतात्वेन शक्तिग्रहोपगमे चापूर्वव्यक्त्यलाभपारप्रसङ्गेत्यनुपपत्तिरति चिन्तनीया। गोत्वस्येयं गौरित्ययं गौरित्यनुगतप्रतीतिनियामकत्वेन सर्वं गोसाधारणत्वं जातिरूपं गोत्वं न तथा

धानकर्मतात्वं तस्य गोमहिष्यादिव्यक्तिभिन्नाभिन्नवृत्तित्वेनाननुगतत्वमिति विनिगमकस्य सत्त्वात्।

अपूर्वव्यक्त्यलाभप्रसङ्गश्च शाब्दबोधे पूर्वाननुभूतव्यक्त्यविषयकत्वप्रसङ्गेति बोध्यम्। तत्तद्धानकर्मताव्यक्तौ धेनुपदस्य शक्तिस्वीकारे वृद्धव्यवहारेण यद्धानकर्मता व्यक्तौ शक्तिर्गृहीता एकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयतीति तादृशशक्तिग्रहानन्तरं तद्धानकर्मव्यक्तेरेव स्मरणं न तु व्यवहारविषयधान-कर्मताव्यक्तिस्मरणमिति धेनुपदजन्यशाब्दबोधेऽपूर्वधानकर्मताव्यक्तेरभानापत्तिः। मम गोत्वरूपसामान्यलक्षणाया गोत्वेन व्यवहारकाले सकलगोव्यक्तेरुपस्थितौ सर्वासु गोव्यक्तिषु शक्तिग्रहो जायते। सर्वासां गोव्यक्तीनामुपस्थित्या अपूर्वव्यक्तेर्धेनुपदजन्यबोधविषयत्वोपपत्तिरिति। अथ व्यक्तौ आकृतिविशेषे जातौ च गावादिपदानां शक्तिरिति नैयायिकवचनं न युक्तम्। गौरवाद् आनन्त्याद् व्यक्तीनामाकृतीनाञ्च तत्र ग्रहस्याशक्यत्वात्। किन्तु गोत्वादेरनुगतत्वेन तत्रैव लाघवाद् गवादिपदानां शक्तिः, व्यक्तिशक्तिमतेऽपि स्वरूपतस्तस्याग्रहासम्भवेन शक्तिग्रहप्रकारीभूतायां जातौ शक्तेस्तदवच्छेदकताया वाऽवश्यकल्पनीयतया व्यक्त्यादौ शक्तिकल्पनायां गौरवात् प्रयोजनविरहाच्च, न च व्यक्तौ स्वरूपतो भानमिति वाच्यम्।

जात्यखण्डोपाध्यतिरिक्तस्य किञ्चिद्धर्मेण भानस्य सर्वैरङ्गीकृतत्वात्। व्यक्तिशक्तिमते जातेरुपलक्षणत्वं न सम्भवति। तथा सति जातेरविशेषणत्वेन शाब्दबोधे भानानुपपत्तेः। यथा व्यक्तिशक्तिमते जात्यंशे शक्तिस्तदवच्छेदकता वा तद्विषयानवच्छिन्नैव तथैव केवलजातिशक्तिमतेऽपि सा तथैवेति न गोत्वत्वादिप्रवेशाद् गौरवशङ्काऽपि। एतेन गोपदस्य गोत्वे शक्तिरित्यत्र गोत्वत्वेन गोत्वे शक्तिर्वाच्या। गोत्वत्वाच्च गवेतरावृत्तित्वे सति सकलगोसमवेतत्वरूपम्। तच्चाननुगतं व्यक्तेः प्रवेशाद् गौरवाच्च।

अथानुमानादिना गोत्वादौ गोपदशक्तिग्रहोभयवन्निर्धर्मितावच्छेदक-ज्ञानस्यानुमानादिना अजननान्निर्धर्मितावच्छेदकशक्तिज्ञानस्य विपरीतज्ञाना-विरोधिताऽनुपयुक्तत्वाच्चेति गोत्वजातिविशेषणीभूतगोत्वत्वस्य शक्यता-वच्छेदकत्वं दुर्वारमेव। यद्धर्मधर्मितावच्छेदकीकृत्य यदवगाहने सति बाधके तत्र तदवच्छेदकत्वमपीति नियमात्। एवञ्च जातिशक्तिवादिमते गोपदस्य गोत्वे शक्तौ गोत्वत्वस्य गवेतरावृत्तित्वे सति सकलगोसमवेतत्वरूपस्य गुरुशरीरतया व्यक्तिशक्तिवादिमतापेक्षया गौरवम्। व्यक्तिशक्तिवादिनां तु स्वरूपतो गोत्वादिनिष्ठधर्मितावच्छेदकत्वस्यैव निवेशादिति लाघवमिति चेच्छृणु। गोपदं

गोत्वे शक्तमित्याद्याकारिका निरूपितत्वसम्बन्धेन गोत्वप्रकारकशक्ति-प्रकारकपदविशेष्यकशक्तिधी:। तथा च तादृशज्ञानस्यैव शाब्दबोधजनकतया जनकतावच्छेदककोटौ गोत्वस्य स्वरूपतो भानेन गोत्वत्वादे: अप्रवेशाज्जातिशक्तिवादिमते लाघवस्य सत्त्वम्। समवायेनैव जाते: स्वरूपतो न प्रकारतेति नियम: प्रामाणिक:। घटं जानामीत्यादौ प्रकारितासम्बन्धेन स्वरूपतो घटत्वादीनां ज्ञानाद्यंशे प्रकारत्वोपगमात्। अन्यथा स्वरूपतो घटत्वेन घटज्ञानवतो घटत्वत्वविशिष्टघटत्वविशिष्टघटस्य घटमहं जानामीत्यनु-व्यवसायविषयत्वापत्तेरिति चेन्न।

गौर्नष्टा, गौर्जाता, गामानयेत्यादौ समभिव्याहृतपदार्थान्वयस्य जातौ वा धात्वाश्रयत्वरूपपरम्परासम्बन्धेन समभिव्याहृतपदार्थस्याऽन्वयोपगमेऽप्यन्वयिता-वच्छेदकतया गोत्वत्वभानापत्ते:, शक्तौ गोत्वत्वान्तर्भावापत्तेश्च, न हि स्वरूपेण पदार्थस्य पदार्थान्तरान्वयितया भानं कैश्चित् स्वीक्रियते। एवञ्च नाशोत्पत्त्यानयनानां गोत्वेऽसम्भवेन स्वाश्रयत्वसम्बन्धेन गव्यन्वय: स्वीकार्य इत्यन्वयितावच्छेदकत्वेन गोत्वत्वस्य गवेतरावृत्तित्वविशिष्टसकलगोसम-वेतत्वरूपस्य गुरुभूतस्योपस्थितिरावश्यकी। स्वीकुरु वा प्रकारतया स्वरूपेणोपस्थितजातेर्भानं विशेष्यतया जातेर्भानं तु न सम्भवत्येव, निर्धर्मितावच्छेदकस्य शाब्दबोधस्य प्रवृत्त्यनुपयोगितास्वरूपेण जातेर्भानस्वीकारासम्भवात्। एवञ्च जातिमात्रवाचकत्वेनाभ्युपगतपदस्यापि व्यक्तिबोधजनकतायामविवादाद् व्यक्तिशक्तिर्ध्रुवेति। शक्तिभ्रमाजन्यलक्षणा-ग्रहाजन्यतद्बोधजनकताया एव तच्छक्तिलाघवत्वादन्यथा जातावपि शक्त्यसिद्धिप्रसङ्गात्। प्रकृते गौर्नष्टा, गौर्गता, गामानयेत्यादौ ध्वंसप्रतियोगिनी गौ:, उत्पत्तिमती गौ:, गोकर्मकानयनानुकूलकृतिमान् देवदत्त इति गोविषयं विनाऽनुपपन्नो बोधो गोनिरूपितशक्तिं गोपदे साधयति। गोत्वजातेर्नित्यत्वेन तस्मिन् गोत्वे ध्वंसप्रतियोगिन उत्पत्ते:, आनयनकर्मत्वस्य चान्वयासम्भवात्। नित्यत्वे सत्यनेकसमवेतत्वं जातित्वमिति जातिलक्षणलक्ष्यभूतगोत्वे तेषां ध्वंसप्रतियोगित्वादीनां बाधितत्वात्।

व्यक्तिशक्तिपदे मन्यमान: श्रीशङ्कुक: पदे व्यक्तिवाचकत्वं न मन्यते, व्यक्तौ कुब्जाशक्तिं स्वीकरोति। तथा हि पदे व्यक्तिनिरूपितशक्तावस्माकं न वैमत्यम्। अपि तु व्यक्तिशक्तिज्ञानत्वेन हेतुतायामेव। अत एव व्यत्यंशो कुब्जाशक्तिरिति गीयते। कुब्जाशक्ति: वाच्यत्वव्यवहाराजनिका शक्तिर्बोध्या। अत एव व्यक्तेर्न वाच्यता न हि शक्तिधीविषयतामात्रेण वाच्यता भवति।

घटशब्दादाकाशस्य बोधवारणाय तद्विषयकशाब्दबोधं प्रतिपदे तन्निरूपितवृत्तिरावश्यकीति पदे सम्बन्धनिरूपिता शक्तिरावश्यकी तथा चान्वयस्य शक्तिविषयत्वेन तद्वाचकत्वं पदे स्यात्। किन्तु यद्विषयकत्वेन शक्तिज्ञानस्य तद्विषयकशाब्दबोधजनकत्वं तत्त्वमेव वाच्यताव्यवहारनियामकम्। अन्वयांशे कुब्जशक्तिसत्त्वेऽपि यथा तद्विषयकत्वं शक्तिज्ञानजनकतायां नानवच्छेदकं तथा व्यक्त्यंशो कुब्जशक्तिसत्त्वेऽपि तद्विषयकत्वस्य शक्तिज्ञानजनकतानवच्छेदकत्वान्न व्यक्तौ वाच्यत्वव्यवहारः। इति तन्न युक्तम्। घटत्वं शक्तिसम्बन्धेन घटपदविशिष्टमिति ज्ञानीयपदनिष्ठप्रकारतानिरूपित-विशेष्यताया घटत्वनिष्ठाया धर्मितया सावच्छिन्नत्वेन तदवच्छेदकघटत्वस्य गुरुधर्मस्य प्रवेशेन गौरवात्।

अत्र भट्टाः, पदान्न व्यक्तेः स्मरणम्, न वाऽनुभवः। किन्तु व्यक्तिं विना जातिर्न वर्तत इति जात्या व्यक्तिधीर्भवति। व्यक्तेराक्षेपिका जातिरेव। आक्षेपश्चानुमानमर्थापत्तिर्वेति। तथा चाक्षिप्तैव व्यक्तिः शाब्दबोधे भासत न तत्र शक्तिः। तन्न युक्तम्। गवादिपदात् स्वरूपतो गोत्वादिज्ञानेऽपि व्यक्तिव्याप्यतावच्छेदकप्रकारेण गोत्वादिग्रहासम्भवेन ततो गोत्वाद् व्यक्त्याक्षेपासम्भवादिति।

अथ समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवदिति वैयाकरणाः। अयमभिप्रायः। राजपुरुष इत्यत्र राजपदे राजत्वावच्छिन्ननिरूपिता। एवं पुरुषपदे पुरुषत्वावच्छिन्ननिरूपिता च शक्तिर्न स्वीकार्या। किन्तु राजसम्बन्धि-पुरुषनिरूपिता। एवं पुरुषपदे पुरुषत्वावच्छिन्ननिरूपिता च शक्तिर्न स्वीकार्या। किन्तु राजसम्बन्धिपुरुषनिरूपिता शक्तिः राजपुरुषेत्यत्र स्वीकार्या। ननु राजपुरुषेत्यत्र राजपदार्थेन सह पुरुषपदार्थस्य भेदसम्बन्धेन न साक्षादन्वयो सम्भवति। राजपुरुषेत्यादौ स्वत्वसम्बन्धेन किं वा स्वामित्वसम्बन्धेन साक्षाद्राजपदार्थस्य पुरुषपदार्थेऽन्वयदर्शनेन भेदान्वयबोधश्च प्रातिपदिकार्थ-धात्वर्थयोः प्रत्ययार्थेन क्वचिन्निपातार्थे च सममेव जायते, न त्वन्येनेति व्युत्पत्तिस्वीकारात्।

एवञ्च निपातातिरिक्तनामार्थयोर्भेदेनान्वयबोधस्याव्युत्पन्नत्वेन राजपदे राजसम्बन्धिनि लक्षणा ततश्चाभेदसम्बन्धेन तस्य पुरुषेऽन्वयः, राजसम्बन्धभिन्नः पुरुष इति सम्भवे राजपुरुषेत्यत्र विशिष्टशक्त्यन्तरं न कल्पनीयं गौरवात्। न च राजपुरुषेत्यत्र लुप्तङस्विभक्तेः स्मरणं कल्पनीयम्। तस्यार्थे स्वत्वे निरूपितत्वसम्बन्धेन राजपदार्थस्यान्वयः, विभक्त्यर्थस्वत्वस्य स्वरूपसम्बन्धेन

पुरुषेऽन्वयस्तथा च राजनिरूपितस्वत्ववान् पुरुष इति बोध उपपद्यते। राजपदे लक्षणा न कार्या। लक्षणा च तात्पर्यानुपपत्त्या मुख्यार्थबाधेन, रूढिप्रयोजनान्यतरेण भवतीति वाच्यम्। अस्मृतविभक्तेरपि ततो बोधोदयेन तथा कथयितुमशक्यत्वात्। तस्माल्लक्ष्याऽत्र साध्वीति ज्ञेयत्वादिति चेन्नाचित्रगुरित्यत्र चित्राभिन्नगोस्वामीति बोधानुपपत्तेः। तथा हि गोपदस्य गोस्वामिलक्षकत्वे गोः पदार्थैकदेशत्वेन तत्र चित्रपदार्थस्यान्वयासम्भवः। पदार्थः पदार्थेनान्वेति न पदार्थैकदेशेनेति व्युत्पत्तिविरोधात्। पदार्थश्चात्रोपस्थितीय-मुख्यविशेष्यः। न च गोपदमेव चित्राभिन्नगोस्वामिलक्षकं चित्रपदं तात्पर्यग्राहकमिति वाच्यम्। एकार्थीभावरूपसामर्थ्याभ्युपगमे व्यपेक्षारूप-सामर्थ्यस्यैव समासप्रयोजकत्वेन चित्रापदप्रयोज्यविषयत्वस्य तत्राभावे व्यपेक्षाया अप्यभावात् समासानुपपत्तेः। समर्थः पदविधिरित्यत्र सामर्थ्यं निरूप्यनिरूपक-भावापन्नविषयताकं शाब्दबोधप्रयोजकाकाङ्क्षाशालित्वरूपं व्यपेक्षात्मकमेव, न तु एकधर्मावच्छिन्नशक्तिमत्त्वरूपैकार्थीभावात्मकमिति ज्ञेयम्।

न च लाघवात् समासे एकार्थीभावरूपविशिष्टशक्तिरस्त्येवेति वाच्यम्। समासावयवप्रत्येकपदात् क्लृप्तशक्तिकाच्छक्त्या लक्षणया वा बुभुक्षितार्थ-बोधसम्भवेऽतिरिक्तविशिष्टशक्तिकल्पनाया अन्याय्यत्वात्। अनन्यलभ्यो हि शब्दार्थ इति सिद्धान्तात्। न च गोपदस्य शक्त्या गौरर्थः, लक्षणया च स्वामी। तत्र स्वामिविशेषणतापन्नगवि अभेदेन चित्रापदार्थस्यान्वयेति वाच्यम्। युगपदवृत्तिद्वयानङ्गीकारात्। प्रातिपदिकार्थयोर्गोस्वामिनोर्भेदसम्बन्धेनान्वयस्या-व्युत्पन्नत्वाच्च। न च चित्रपदगोपदयोः लक्षणया चित्राभिन्नगोस्वाम्यर्थः। तयोः पदार्थयोश्च तादात्म्येनान्वय इति वाच्यम्। तादात्म्येनान्वयप्रयोजक-विरोधस्थितेरभावात्। अभेदान्वयबोधश्च विरोधोपस्थितयोरेवेति व्युत्पत्तिः। अन्यथा घटो घटेत्यत्राभेदान्वयापत्तेः। तद्धर्मावच्छिन्नाभेदसम्बन्धावच्छिन्न-प्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मभेदः कारणमिति कारणभावात्। एवञ्च विशेष्यतावच्छेदके प्रकारतावच्छेदकभेदस्याभेदान्वयबोधे कारणत्वेन चित्रगुरित्यत्र तदभावेन चित्राभिन्नगोस्वामिनोः चित्रापदार्थगोपदार्थयोरभेदान्वयबोधासम्भवेति चेन्न। समासघटकप्रत्येकपदशक्त्योपस्थितार्थयोरन्वयवादिमते समासे विशिष्टाशक्त्य-स्वीकारे राज्ञः पुरुषेत्यत्रैव राजपुरुषेत्यत्रापि ऋद्धस्येत्यादिविशेषणस्यान्वया-पत्तिवारणाय सविशेषणानां वृत्तिर्न, वृत्तस्य विशेषणयोगो नेति वक्तव्यं भवति। लक्षणावादिमते जघन्यवृत्तिकल्पनञ्च भवति। धवखदिरौ, निष्कौशाम्बिः, गोरथः,

घृतघट:, गुडधाना:, केशचूड:, सुवर्णालङ्कारो द्विदशा: सप्तवर्ण इत्यादावितरेतरयोगातिक्रान्तयुक्तपूर्णामिश्रसङ्घातविकारसुप्रत्यय-लोपवीप्साद्यर्थस्य वाचनिकस्य वाच्यत्वात्।

एवञ्च समासे विशिष्टशक्त्यस्वीकर्तृमते तस्य वाचनिकत्वेन महद्‌गौरवम्। समासे विशिष्टशक्तिवादिमतेन वाचनिकं तेषामर्थानां विशिष्टशक्त्यैव बोधादिति लाघवस्य सत्त्वात्। धवश्च खदिरश्चेति धवखदिरौ, इत्यत्र चकारस्य कौशम्ब्या अतिक्रान्त:, निष्कौशाम्बिरित्यत्राऽतिक्रान्तस्य गवा युक्तो रथेत्यत्र युक्तस्य घृतेन पूर्णो घटेत्यत्र पूर्णस्य गुडेन मिश्राधाना: गुडधाना इत्यत्रामिश्रस्य केशानां सङ्घात: चूड इत्यत्र सङ्घातस्य सुवर्णस्य विकारोऽलङ्कारेति सुवर्णालङ्कारेत्यत्र विकारस्य द्वौ च दश चेति द्वि इत्यत्र शुभ: वाचनिको लोपो वक्तव्य:। समासे विशिष्टशक्त्याश्रयकर्तृणाम्भवति, समासे विशिष्टवादिनां तु विशिष्टशक्त्यैव तत्तदर्थानां बोध इति लाघवम्।

'प्रसिद्धमपि शब्दार्थमविज्ञातमबुद्धिभि:।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमा:॥'

इत्यादिशिक्षोक्तवचनं निन्दयति शब्दार्थानभिज्ञान् जनान्। निन्दितात्मानं रक्षितुं शब्दार्थज्ञानमावश्यकं भवति विवेकिनाम्। किञ्च 'एक: शब्द: सम्यग्ज्ञात: सुप्रयुक्तस्स्वर्गे लोके च कामधुग्भवति' इत्यनेकेषु सच्छास्त्रेषु दृश्यमानवचनं प्रेरयति विवेकिनो जनान् शब्दार्थज्ञानाय।

न चेदं वाक्यमर्थज्ञानाय लोकान् प्रेरयतीति वक्तुं न शक्यते, तत्रार्थस्यानुपादानादिति वाच्यम्। रामेति द्व्यक्षरं नाम मानभङ्ग: पिनाकिन इत्योमित्येकाक्षरं ब्रह्मेति वृद्धिरादैजिति दर्शनेन शब्दार्थयो: तादात्म्यात्। न च शब्दार्थयोस्तादात्म्ये मधुशब्दोच्चारणं मुखे मधुत्वापत्तिरिति वाच्यम्। बुद्धिपरिकल्पितयो: शब्दार्थयोरेव तादात्म्याङ्गीकारेणादोषात्।

न च शब्दार्थयो: बौद्धार्थत्वे किं प्रमाणमिति वाच्यम्, शब्दज्ञानानुपाती वस्तुशून्यो विकल्पेति सूत्रस्य शशशृङ्गं नास्तीत्यादिप्रयोगदर्शनस्य च तत्र प्रमाणत्वात्। अन्यार्थवत्त्वाभावेन प्रातिपदिकत्वानुपपत्त्या तत्र विभक्तेरनुत्पत्तौ तादृशप्रयोगानुपपत्ते:। शब्दादर्थज्ञानञ्च न शब्दार्थयो: विशेषसम्बन्धज्ञानं विना सम्भवति, अन्यथा नियामकाभावेन सर्वेभ्य: शब्देभ्य: सर्वार्थबोधापत्ते:। नियते च शब्दार्थविशेषसम्बन्धे, यस्मिन् शब्दे यस्यार्थस्य विशेषसम्बन्ध:, स शब्दस्तदर्थमेव बोधयति न त्वन्यान् अर्थानिति नियमेन तं दोषं निवारयति।

दृश्यते च एकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयतीति। यथा हस्तिज्ञानं हस्तिपदं स्मारयति। शक्ति-लक्षणा-व्यञ्जना-तात्पर्याख्येति भेदात् स च शब्दार्थसम्बन्धो नानाविधो भवति, विवदन्ते च तत्र शास्त्रकारा इति दर्शयिष्यामि तस्य स्वरूपविचारे। स च सम्बन्धः बोधकतारूपेति कौण्डभट्टाः भूषणकाराः नागेशाश्च वाच्यवाचकभावरूपेति वदन्ति। अस्माच्छब्दादयमर्थो बोद्धव्य इति। इदं पदमिममर्थं बोधयत्विति वा विनिगमनाविरहाद् भगवत्सङ्केतरूपेच्छेति नैयायिका वदन्ति। मीमांसकाः पदार्थान्तररूपा शक्तिरिति वदन्ति, तत्र कार्यान्वितस्वार्थे पदानां शक्तिरित्यन्वितार्थे पदानां शक्तिरिति प्राभाकराः। तात्पर्याख्यवृत्तिर्वाक्ये इति भट्टानुयायिनः। केचिन्मीमांसका ज्ञाने पदानां शक्तिरिति वदन्ति। तत्र मीमांसकमतमवलम्ब्य विचारः प्रस्तूयते।

ननु अपभ्रंशादपि शक्तिभ्रमेणार्थप्रत्यासन्नमात्रविषयके भगवत्सङ्केते इच्छारूपे तस्यापि बोधकत्वेन विषयत्वमिति नैयायिकैरभ्युपगमादपभ्रंशस्यापि वाचकत्वं साधुत्वञ्च स्यात्। साधुत्वञ्च शक्तिप्रमाणाधीनशाब्दबोधजनकत्वं किं वा शक्तिः भ्रमाधीनशाब्दबोधजनकत्वं तच्च नापभ्रंशशब्दे विद्यते। अतस्तस्य साधुत्वापत्तिदोषो भवति नैयायिकानाम्। न चेदं पदमिममर्थं बोधयत्वितीच्छया भगवदुच्चरितत्वं वाचकत्वमिति नापभ्रंशादयस्तदर्थबोधनेच्छया भगवदुच्चरिता इति नोक्तदोष इति वाच्यम्। अस्मदाद्युच्चरितपदेष्वव्याप्तेः।

न च तादृशेच्छया भगवदुच्चरितसजातीयत्वं वाचकत्वमिति वाच्यम्, वेदस्थलाक्षणिकेषु शब्देष्वतिव्याप्तेः, तेषामपि तत्सजातीयत्वात्। न च स्वजन्यज्ञानविषयत्वप्रकारकेच्छाविशेष्यत्वमर्थे पदसम्बन्धः, स्वविषयक-बोधजनकत्वप्रकारकेच्छाविशेष्यत्वं पदेऽर्थस्य सम्बन्धः शाब्दबोधान्यथानुपपत्त्या आकल्प्यते। एतादृशपरम्पराया अपभ्रंशादिस्थले, सम्बन्धत्वं न स्वीक्रियते, अपभ्रंशे च तत्सम्बन्धावगाहिज्ञानं भ्रम एवेति। तन्न युक्तम्। स्वजन्यविषयत्वप्रकारकेच्छाविशेष्यत्वस्य, किं वा स्वविषयकबोधजनकत्व-प्रकारकेच्छाविशेष्यत्वस्य अक्लृप्तस्य सम्बन्धतोपगमे स्वजन्यज्ञानविषयत्व-स्वसमानकालीनविषयत्वादिपरम्परया अपि विनिगमनाविरहेण सम्बन्धताप्रसङ्गात्। तथा च घटशब्दस्यापि पदवाचकत्वापत्तिः, घटपदादपि पटविषयकबोधापत्तिश्च तस्मात् पदपदार्थयोर्वाच्यवाचकभावसम्बन्ध इति मीमांसकानुयायिनो वदन्ति।

किञ्च, अस्माच्छब्दादयमर्थो बोद्धव्यः, इत्याकारकसङ्केतस्य न सम्बन्धत्वं भवितुमर्हति, इच्छायाः सङ्केतस्यास्याः सम्बन्धिराश्रयतानियामकत्वाभावेन सम्बन्धत्वासम्भवात्, न पदात् तदर्थस्य स्मरणं भविष्यति। यथा हस्तिपदज्ञानेन

हस्तिस्मरणं भवति, तथा पदज्ञानान्न तदर्थस्य स्मरणं भविष्यति। सङ्केतरूपशक्तेरुभयनिष्ठत्वाभावात्। सम्बन्धो हि सम्बन्धिसम्बन्धद्वयभिन्नत्वे सति द्विष्ठत्वे च सति आश्रयतया विशिष्टबुद्धिनियामक इत्यभियुक्तव्यवहारात्। यथा घटवद् भूतलमित्यादौ संयोगरूपसम्बन्धः सम्बन्धिभ्यां घटभूतलाभ्यां भिन्नो द्विष्ठो घटभूतलनिष्ठो घटप्रतियोगिकसंयोगाश्रयो भूतलमिति विशिष्टबुद्धिनियामकस्तथा नात्र घटशब्द इच्छावान् तदर्थो वा इच्छावान् इति व्यवहारो दृश्यते। तस्मात् सम्बन्धान्तरमेव शक्तिः, वाच्यवाचकभावापरपर्याया इति वैयाकरणा मीमांसकमतमुपोद्बलयन्ति। एवमिदं पदमिममर्थं बोधयत्विति इच्छाया अपि सम्बन्धत्वं निरस्तमिति।



# तन्त्रशास्त्रस्य पुरुषार्थानुबन्धित्वम्

**डॉ. परमात्मादुबे**
उपाचार्यः
सांख्ययोगतन्त्रागमविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणस्याम्



तन्त्रशास्त्रमिदं विततं वर्तते। रहस्यपूर्णमिदं दर्शनम्। रहस्यनाम् एकत्रानुद्घाटनाद् दर्शनस्य तन्त्रस्य शास्त्राणि विततानि सन्ति। तत्र-तत्र च पदार्थानां क्वचित् सूत्ररूपेण क्वचित् सङ्केतेन क्वचिच्च विस्तरेणोल्लेखो वर्तते। अनधिकारिपुरुषाणां पार्श्वे दूरं दिव्यं ज्ञानम्, एतदर्थमेव एवं रूपेण आचार्यै-र्व्यवस्थापितम्। अत एवोक्तं महामाहेश्वरेण अभिनवगुप्ताचार्येण तन्त्रसारम्—

विततस्तन्त्रालोको विगाहितुं नैव शक्यते सर्वैः।
ऋजुवचनविरचितमिदं तु तन्त्रसारं ततः श्रृणुत[१]।।

तन्त्रदर्शनमिदं त्रिकदर्शनशब्देन प्रत्यभिज्ञादर्शनशब्देन चाभिधीयते। तन्त्रशब्दस्य सन्ति अनेका व्युत्पत्तयः। तत्र 'तन्यते विस्तार्यते येन तत् तन्त्रम्' इति व्युत्पत्त्या येन प्रपञ्चस्य जगतो वा विस्तारो जायते तत् तन्त्रमिति ज्ञायते। तेनैव विस्तारः कर्तुं शक्यते यस्य पार्श्वे एतत्कर्म कर्तुं निरपेक्षं सामर्थ्यं स्यात्। अनेकभवनमेकस्य विस्तारः। अन्यानपेक्षत्वे सति यद् विस्तारदं तत्त्वं तत् तन्त्रम्। एवंरूपेण तन्त्रशब्देन शिवस्य ग्रहणं भवति। अस्य मूलतत्त्वस्य शिवस्य प्रतिपत्तिः शास्तिः प्रतिपादनं निरूपणं येन शब्दराशिना भवति तत् तन्त्रशास्त्रशब्देन व्यपदिश्यते। सम्पूर्णस्य प्रापञ्चिकविस्तारस्य परानपेक्ष-निर्वर्तकत्वेन प्रकाशविमर्शात्मकपरमशिव एव तन्त्रम्, तन्निरूपणार्थं प्रवृत्तः समग्रशब्दराशिस्तन्त्रशास्त्रं शिवशास्त्रं वाऽस्ति।

अस्य तन्त्रशास्त्रस्य वादः शिवाद्वैतवादः। अत एव श्रीतन्त्रालोकस्य व्याख्यायां श्रीजयरथेन व्यवस्थापितं यत्—'इहाद्वयनये हि भगवानेव स्वस्वातन्त्र्यमाहात्म्याद् आभासमात्रसारतया स्वाव्यतिरिक्तमपि व्यतिरिक्तत्वेनैव जगदाभासयति' इत्यनन्यापेक्षिणः स्वातन्त्र्यस्यैव जगद्वैचित्र्यनिमित्तत्वमुक्तम्, अविद्यावासनादीनां भेदाभेदविकल्पोपहतत्वात् जगद्वैचित्र्यनिमित्तत्वाभि-

---

१. तन्त्रसारे-१.१२।

धानानुपपत्तेः। अत एव भगवतश्चिदाद्यनन्तशक्तिसम्भवेऽपि तत्स्फुरणमात्रत्वात् तस्या एव प्राधान्यादिति। शिवः चिदानन्देच्छाज्ञानक्रियात्मभिः पञ्चभिः शक्तिभिः परिपूरितः सदैव पञ्चविधकृत्यकारी भवति। पञ्चविधकृत्यविषय उक्तम्—

सृष्टिसंहारकर्त्तारं विलयस्थितिकारकम्।
अनुग्रहकरं देवं प्रणतार्तिविनाशनम्।।

तदेवमत्र तन्त्रनये विसर्गप्रसरस्वभावत्वेन जगद्वैचित्र्यबीजभूतं शिवशक्तिसङ्घट्टात्मकपरत्रिकशब्दवाच्यमनाख्यात्मकं तत्त्वम्।

अनाख्यं पदं कुलशब्देनाभिधीयते। अत एव जयरथेनोक्तम्—

'कुलं पदमनाख्यम्' इति।

भेद-भेदाभेदाभेदप्रतिपादकं शिवरुद्रभैरवाख्यं त्रिधैवेदं शास्त्रमुद्भूतमिति सिद्धान्तः। तदुक्तम्—

तन्त्रं जज्ञे रुद्रशिवभैरवाख्यमिदं त्रिधा।
वस्तुतो हि त्रिधैवेयं ज्ञानसत्ता विजृम्भते।।
भेदेन भेदाभेदेन तथैवाभेदभागिना। इति।

एवञ्च भेदाद्यात्मकमपीदं शास्त्रं परमेश्वरेशवामाघोरात्मकं त्रिकं परादिदेवीत्रयविप्राप्तिधामतया क्रोडीकृत्य परमाद्वयामृतपरिप्लावितं विदध्यात्।

पुष्पे गन्धस्तिले तैलं देहे जीवो जले रसः।
यथा तथैव शास्त्राणां कुलमन्तःप्रतिष्ठितम्।।

अन्यथा ह्यस्य परपदप्राप्तिनिमित्तत्वं न स्यात्। ननु शास्त्राणाम्—

'यतः शिवोद्भवाः सर्वे शिवधामफलप्रदाः'।

इत्याद्युक्तेरेकत्वनियामककारणफलयोरैक्यमस्ति, इह किं निबन्धनमेषामेवं नानात्वमुक्तम्? एवं प्राप्ते सत्यमुच्यते—अनुग्राह्याशयभेदादेषां नानात्वं कल्पितम्। यदुक्तम्—

सर्वमेतत्प्रवृत्त्यर्थं श्रोतृणां तु विभेदतः।
अर्थभेदात्तु भेदोऽयमुपचारात्प्रकल्प्यते।।
फलभेदो न कल्प्योऽत्र कल्प्यश्चेदयथायथम्।। इति।

ननु यद्येवं तत्—

वेदादिभ्यः परं शैवं शैवाद्वामं च दक्षिणम्।
दक्षिणाच्च परं कौलं कौलात्परतरं नहि॥

इत्यादिना उक्तमेषां यथायथमुत्कृष्टत्वं युक्तं न स्यात्? नेदं समीचीनं द्वारद्वारिभावेन एषामुपायोपेयभावस्य उक्तत्वात्, तेन परमाद्वयोपदेश-प्रतिपादकमेव शास्त्रं शिवसद्भावलाभैकफलम्—इत्यवसेयम्। तदेव परमपदप्राप्तौ साक्षादुपायभूतत्वादुत्कृष्टम्। तच्च सिद्धानामकमालिन्याख्यखण्ड-त्रयात्मकत्वात्त्रिविधम्—

(१) तत्र क्रियाप्रधानं सिद्धातन्त्रम्।

(२) ज्ञानप्रधाननामकं तन्त्रम्।

(३) क्रियाज्ञानोभयमयं (तदुभयमयं) मालिनीतन्त्रम्।

उभयविधधर्मयुक्तत्वान्मालिनीतन्त्रमेव मुख्यम्। अत एवोक्तम्—

'तत्सारं मालिनीमतम्' इति।
वेदाच्छैवं ततो वामं ततो दक्षं ततः कुलम्।
ततो मतं ततश्चापि त्रिकं सर्वोत्तमं परम्॥ इति च।

अनेनैवाशयेन च—

वाममार्गाभिषिक्तोऽपि देशिकः परतत्त्ववित्।
संस्कार्यो भैरवे सोऽपि कुले कौले त्रिकोऽपि सः॥

इत्यादिना श्रीनिशाचरादौ व्यवस्थापितम्।

यद्यपि सर्ववादिनां मोक्ष एव उपादेयः, तत्प्रतिपक्षभूतः संसारश्च हेयः, संसारस्य च मिथ्याज्ञानं निमित्तं, मिथ्याज्ञानप्रतिकूलं च तत्त्वज्ञानमिति तत्त्वसाक्षात्कारेणैवाज्ञानापगमान्मोक्षावाप्तिरित्यत्राविवादः, तथापि तैस्तदेव नियतं ज्ञानाज्ञानयोः स्वरूपं न ज्ञातमिति।

'भ्रमयत्येव तान्माया ह्यमोक्षे मोक्षलिप्सया' इत्याद्युक्त्या तदभ्युपगतो मोक्षो मोक्ष एव न भवति इति दर्शयितुं शास्त्रान्तरवैलक्षण्येन तत्परीक्षणस्य वक्ष्यमाणत्वात्प्राधान्यमपि कटाक्षयितुमुपक्रम एव बन्धमोक्षपरीक्षामुट्टङ्कयति ग्रन्थकारः श्रीतन्त्रालोके महामाहेश्वरः श्रीअभिनवगुप्ताचार्यः—

इह तावत्समस्तेषु शास्त्रेषु परिगीयते।
अज्ञानं संसृतेर्हेतुर्ज्ञानं मोक्षैककारणम्॥ इति[1]।

---

१. श्रीत. १/२२।

तथा च—

मलमज्ञानमिच्छन्ति संसाराङ्कुरकारणम्।
इति प्रोक्तं तथा च श्रीमालिनीविजयोत्तरे।। इति[1]।

अज्ञानं तिमिरं पारमेश्वरस्वातन्त्र्यमात्रसमुल्लासितस्वरूपगोपनासतत्त्वमात्मानात्मनोरन्यथाभिमानस्वभावमपूर्णं ज्ञानम्, तदेव चाणवं 'मलम्'।

उक्तञ्च—

स्वातन्त्र्यहानिर्बोधस्य स्वातन्त्र्यस्याप्यबोधता।
द्विधाणवं मलमिदं स्वस्वरूपापहानितः।। इति।

तच्च ज्ञानमात्रस्वभावम्, अख्यात्यभाव एव हि पूर्णा ख्यातिः, सैव च प्रकाशानन्दघनस्य आत्मनस्तात्त्विकं स्वरूपं, तत्प्रथनमेव मोक्षः। तत्त्वज्ञानाभावे च बन्धः। बन्धश्च संसरणं जननमरणस्वभावं सकलानार्थस्वरूपम्। अज्ञानं न ज्ञानभावरूपमपि तु अपूर्णं ज्ञानमिति विशेषः। उक्तं चापि—

'चैतन्यमिति भावान्तः शब्दः स्वातन्त्र्यमात्रकम्।'
द्वैतप्रथा तदज्ञानं तुच्छत्वाद् बन्ध उच्यते।
तत एव समुच्छेद्यमित्यावृत्त्या निरूपितम्[2]।।

इह न किञ्चिदप्यचेतितं भवति। चेतयति इति चेतनः पूर्णज्ञानक्रियावान्, तस्य भावः 'चैतन्यं' पूर्णज्ञानक्रियावत्त्वं, तदेव च परमैश्वर्यस्वभावं स्वातन्त्र्यमुच्यते। ज्ञप्तिः ज्ञानं, ज्ञायते येन इति ज्ञानं चेति व्युत्पत्त्या। 'क्रियां, करणं' च प्राधान्येनाभिदधच्चैतन्यमात्मा। अत एव चेतयते इति 'चित्' चितिक्रियायां कर्त्ता, तन्मात्रमेव केवलं रूपं यस्य तस्य 'द्वैतमुच्यते' कर्तृकर्मणोः कर्तृकर्मक्रियाणां च भिन्नानामवच्छेदकानामागूरणाद् द्वैतप्रथासूत्रणं क्रियते, पूर्णमस्य रूपं नाख्यातिः। तस्मात् संविदद्वैतात्मनः पूर्णस्य रूपस्याख्यानात् 'द्वैतप्रथा' एव 'अज्ञानम्' अपूर्णज्ञानमपूर्णत्वाच्च तदेव अपूर्णं शुभाशुभवासनाशरीरभुवनाकारस्वभावविविधसङ्कुचितज्ञानरूपतया मलत्रय-कर्ममायीयाणवरूपमलत्रयात्मा 'बन्धः' इति उच्यते, बन्धरूपत्वादेव च तदज्ञानं समुच्छेद्यम्।

नन्वेवं मोक्षस्य लक्षणमभिधीयतामित्याशङ्क्याह—

स्वतन्त्रात्मातिरिक्तस्तु तुच्छोऽतुच्छोऽपि कश्चन।
न मोक्षो नाम तन्नास्य पृथङ्नामापि गृह्यते[3]।।

---

१. श्रीत. १/२३; २. श्रीत. १/३०।
२. श्रीत. १/३१।

स्वतन्त्रात्मातिरिक्तस्तु न कश्चिदन्यो मोक्षोऽस्तीत्यस्य मन्त्रस्य हृदयम्। अत एवोक्तम्—

मोक्षो हि नाम नैवान्यः स्वरूपप्रथनं हि सः।
स्वरूपं चात्मनः संवित्.........।। इत्यादि।

एवंरूपेणात्मज्ञानं मोक्ष इत्यविवादः, अतो यदेवात्मनो लक्षणं तदेव मोक्षस्य इति तन्त्रान्तरीयकत्वादेवास्य लक्षणसिद्धेः पृथक्लक्षणं न कृतम्, एवमप्यस्य तद्वैलक्षण्यं कटाक्षीकर्त्तुं दर्शनान्तरोक्तस्य मोक्षस्य स्वरूपमभिधातुमुपक्रमते—

यत्तु ज्ञेयसतत्त्वस्य पूर्णापूर्णप्रथात्मकम्।
तदुत्तरोत्तरं ज्ञानं तत्तत्संसारशान्तिदम्।। इति।

अस्यायमर्थः—'यत्' पुनः 'ज्ञेयस्य' कलातत्त्वभुवनाद्यात्मनोऽध्वनो यत् 'सतत्त्वम्' ऊर्ध्वोर्ध्वमन्योन्यं च भेदेनावस्थानं, तस्य 'उत्तरोत्तरम्' उपर्युपरिभावेन तत्तद्भुवनाद्युल्लङ्घनक्रमेण तत्तदवच्छेदापगमाद् यथायथमतिशयाद् द्वैतप्रथात्मकत्वात् सङ्कुचितत्वेऽपि उदेति तदधरीकृततत्त्वजालोल्लङ्घनात्—

'चतुर्दशविधं यच्च प्रोक्तं संसारमण्डलम्'।

इत्याद्युक्तेः। 'तस्य तस्य' चतुर्दशविधयाऽन्यात्मनः 'संसारस्य' 'शान्तिदं' तत उन्मोचकमित्यर्थः। चतुर्दशविधत्वं संसारस्योक्तं यथा—

अष्टविकल्पो दैवस्तैर्यग्योनयश्च पञ्चधा भवति।
मानुष्यश्चैकविधः समासतो भौतिकः सर्गः।। इति।
ज्ञानस्य हि मोचनमेव धर्मः।

अपि च—

लौकिकानां पुनः सृष्टिः पुनः संहार एव च।
संसारचक्रमारूढा भवन्ति घटयन्त्रवत्।।

इत्यादिसामान्येनाभिधाय—

मुक्तं च प्रतिबन्धात्तं पुनर्बध्नाति चेश्वरः।
बन्धः संसारतो भूयो यावद्देवं न विन्दति।।

इति बौद्धाद्यवान्तरदर्शनमुक्तोपलक्षणपरतया विशेषेणोक्तम्। यः पुनर्निःशेषप्रक्षीणसर्वाध्वबन्धः स एव साक्षान्मुक्तः। स एव च सर्वावच्छेदवर्जितः। यदुक्तम्—

'सर्वाध्वनो विनिष्क्रान्तं शैवानां तु परं पदम्'।

तथा च—

शैवः सिद्धो भाति मूर्ध्नीतरेषां मुक्तः सृष्टौ पुनरभ्येति नाधः।। इति।

परमेश्वर एव हि स्वस्वातन्त्र्यात् पूर्णज्ञत्वकर्तृत्वाद्यपहस्तनेनाख्यात्यात्मकाणवमलाविर्भावेन स्वात्मानमावृणुयात्। तदेव पशोराणवादिमलत्रययोगिनोऽपि तस्य मातुर्देशकालाद्यवच्छिन्नत्वान्नियतदृक्क्रियस्वाभासालोचनात्मकं ज्ञानम्। परमेश्वर एव हि सर्वज्ञताद्यपहस्तनेनाणुतां प्रापितस्य स्वात्मनः पुनरपि कलादियोगं कृतवान्, येनास्य नियतं ज्ञत्वकर्तृत्वाद्यभियुक्तम्। अध्यवसायो बुद्धिः। अस्याश्चैवमध्यवसाययोगित्वे हेतुः 'षट्कञ्चुक' इति। षट्कञ्चुकैः कालकलानियतिबलाद्रागाविद्यावशेन सम्बद्धः। अनाद्यज्ञानं दीक्षया नश्यत्येव। अत एवोक्तम्—

दीयते ज्ञानसद्भावः क्षीयन्ते पशुवासनाः।
दानक्षपणसंयुक्ता दीक्षा तेनेह कीर्तिता।।

अज्ञानाभावमात्ररूपमात्मज्ञानं व्यक्त्युन्मुखमपि प्रारब्धमेकं न शोधयति न नाशयतीत्यर्थः। 'अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्' इति स्मृतेः। 'देहपाते शिवं व्रजेत्' इत्युक्त्या इदंशरीरारम्भकस्य कार्ममलस्य सद्भावाद् वर्तमानशरीरस्य तस्य 'अन्ते स्फुटं व्यज्यते' इति व्यवस्थया स्फुटं निर्मलं ज्ञानम् आत्मसाक्षात्काररूपं स्फुरति। न च दीक्षातोऽन्यत् किञ्चिन्मुक्तौ निमित्तमस्ति। तदुक्तम्—

तस्मात् प्रविततताद् बन्धात् परस्थानविशोधकात्।
दीक्षैव मोचयत्यूर्ध्वं शैवं धाम नयत्यपि।। इति।

प्रकृतिभास्वरस्य चित्तस्य अनाद्यविद्यावशाद् रागादिभिरागन्तुकैर्मलैरावृतत्वेन संसाराविर्भावेऽपि भावनाद्यात्मकमार्गानुष्ठानबलात् तत्तदागन्तुकमलप्रदानेन आश्रयपरावृत्त्या अविनश्वरज्योतीरूपस्वरूपाभिव्यक्तिर्मोक्ष इति निर्गलितशास्त्रार्थः।

शिवस्य हि विश्वमयत्वेऽपि विश्वोत्तीर्णत्वादनवच्छिन्नतायामेव प्ररोहो भवेत्, एक एव हि स्वतन्त्रो बोधस्तथा तथा प्रस्फुरेदिति।

ननु कथमेकदैव एकस्य विश्वमयत्वेऽपि विश्वोत्तीर्णत्वं सङ्गच्छत इत्याशङ्काशान्त्यर्थमागमं संवादयति। तद्यथा—

उक्तं च कामिको देवः सर्वाकृतिनिराकृतिः।
जलदर्पणवत्तेन सर्वं व्याप्तं चराचरम्।। इति।

दर्पणाद्यन्तःप्रतिबिम्बितं घटादि यथा दर्पणादिव्यतिरेकेण प्रकाशमानमपि दर्पणाद्यनतिरिक्तमेव अन्यथा दर्पणघटयोरन्योन्यं वैविक्त्येन भानं स्यात्। तथैव प्रकाशात्मना शिवेनापि स्थावरजङ्गमात्मकमिदं विश्वं स्वेच्छया स्वस्वरूपातिरिक्तायमानत्वेनावभासितं सत्, व्याप्तं प्रकाशमानतान्यथानुपपत्त्या स्वस्वरूपानतिरेकेणैव क्रोडीकृतम्, अत एवायं विश्वमयत्वेऽपि विश्वोत्तीर्णस्तदुत्तीर्णत्वेऽपि

तन्मय इत्युभयथापि न कश्चिद् दोषः। अत एवोक्तम्—सर्वाकृतिनिराकृतिरिति। सर्वाकृतिः-विश्वमयः, निराकृतिः विश्वोत्तीर्णः। आवृत्त्या तत्त्वेऽपि तदुत्तीर्ण इति च। तदेवमयमेक एव प्रकाशात्मा परमेश्वरः सर्वतो जृम्भते इतीश्वराद्वयमेव परमार्थतो वर्तते।

ननु भावानां तदपेक्षया पृथक्प्रकाशानुपपत्तेर्मा नाम तदतिरेकेण सत्ता भूदिति भावापेक्षया प्रकाशात्मक एक एवेश्वर इत्यास्तां, यत्पुनर्विभुत्वादि-धर्मजातं तस्योक्तं, तदपेक्षया धर्मधर्मिणोर्धर्माणां च परस्परभेदस्यान-पह्नवनीयत्वाद् योऽयं भेद उल्लसितः स कथं वार्यते येन एक एवेश्वर इत्यद्वयवादनिर्वाहः स्याद् इत्याशङ्कायामाह—

न चास्य विभुताद्योऽयं धर्मोऽन्योन्यं विभिद्यते।

न च विभुताद्योऽयम् अस्येश्वरस्य विभोः स्वरूपातिरिक्तस्तदतिशायकः कश्चिद् धर्मः, अपि तु स्वरूपमेवैतत्। विभुत्वं हि व्यापकत्वमुच्यते, तच्च स्वव्यतिरिक्ते व्याप्ये सति स्यात्, न च परं प्रकाशमपेक्ष्य दिगादि किञ्चिद् सम्भवेन्नाम इति किं नाम व्याप्नुयात्।

नित्यत्वमपि नास्येश्वरस्य धर्मः, तस्य कालत्रयानुगामिरूपत्वात्, ईश्वरस्य च अकालकलितत्वात्। न हि एतदपेक्षया विश्वं नाम किञ्चिदस्ति यदाकारत्व-मप्यस्य स्यात्। एवं चैषां परप्रकाशापेक्षया कथञ्चिद् भेदायोगात् पारस्परिकोऽपि भेदो नास्ति।

अस्य खलु एक एवासौ अहंप्रत्यवमर्शाख्यो हि स्वभावभूतो धर्मोऽस्ति,

य: सर्वं विभुत्वादिधर्मजातमाक्षिपेत्।

अत एवोक्तम्—

एक एवास्य धर्मोऽसौ सर्वाक्षेपेण वर्तते।।
तेन स्वातन्त्र्यशक्त्यैव युक्त इत्याञ्जसो विधिः[१]।।

अयं हि प्रकाशस्य अहंप्रत्यवमर्श उच्यते यदयं स्वस्य परस्य वा प्रकाशने परं नापेक्षत इति। अत एवास्य स्वातन्त्र्यरूपं तत्तद्देशकालाद्यवभाससहस्रोल्लासन-सामर्थ्यं स्यात्, येनास्य स्वसमुल्लासितोऽपि सङ्कुचितः प्रमातृवर्गः स्वापेक्षया व्यापकत्वानित्यत्वादि व्यवहरेत्, वस्तुतः पुनरप्यहंप्रत्यवमर्शाख्या स्वातन्त्र्य-शक्तिरेवास्ति येन कारणेन स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मन इत्याद्युक्तम्।

ननु सर्वत्रैवास्य इच्छाद्यनन्तशक्तियोगित्वमुक्तमिति तत्कथमिहैकयैव स्वातन्त्र्याख्यया शक्त्या योग उच्यते? इत्याशङ्क्याह—

---

१. श्रीत. १.६७,६८।

बहुशक्तित्वमप्यस्य तच्छक्त्यैवाविविक्तता।। इति[१]।

स्वातन्त्र्यशक्तिरेव हि तत्तदेषणीयाद्युपाधिवशात् नानात्वेन व्यवह्रियते। एवंरूपेण तच्छक्तियोगितैवास्यानन्तशक्तित्वम्। अत एवोक्तम्—

या सा शक्तिर्जगद्धातुः कथिता समवायिनी।
इच्छात्वं तस्य सा देवि सिसृक्षोः प्रतिपद्यते।।
एकापि सत्यनेकत्वं यथा गच्छति तच्छृणु।। इति।

एवं रूपेणोपक्रम्य व्यवस्थापितं यत्—

एवमेषा द्विरूपापि पुनर्भेदैरनन्तताम्।
अर्थोपाधिवशाद्याति चिन्तामणिरिवेश्वरी।। इति।

अपि च—

शक्तिश्च नाम भावस्य स्वरूपं मातृकल्पितम्।
तेनाद्वयः स एवापि शक्तिमत्परिकल्पने[१]।।

इत्यादिना शक्तेः स्वरूपं श्रीतन्त्रालोके श्रीमदभिनवगुप्ताचार्येण निगदितम्।

यतो भावस्य यस्य कस्यचन सतः पदार्थस्य स्वमेव रूपं फलभेदाद् भेदारोपेण शक्तिरिति प्रमातृभिः परिकल्प्यते। न च शक्तिर्वस्तुतः पदार्थान्तरं किञ्चित्। अतः शक्तिशक्तिमत्परिकल्पनेऽपि क्रियमाणे स एवाद्वयमयो विभुरिति। तदुक्तम्—

'फलभेदादारोपितभेदः पदार्थात्मा शक्तिः' इति।

परमेश्वरस्य परिकल्पितेऽपि शक्तीनामानन्त्ये न कश्चिद् भेदः। यथा वह्नेः दाहपाकादिफलभेदाद् दाहिका पाचिका च शक्तिर्भेदेन कल्पितापि वस्तुतः शक्तिभेदैकस्वभावत्वान्न परस्परस्य स्वरूपं भेत्तुमलम्। पृथक्सिद्धं हि वस्तु वस्त्वन्तरं भिनत्ति।

न हि शक्तेः शक्तिमदतिरेकेण पृथक्सिद्धिरेवास्ति इति किं केन भेद्यम्।

भानमन्तरेणान्यत् किञ्चिन्नास्तीति यो भेदोऽपि भासमानत्वाद् वस्तुतो न किञ्चिद् अपि तु परमार्थसन्नेवेति शक्तीनां तद्वतश्च भेदोऽपि पारमार्थिक एव।

एवं भेदस्य भानैकस्वभावत्वान्न ततोऽतिरेकः। समर्थो हि वह्निः सर्वदाहादिकार्यजातं कुर्यात्, एवं परमेश्वरस्यापि इच्छाद्यवान्तरशक्तिरूपतयावभासमानापि शक्तिर्भगवती तत्तद्भेदोल्लासेऽपि परप्रकाशाभिन्नस्वभावत्वाद् द्योतमानावभासा स्वातन्त्र्याख्यैवेत्युक्तियुक्तमुक्तम्।

---

१. श्रीत. ६.८; २. श्रीत. ११.६९।

# व्याकरणे तदन्तविधिः

**डॉ. रमाकान्तपाण्डेयः**
प्रवक्ता, व्याकरणविभागे
काशीहिन्दूविश्वविद्यालये, वाराणस्याम्



'पाणिनीयव्याकरणे बहुषु स्थलेषु तदन्तविधिप्रयोगो दरीदृश्यते। तं विना सूत्रार्थस्य लक्ष्यसाधकत्वं न सम्भवति। किन्त्वव्याप्त्यादिदोषप्रसङ्गोऽप्यापतति। अतस्तल्लक्ष्यसाधनाय, तत्तत् सूत्रेषु तदन्तविधिरावश्यकः, अतस्तदन्तविधिः कथं सम्भवति किञ्चात्र बीजमिति निरूपणीयमिति कृत्वाऽत्र व्याकरणदृष्टिं समुपस्थापयामः। संज्ञाप्रकरणस्यैकं सूत्रं तदन्तविधिं बोधयति। तच्चेदम्—'येन विधिस्तदन्तस्येति'। इदमेव सूत्रं बहुषु सूत्रेषु तदन्तविधिमुपस्थाप्य तत्तद्विधिसूत्राणां लक्ष्यसंस्कारकत्वेन शास्त्रत्वं सम्पादयति। अत एव संज्ञासूत्राणां विधिसूत्रसहकारित्वमिति व्यवहारो भवति। इदानीम्—तदन्तसंज्ञासम्पादकस्यास्य सूत्रस्यार्थः प्रस्तूयते। तदर्थं विना तदन्त-विधेर्वास्तविकस्वरूपं ज्ञातुमशक्यमिति कृत्वा तत्र सूत्रघटकयेनेत्यत्र करणे तृतीयाविधानं विधिरित्यत्र, भावे "कि"—प्रत्ययस्तस्याः क्रियायाः किम्कर्म, कर्त्ता च क इति जिज्ञासायां सत्यां, प्रत्यासत्तिन्यायेन विधेयञ्चात्र कर्म, प्रसिद्धत्वाच्चाचार्यः कर्ता लभ्यते। एवञ्च—'आचार्यः येन यं विधत्ते, तेन तदन्तस्य बोधो भवतीति सूत्रस्य वाच्यार्थस्सम्पन्नः। आचार्यकर्तृकं यत्करणकं यत्कर्मकं विधानं तत् तदन्तस्य बोधकमिति सूत्रस्य शाब्दबोधः सम्पद्यते।

तद्यथा—'अचो यत्' इत्यत्र भगवान् पाणिनिः, अचा धातोः यत्प्रत्ययं विधत्ते। एवञ्चात्र पाणिनिकर्तृकम्, अच्करणकं यत्कर्मकं विधानमस्ति, अतः अच्पदं तदन्तं बोधयिष्यति। अत एव—अजन्ताद् धातोः यत्प्रत्ययो भवति। इति सूत्रार्थः सम्पद्यते। किन्त्वत्र विभावयन्तु तत्रभवन्तो विद्वांसः, यद् वृत्तौ विशेषणं तदन्तस्य बोधकमित्यर्थः कथं कुतश्च निष्पद्यते।

तदुच्यते—येनेति पदं करणत्वस्य प्रतिपादकमिति पूर्वमेव प्रत्यपादि। करणत्वन्नाम क्रियामात्रविषयं, व्यापारनियतञ्च, एवञ्च नियतव्यापारकं करणम्।

यथा 'रामेण बाणेन हतो बाली' इत्यत्र बाणपदं करणप्रतिपादकमुत्कृष्टगमनव्यापारस्य सत्त्वात्। तथैव शब्दात्मके करणे तदितरव्यावर्तकत्वरूपव्यापारो विद्यते। इतरव्यावर्तकत्वविशेषणस्यैव। अस्मादेव कारणाद् येनेत्यस्यार्थो विशेषणमिति कृतं भट्टोजिदीक्षितेन। एवञ्च विशेषणं तदन्तस्य बोधकमिति फलितार्थाभिप्रायेण सिद्धान्तकौमुद्यामुक्तं तैरिति भावः।

किञ्च विशेषणता यत्किञ्चित्सम्बन्धावछिन्ना, यत्किञ्चिद्-विशेष्यत्वेन निरूपितत्वावच्छिन्ना च भवति। अत्रत्या विशेषणता किम्सम्बन्धावच्छिन्ना सती तदन्तोपस्थापिकेति विचार्यम्। यदि सामान्यतः यत्किञ्चित् सम्बन्धावच्छिन्नायाः विशेषणतायाः तदन्तोपस्थापकत्वमङ्गीक्रियते तदा 'इको यणचि' इत्यादावपि अच्निष्ठायाः विशेषणताया अव्यवहितपूर्वत्वसम्बन्धावच्छिन्नायाः सत्त्वात् तत्रापि तदन्तविधिप्रसङ्गः प्राप्तः। तस्मात्—विशेषणतानिरूपकस्य सम्बन्धस्यावधारणमवश्यं करणीयमिति कृत्वा, तत्र प्रसङ्गतः शेखराभिप्रायं प्रस्तौमि।

''तत्र शब्दोपस्थितविशेष्यस्य तादृशं विशेषणमेव तदन्तग्राहकं, क्वचिद् गमकेऽतादृशं शब्दस्वरूपं विशेष्यमादाय तदन्तविधिः' (शेखरग्रन्थः, पृ.सं. ४८)—शेखरग्रन्थस्येदमेव तात्पर्यम्, सम्बन्धानपेक्षत्वेन शीघ्रोपस्थितिकत्वात् समानाधिकरणमेवात्र ग्राह्यम्। शब्दोपस्थितविशेष्यस्यैव विशेषणं तदन्तस्य ग्राहकं भवति। न तु शब्दानुपस्थितिविशेषस्येति इको यणचि इत्यादौ न तदन्तविधिः। शब्दोपात्तविशेष्यसन्निहितम्, अधिकारलब्धविशेष्यसन्निहितमाक्षेपलब्धविशेष्यसन्निहितञ्च विशेषणमसति बाधके तदन्तोपस्थापकं भवत्येव। यथा—'ईदूदेद्द्विवचनं प्रगृह्यम्' इत्यत्र शब्दोपात्तद्विवचनन्तु सन्निहितम्। अतस्तत्सूत्रे तदन्तविधिर्भवति।

अध्याहारलभ्यविशेष्यस्य यद् विशेषणं तत्तु सत्येव गमके तदन्तप्रयोजकम्। यथा—''सर्वादीनि सर्वनामानि'' इत्यत्र शब्दस्वरूपं विशेष्यमध्याहृत्य तदन्तविधिः क्रियते, येन सर्वाद्यन्तस्य 'परमसर्व' इत्यस्य सर्वनामसंज्ञा सिद्ध्यति। अन्यथा 'परमसर्वस्मै' इत्यादिलक्ष्यं न सिद्ध्येत्। शब्दस्वरूपविशेष्यस्याध्याहारे, 'प्रयोजनं सर्वनामाव्ययसंज्ञायाम्' इति प्रकृतसूत्रस्थभाष्यमेव प्रमाणमिति भावः। तत्र च प्रायशो विशेषणं समानाधिकरणसम्बन्धेन, आहोस्विद् व्यधिकरणेनेति। समानाधिकरणन्नाम समानविभक्तिकानामभेदसम्बन्धः। उभयोर्मध्ये यत्र विशेषणता, अभेदसम्बन्धावच्छिन्ना तत्प्रयोजकं पदमेव तदन्तोपस्थापकं नान्यत्। तद्यथा—'अतो दीर्घो यञि' अत्र

सूत्रे अङ्गस्याधिकारो वर्तते, तत्र 'अत' इति विशेषणम्। अङ्गस्येति षष्ठ्यन्तं तद्विशेषणमत इति षष्ठ्यन्तमुभयोः समानविभक्तिकत्वेन विशेष्यविशेषण-भावनियामकः सम्बन्धोऽभेदः। अस्मादेवात्र 'अत'निष्ठाविशेषणताभेद-सम्बन्धावच्छिन्नेति। तत्सम्बन्धावच्छिन्नाया विशेषणताया सत्त्वात् "अत" इति षष्ठ्यन्तं पदं तदन्तमुपस्थापयति। येन अदन्ताङ्गस्य दीर्घ इति वाच्यार्थो निष्पद्यते।

इदमप्यत्र ध्येयम्—यत् तदन्तविध्युत्तरं, चेद् विशेषणता, अभेदसम्बन्धावच्छिन्नविषयताप्रयोजिका तत्रापि तदन्तविधिस्तिष्ठति। अत एव लक्ष्मीटीकाकारः सभापतिशर्ममहोदयो ब्रूते—

"परिष्कृतार्थश्च—अभेदसम्बन्धावच्छिन्ना या विषयता तादृशविषयता-प्रयोजकं तादृशविषयताप्रयोजकत्वेन सम्भावितश्च यत् पदं तत्तदन्तस्य बोधकमिति।"

किञ्च तदादिनिष्ठविशेष्यतानिरूपितविशेषणताप्रयोजकं यत् पदं तत्तदन्तोपस्थापकमिति। किन्तु यत्र विशेष्यताप्रयोजकं पदं पूर्वत एव वर्तमानश्चेत् तदा, केवलं तत्सूत्रे तदादित्वधर्ममात्रस्योपस्थितिरिति ग्रन्थस्य हार्दमिति भावः। तद्यथा—"यञिञोश्च" इति पाणिनिसूत्रं वर्तते। तत्र सूत्रे प्रातिपदिकस्याधिकारो वर्तते। अस्मिन् प्रातिपदिके, यञिञोश्चेति विशेषणम्। किन्त्वत्र यञादेः प्रत्ययमात्रबोधकत्वेन प्रत्ययग्रहणपरिभाषायाः प्रवृत्तिप्रसङ्गः प्राप्तः। किञ्चात्र सूत्रे विशेष्यस्य पूर्वत एव सत्त्वात् तत्र तदादिरूपस्य विशेष्यस्य आवश्यकत्वं न प्रतिभाति। किन्तु परिभाषाप्रवृत्तिबीजस्य सत्त्वात् तत्प्रवृत्तिः प्राप्तैव। किन्त्वत्र सन्दर्भे विचारणीयं यत् परिभाषया धर्मस्योपस्थितिः स्याद् वा, धर्मिणः। एवञ्च प्राप्ताप्राप्तविवेकन्यायेन, परिभाषया तदादित्वधर्ममात्र-स्योपस्थितिर्भविष्यति। अत एव शेखरकारा ब्रुवते—

'स च शब्दस्वरूपं विशेष्यामादाय विशेष्यन्तरासत्त्वे सति विशेष्ये तदादित्वमात्रमुपतिष्ठते' (परिभाषेन्दु, पृ. १०३)। एवञ्च 'यञिञोश्चेति सूत्रस्य तदादित्वविशिष्टं यद् यञन्तं प्रातिपदिकं तस्मात् फक् स्यात्' इति परिष्कृतोऽर्थः सम्पद्यते। अत एव परमगार्ग्यायण इति प्रयोगो न भवति, अन्यथा गार्ग्यायण इतिवत् परमगार्ग्यायण इति प्रयोगः स्यात्। यतो हि—यच्च यञन्तं प्रातिपदिकं न तत् तदादित्वविशिष्टं, यच्च तदादित्वविशिष्टं न यञन्तप्रातिपदिकमिति, तस्मान्न दोष इति भावः। एवञ्च प्रत्ययग्रहणपरिभाषाया 'परमगार्ग्यायण' इत्यत्र

फलप्रदर्शनपरं भाष्यमाञ्जस्येन सङ्गच्छते। अस्मिन् सन्दर्भे प्रत्ययग्रहणपरिभाषाऽपि विस्फोरणीयेति कृत्वा विचार: प्रस्तूयते—अस्यां परिभाषायां ''प्रत्ययग्रहणे यस्माद् विहित:'' इत्येतद् वाक्यं तदादिस्वरूपप्रतिपादकं, यत् किञ्चित् प्रत्ययस्य प्रकृतिरेव तदादिरिति तात्पर्यम्। तत्र प्रत्ययबोधकपदघटिते शास्त्रे तदादिरित्युपतिष्ठते। उपस्थिततदादौ प्रत्ययस्य विशेषणत्वं प्रकल्प्य तत्र विशेषणत्वात् तदन्तविधि: क्रियते। तद्यथा— ''सनाद्यन्ता धातव:'' इति सूत्रे सनादिपदं प्रत्ययमात्रबोधकम्, अतस्तत्र तदादिमुपस्थाप्य तत्र सनादिप्रत्ययानां विशेषणत्वमुपकल्प्य तदन्तविधि: सम्पाद्यते। अत एव 'देवदत्त: चिकीर्षति' इति समुदायस्य धातुसंज्ञा न भवति। अन्यथा अस्य धातुत्वे सुब्लुगापत्ति: स्यात्। एवञ्च बहुषु स्थलेषु तदादितदन्तशब्दप्रयोगो दृश्यते। तस्य पूर्वोक्तमेव तात्पर्यं निश्चेयं विद्वद्भि:। आलेखविस्तरभिया तदन्तापवादपदार्थो न विचार्यते, अपि तु अत्रैव विरम्यत इति शम्।



# लिपीनां प्रकारानुशीलनम्

**प्रो. शारदाचतुर्वेदी**
आचार्या, भाषाविज्ञान-विभागस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये, वाराणस्याम्



अस्मिन् संसारे भाषा एव भावानां विचाराणाञ्चाभिव्यक्तये माध्यमभूताः सन्ति। प्रायः सर्वे शास्त्रकाराः स्वाभिप्रायप्रकाशनायैव सकला अपि भाषाः स्वीकुर्वन्ति। भाषा येषु चिह्नेषु सुदीर्घकालं सुरक्षितास्तिष्ठन्ति, तेषामेव संज्ञा लिपिरिति निगद्यते। चिह्नानां सा व्यवस्थैव लिपिर्भवति, यया भाषा अभिव्यज्यन्ते। एवञ्च मानवसंस्कृतीनां विकासाय लिपीनां महत्त्वपूर्णं योगदानमस्ति। यदि लिपयो नाभविष्यन् तदा वयं प्राचीना भाषा अवगन्तुमसमर्था अभविष्याम।

**लिपीनां विकासः**

मानवानां मनसि यदा स्वकीयभावानां विचाराणां वा सुरक्षायामावश्यकता प्रातीयत तदैव लिपीनां विकासः सञ्जातः। लिपयः क्रमशो विकासमापन्नाः। एताश्चित्रात्मक-प्रतीकात्मकाक्षरात्मक-ध्वन्यात्मक-रूपावस्थाभेदेन चतुर्धा सन्ति। सर्वप्रथमं मानवा निजभावविचारान् चित्रमाध्यमेन प्राकटयन्, यत्र सजीवजन्तूनां निर्जीवपदार्थानाञ्च चित्राण्यभूवन्। अत एवैतेषां चित्रात्मकलिपित्वेन व्यपदेशः। पश्चादेते पदार्थाः केषाञ्चित् प्रतीकरूपेण सञ्जाताः। अत एवैषा प्रतीकात्मकलिपिरगद्यत। एत एव प्रतीकप्रकाराः क्षुद्रचित्रेषु प्रयुक्ता जाताः, यत्रैकैकशोऽक्षराणां बोधोऽपि प्रादुरभूत्। अयं लिपिमाध्यमोऽक्षरात्मकलिपिरकथ्यत। पश्चाच्च एतान्येवाक्षराण्येकैकं ध्वनिं प्राकटयन्, ततश्च ध्वन्यात्मकलिपिः प्रकाशमाजगाम।

अत्र ज्ञातानामज्ञातानाञ्च लिपीनां द्वौ वर्गौ स्तः। प्रथमे वर्गे ता लिपयः सन्ति यासु वर्णा न भवन्ति, तथा हि—

१. क्यूनीफार्म (तिकोनी-लिपिः), २. हीरोग्लाफिक (पवित्राक्षर-लिपिः), ३. क्रीट-लिपिः, ४. सिन्धुघाटीय-लिपिः, ५. हिट्टाइट-लिपिः, ६. चीनी-लिपिः, ७. प्राचीनमध्यामरीकायास्तथा मैक्सिकोदेशस्य लिपयः।

द्वितीयवर्गे वर्णप्रधाना लिपयः सन्ति, तथा हि—

१. दक्षिणी सामी-लिपिः, २. हिब्रू-लिपिः, ३. फोनेशियन-लिपिः, ४. खरोष्ठी-लिपिः, ५. आर्मेइक-लिपिः, ६. अरबी-लिपिः, ७. भारतीय-लिपिः, ८. ग्रीक-लिपिः, ९. लैटिन-लिपिः।

**भारतीयलिपयः**

संसारस्य प्राच्यसभ्यतासु सिन्धुसभ्यताया महत्त्वपूर्णं स्थानमस्ति। सभ्यतेयं पूर्णरूपेण विकसिता आसीत्। अस्यां वर्तमाना नरा लेखनकलाभिज्ञा आसन्। अत एव सिन्धुसभ्यताया निवासिनो यां लिपिं प्रायुञ्जत तां सिन्धु-घाटीलिपिं कथयन्ति। अधुनापि इयं पठितुं न शक्यते। अत एवैतद्विषये पर्याप्तरूपेण याथार्थ्यं प्रकटितं नास्ति। सिन्धुघाटीलिपिव्यतिरिक्तत्वेन भारतवर्षे मुख्यतो या लिपयः प्रयुज्यन्ते ता एताः सन्ति—

१. ब्राह्मी-लिपिः, २. खरोष्ठी-लिपिः, ३. गुप्त-लिपिः, ४. कुटिल-लिपिः, ५. शारदा-लिपिः, ६. दक्षिणभारतीयलिपयः, ७. नागरी-लिपिः।

ब्राह्मीलिप्या गुप्तब्राह्मी, शारदया गुरुमुखी, कुटिलया बाङ्गी, आसामी, उत्कली, मणिपुरी, कैथीलिपिश्च तथा नागरेण नागरी, नागर्या देवनागरी च विकसिता बभूवुः।

**ब्राह्मी-लिपिः**

बौद्धानां ललितविस्तारनामके संस्कृतग्रन्थे चतुष्षष्टिलिपीनामुल्लेखोऽस्ति यत्र ब्राह्मीलिपिः प्राधान्येन गण्यते। अस्याः कालः ख्रैस्ताब्दीयपञ्चमशतकात् प्रागस्ति। अस्या विकासः स्वातन्त्र्येण सञ्जातः। इयं वैदिककालस्य आर्याणां लिपितो विकसिता बभूव। ब्राह्मी वैदिकीति अनर्थान्तरम्। ब्रह्मावर्तेन सम्बद्धत्वाद् अस्या नाम 'ब्राह्मीति' सञ्जातम्। अस्याः प्राचीनतमप्रतिरूपाणि पिपरावा-(बस्ती) स्थानस्य स्तूपे तथा बडली-(अजमेर) ग्रामस्य शिलालेखे लभ्यन्ते।

**खरोष्ठी-लिपिः**

ब्राह्मीलिपेः पश्चात् खरोष्ठ्या स्थानमायाति। अस्या इण्डोबैक्ट्रियन-उपलब्ध-बैक्ट्रियन-काबुलियन-बैक्ट्रोपालि-आर्यन्-प्रभृतीनि नामानि लभ्यन्ते। सामग्रीदृष्ट्या ख्रैस्ताब्दीयात् प्राक् त्रि-चतुःशतकयोर्मध्ये खरोष्ठी तिष्ठति। खरोष्ठीलिप्याः साक्ष्यं शाहबाजगढ़ीति स्थानस्य तथा मानसेरास्थानस्य

अशोकीयेषु नैकेष्वभिलेखेषु प्राप्यते। दक्षिणतो वामगामिनीयं लिपिर्दृष्टा। अशोकात् प्रागस्या उल्लेखो नास्ति। अस्या व्युत्पत्तिविषये विदुषां मनांसि भिन्नानि सन्ति। खरोष्ठः ऋषिविशेषः, काशगरक्षेत्रस्य प्राचीनं नाम अथवा असभ्यजातीयः, तत इयं सञ्जाता खरोष्ठीयते। पाश्चात्त्यानां खरपृष्ठी क्रमशः खरोष्ठी निगदिता। ततः खरोष्ठीति। राजबलीपाण्डेयमतेन खरस्य ओष्ठाकारत्वेन खरोष्ठीति कथ्यते।

**गुप्त-लिपिः**

अस्या विकासो ब्राह्मीलिप्या बभूव। अस्याः कालश्च खैस्ताब्दस्य चतुर्थं पञ्चमं वा शतकं स्वीक्रियते। गुप्तकालिकेष्वभिलेखेष्वियं लभ्यते। तत्र विकासादेव अस्या नाम गुप्तलिपिरिति अभूत्।

**कुटिललिपिः**

अस्या विकासो गुप्तलिप्या स्वीक्रियते। खैस्ताब्दस्य षष्ठशताब्दात् नवमशताब्दी यावद् अस्याः प्रचार आसीत्। इयं भारतस्य पूर्वोत्तरभागयोर्विराजमाना आसीत्। आकारस्य कुटिलत्वादेव अस्या नाम कुटिललिपिरिति।

**शारदालिपिः**

अस्या विकासः कुटिललिपितो बभूव। इयं नवम-दशमशताब्दयोर्मध्ये विकासमाप। अस्या प्रचारः प्राधान्येन काश्मीरदेशे तथा पंजाबप्रान्त आसीत्। काश्मीरस्याधिष्ठात्रिदेव्याः शारदाया नाम्ना अस्या नाम शारदालिपिरिति।

**दक्षिणभारतीयलिपयः**

दाक्षिणात्यब्राह्मीलिपितः षण्णां लिपीनां विकासो बभूव।

(क) **तेलुगूकन्नडीलिपिः**—इयं लिपिर्दक्षिणभारते खैस्ताब्दस्य पञ्चमचतुर्दशशताब्दयोर्मध्ये प्रचलितासीत्। अस्याः क्षेत्रे आन्ध्रप्रदेशस्य दक्षिणभागः, तमिलप्रान्तस्य उत्तरपूर्वभागौ तथा कर्नाटकदेश आसीत्।

(ख) **ग्रन्थलिपिः**—इयं खैस्ताब्दस्य पञ्चमपञ्चदशशताब्दयोर्मध्ये प्राचलत्। अस्याः प्रचारो मद्रास आसीत्। मद्रासस्य येषु भागेषु तमिललिपिप्रचार आसीत्, तत्रापि संस्कृतस्य ग्रन्था अस्यामेव लिप्यामलिख्यन्त। अत एव नाम्ना इयं ग्रन्थलिपिरिति।

(ग) **तमिललिपिः**—तमिललिप्याः प्रयोगः सप्तमशताब्दीतोऽद्यया-वल्लभ्यते। एतदक्षराणि ग्रन्थलिप्या समानानि सन्ति। मद्रदेशे तमिलभाषायै तमिललिपिस्तथा संस्कृतभाषायै ग्रन्थलिपिः प्रयुज्यते।

(घ) **कलिङ्गलिपिः**—इयं लिपिः ख्रैस्ताब्दस्य सप्तमशताब्दीत एकादशशताब्दीं यावद् उत्कलदेशे प्रचलितासीत्। कलिङ्गप्रान्ते प्रचलितत्वाद् अस्या नाम कलिङ्गलिपिरिति सञ्जातम्। लिपिरियं नागरी-तेलुगू-कन्नडी-ग्रन्थलिपिभिः समानैव।

(ङ) **पश्चिमीलिपिः**—इयं लिपिः ख्रैस्ताब्दस्य पञ्चमशताब्दीतः नवमशताब्दीं यावद् भारतस्य मध्यभागे तथा दक्षिणे गुर्जर-काठियावाड-खानदेश-नासिक-सतारा-हैदराबाद-कोङ्कणप्रान्तेषु तथा कर्नाटकस्य कैश्चिद् भागेषु प्रचलिताऽऽसीत्।

(च) **मध्यप्रदेशीयलिपिः**—इयमपि ख्रैस्ताब्दस्य पञ्चमशताब्दीतो नवम-शताब्दीं यावत् मध्यप्रदेशे, बुन्देलखण्डे तथा हैदराबादस्य उत्तरभागे मैसूरस्य यत्किञ्चिद् भागे प्रचलिताऽऽसीत्। पूर्वोक्ताः सर्वा लिपयो ब्राह्मीलिपित एव विकसिताः सन्ति। एतद्व्यतिरिक्तत्वेन रोमन-उर्दू इति वैदेशिकलिपिद्वयमपि प्रयोगे तिष्ठति। उभयोः प्रयोगे यवनाङ्ग्लशासनमेव कारणमस्ति।

**नागरी-(देवनागरी) लिपिः**

इयं ब्राह्मीलिपेर्बभूव। अस्या नामकरणविषये विदुषां मतभेदोऽस्ति। गुर्जरनागरब्राह्मणसम्बद्धत्वाद् अस्या नाम नागरीति सञ्जातमिति केचन विद्वांसो मन्यन्ते। केचन च नगरशब्दात् नागरीति व्युत्पादयन्ति। शिक्षितनागरैः पुरुषैः प्रयुज्यमानत्वात् नागरीति नामाजायतेति तन्मनः स्थितिः। एतेषां विदुषां स्वीकृतिरस्ति यत् तान्त्रिकमन्त्रेषु प्रयुज्यमानानि नानाविधानि चिह्नानि 'देवनगर'-शब्दव्यपदेश्यानि सन्ति। एतेषां चिह्नानां साम्यादेव अस्या नाम देवनागरीति। दक्षिणदेशेष्वियं नन्दिनागरीति निगद्यते; किन्त्वस्या लिपेर्नामकरणस्य वास्तविको हेतुरनिश्चित एवास्ति। उत्तरभारते अस्या प्रचारो नवमशताब्द्या नातिदूरे लभ्यते तथा दक्षिणभारते अष्टमशताब्दीतः षोडश-शताब्दीं यावत् प्राप्यते। महाजनी-कैथी-राजस्थानी-गुर्जरी-लिपयो देवनागरी-लिपित एव विकसिता बभूवुः।

एतेषु नामकरणविषयकेषुमतेषु कस्यौचित्यमस्तीति सनिश्चयं न वक्तुं शक्यते, तथापि तथ्यमेतन्निर्विवादं सत्यं प्रतीयते यत् संस्कृतभाषा परिष्कृतत्वादेव यथा देववाणीति निगद्यते, तथैव संस्कृतसाहित्यस्य

लिपिबद्धकरणादेव परिष्कृता इयं नागरीलिपिर्देवनागरीति न्यगद्यत। देवनागरी-लिपि: स्वोद्भवकालादेव नैरन्तर्येण विकसिताऽऽसीत् विकासदृष्ट्या दशमशताब्दीतो देवनागरीलिपेर्वर्णानां क्रमशो विकासोऽजनि। अस्यामेव शताब्द्यामुत्तरभारते प्रचलितानां देरनागरीलिप्यां कुटिललिपिरिव अ,आ,घ,प,य,ष,स इत्येतेषां वर्णानां शिरोभागो द्वयोरंशयोर्विभक्तत्वेन लभ्यते तथा एकादशशताब्दीं यावद् एतदंशद्वयं मिलित्वा शिरोभागस्य एका रेखा जायते। अक्षरायतानुरूपमक्षराणां शिरोभागो लम्बमान एवाभवत्। एकादशशताब्द्या देवनागरीलिपिस्वरूपेण वर्तमानलिपय: साम्यं गच्छन्ति, द्वादशशताब्दीतश्चतुर्दशशताब्दीं यावद् अस्या लिपेर्यत्स्वरूपं प्रचलितमासीत् तदेवाद्यतनलिपे: स्वरूपमस्ति।

**स्वराः**

अ-
अ-
इ-
उ-
ए-

**व्यञ्जनाः**

क-
ख-
ग-
घ-
ङ-
च-
छ-
ज-
झ-
ञ-
ट

कि-

की-

कु-

कू-

के-

**देवनागरीलिप्यामन्यासां लिपीनां प्रभावः**

देवनागरीलिप्यामन्यासां लिपीनां प्रभावः सुस्पष्टं दृश्यते। या लिपयो विकसिता आसन् तासां प्रभावोऽत्र जात एव, अन्यासां लिपीनां प्रभावोऽपि सञ्जातः।

मराठीलिप्याः प्रभावो देवनागरीलिप्यामस्ति, यथा 'त्र' इति स्थाने 'अ', 'भ' इति स्थाने 'झ' एवं 'ळ' इति स्थाने 'ल' इति जातः। गुजरातीलिप्यापि देवनागरीलिपिः प्रभाविताऽस्ति। गुजराती-लिपिः शिरोरेखाविहीना भवति। अस्याः प्रचलनमद्यापि देवनागरीलिप्यामस्ति। बङ्गलिप्यापि देवनागरी प्रभाविता वर्तते। बङ्गलिप्याः प्रायो वर्णा वर्तुलाकारा भवन्ति तथा देवनागर्याश्चतुष्कोणाकाराः, परन्तु देवनागरीलिप्या अद्य अधिकाधिकास्तावन्तश्चतुष्कोणात्मका न भवन्ति किन्तु ईषद्वर्तुला भवन्ति।

अत्र फारसीलिप्याः प्रभावेण देवनागर्या जिह्वामूलीयध्वनयः (क,ख,ग,ज,फ) इत्येते वर्णाः क़,ख़,ग़,ज़,फ़ इति रूपेण लिख्यन्ते।

देवनागरीलिपिः रोमनलिप्यापि प्रभाविता जाता। यथा आङ्ग्लभाषायाः Doctor, Hospital इत्यादिशब्दान् देवनागरीलिप्यां लेखितुम् 'ऑ' इत्यस्य प्रयोगः सञ्जातः—डॉक्टर, हॉस्पिटल इति, सहैव आङ्ग्लभाषायां पूर्णविरामाय (.) लिख्यते। आङ्ग्लप्रभावादेव देवनागरीलिप्याः पूर्णविरामः (।) इति (.) इति रूपेण लिख्यते।

**देवनागरीलिपिवैशिष्ट्यम्**

संसारे विद्यमानासु सकलास्वपि लिपिषु वैज्ञानिकलिपित्वाद् देवनागरी महत्त्वपूर्णा लिपिरस्ति। वैदिककालादेव प्रयुज्यमानत्वाद् भारतवर्षे अस्या महत्त्वमत्यधिकम्। स्वकीयवैज्ञानिकत्वादेव देवनागरीलिपिः श्रेष्ठतमा लिपिरस्ति। अस्या इमे वैशिष्ट्यभेदाः—

१. अत्र पर्याप्तानि लिपिचिह्नानि सन्ति। प्रत्येकध्वन्यर्थं भिन्नानि चिह्नानि भवन्ति। अत्र चतुर्दशस्वरास्तथा पञ्चत्रिंशत् मूलव्यञ्जनानि तथा त्रीणि संयुक्ताक्षराणि भवन्ति। पर्याप्तस्वरव्यञ्जनयुक्तत्वाद् अस्यां देवनागर्यां विभिन्नानां भाषाणां ध्वनीनङ्कयितुं सामर्थ्यमस्ति। अत एवेयं वैज्ञानिकलिपिः।

२. अस्या लिपेः क्रमो वैज्ञानिकोऽस्ति। स्पर्शध्वनीनां वर्णने प्रथमो वर्गः कण्ठ्यध्वनीनामस्ति। प्रत्येकवर्गे अल्पप्राणध्वनिभ्यः पश्चात् महाप्राणध्वनिसूचकानि चिह्नानि सन्ति। प्रत्येकवर्गस्य ध्वनिषु पूर्वमघोषध्वनीनां पश्चात् सघोषध्वनीनामुल्लेखोऽस्ति, यथा—क,ख,ग,घ,ङ,च,छ,ज,झ,ञ इत्यत्र आद्यौ ध्वनी अघोषौ तथा तृतीयचतुर्थौ ध्वनी सघोषौ, अन्तिमश्च नासिक्यः।

३. अत्रलिपिचिह्नानां लेखनमुच्चारणानुकूलं भवति। यथा लिख्यते तथा उच्चार्यत इत्यभिप्रायः। यथा—आङ्ग्ल-(रोमनलिप्यां) लिप्यां 'क' इति स्थले C,K,Q इति त्रयो ध्वनयः प्रयुज्यन्ते। Cat, Kite, Quite तथा उर्दूलिप्यां 'ज' इति स्थाने जीभ, जुवाद, जोय, जे आदयोऽनेके वर्णाः सन्ति; परन्तु देवनागर्यामेवं नास्ति।

४. रोमनलिप्यां 'C' ध्वनये 'क', 'स' इति द्वयोर्ध्वन्योः प्रयोगो भवति, यथा—Cap, Cinema, देवनागर्यामेवं नास्ति।

५. अमेरिकी-विदुषां गवेषणेनायं निष्कर्षः स्थितः—देवनागर्याः सर्वे वर्णा यदि कर्गदादिखण्डेषु खण्डिता भवेयुस्तथा तत्र विशिष्टप्रकारेण ध्वनिप्रवेशो भवेत्, तदा वर्णानां यथोच्चारणं तेभ्यो ध्वनयो निर्गच्छेयुः। यथा अ,इ,उ इत्येतेषां वर्णानामुच्चारणे मुखानीव आकृतयो भवन्ति, प्रायंस्तदाकारा एव वर्णा अभूवन्।

६. रोमनलिप्यामर्धवर्णानां व्यवस्था नास्ति। देवनार्गयां तु विद्यते सा, यथा— Sky = स्काई, School = स्कूल, Skirt = स्कर्ट, Stop = स्टॉप।

७. देवनागरीलिप्यां लेखनं सुन्दरं संघटितञ्च भवति। यथा—हरिश्चन्द्रचन्द्रिकाशब्दौ देवनागर्यां न्यूनस्थाने लेख्यौस्तः; परन्तु रोमनलिप्यामधिकं स्थानं गृह्णीतः, यथा—Harishchadra, Chandrika।

८. देवनागरीलिप्यां ये वर्णा लिख्यन्ते त एव उच्चार्यन्ते। अन्यासु लिपिषु तु तथा न सम्भवति। यथा 'Knowledge' इत्यत्र 'K', 'D' एवं 'Walk' इत्यत्र 'L' मौनवर्णाः सन्ति। एते लिख्यन्ते किन्तु नोच्चार्यन्ते।

९. देवनागरीलिप्यां व्यञ्जनद्वित्वं स्पष्टमुच्चार्यते यथा 'खच्चर', 'विट्ठल', 'पक्का' इत्यादि। रोमनलिप्यां तु 'Bottom', 'Guess', 'All' इत्यादिषु संयुक्तवर्णाः स्पष्टं नोच्चार्यन्ते।

१०. देवनागरीलिप्यां मुख्यमेतद् विशिष्टं वैशिष्ट्यमस्ति यत् तत्र वर्णानामुच्चारणं निश्चितं भवति। अन्यासु लिपिषु तु तथा नास्ति। यथा—'मर्मर, चटपट' इत्यादिशब्देषु ये वर्णा आयान्ति ते परिवर्तिता न सन्ति; परन्तु रोमनलिप्यां 'Cut' इत्यस्य उच्चारणं 'कट' इति भवति, 'Put' इत्यस्य उच्चारणं 'पट' इति भवेत्; किन्तु 'पुट' इति भवति।

११. देवनागरीलिप्यां ह्रस्वदीर्घयोरुच्चारणस्य चिह्नानि यत्किञ्चिदन्तरं गृहीत्वा भवति। यथा—ह्रस्वे 'अ' इति, दीर्घे 'आ' इति, ह्रस्वे 'इ' इति, दीर्घे 'ई' इति, ह्रस्वे 'उ' इति, दीर्घे 'ऊ' इत्यादि। इत्थमन्यासु लिपिषु व्यवस्था न दृश्यते।

१२. आशुलेखनाय देवनागरी पूर्णरूपेण उपयुक्ताऽस्ति।

**देवनागरीलिप्या अवैज्ञानिकत्वम्**

नैकविधवैशिष्ट्यसत्त्वेऽपि सर्वश्रेष्ठवैज्ञानिकत्वे केचन दोषा दृश्यन्ते। अत एव अवैज्ञानिकताया अपि दर्शनं भवति। ध्वनयोऽनन्ता भवन्ति येन तान् लिपिचिह्नेषु स्थापयितुं न शक्यते, अत एव देवनागर्यामपि काश्चन त्रुटय एवं सन्ति—

१. देवनागरीलिपिरक्षरात्मिका अर्धाक्षरात्मिका वा लिपिरस्ति। अत एव ध्वनीनां पूर्णं विश्लेषणं न भवति। यथा कमलशब्दे त्रीणि व्यञ्जनानि त्रयश्च स्वराः सन्तीति आहत्य षड्वर्णा भवन्ति। रोमनलिप्यान्तु इदं वैशिष्ट्यं वर्तते, यथा—Kamala।

२. देवनागरीलिपिश्चिह्नानामनेकरूपत्वेन द्विप्रकारकैरक्षरैः प्रचलिता भवति, यथा—त्र-अ, भ-झ, रा-ण इत्यादि।

३. एकस्मै ध्वनये एकस्मादधिकानां चिह्नानां प्रयोगो भवति। यथा—'र' इति स्थाने 'र', '्र', 'र्', '्र', 'ृ' (राम, उष्ट्र, धर्म, व्रत, मृग)।

४. देवनागरीलिप्यां संयुक्तव्यञ्जनानां लेखनं भ्रमोत्पादकं भवति। यथा—'अर्थ'शब्दे रेफस्य उच्चारणं थकारात्पूर्वं भवति, परन्तु थकारात् पश्चात् लेखनं भवति।

५. अस्यां लिपौ केचन वर्णास्तथाविधा भवन्ति, येषु लेखनोच्चारणयोरन्तरं भवति। यथा—'खाना'शब्दः 'खाना' इत्यपि पठितुं शक्यते, अर्थात् 'ख'वर्णेन रवयोर्भ्रमो भवति।

६. संयुक्तव्यञ्जनानां लेखने अनेकाः पद्धतयः सन्ति। कदाचित् प्रथमं व्यञ्जनमर्धं भवति तथा कदाचित् मध्यं कदाचिच्च चरमं व्यञ्जनमर्धं भवति। यथा—'प्यार', 'सप्त', 'चिन्ह'।

७. अस्यां लिपौ केषाञ्चिदक्षराणां रचना भ्रमाय जायते, यथा—'भ' 'म', 'घ', 'ध', 'ब', 'व' इत्यादि।

८. देवनागरीलिप्यां केचन शब्दास्तथा प्रचलिताः सन्ति, यथा तेषां लेखनमुभयथा भवति। यथा—'हुए-हुये', 'लिए-लिये', 'गई-गयी', 'जाए-जाये-जाय' इत्यादि।

९. संयुक्तव्यञ्जनानां लेखने कापि निश्चिता व्यवस्था नास्ति। कदाचिद् हलन्तरूपलेखने कार्यं भवति, कदाचिच्च नूतनरूपेण लिख्यते, यथा—'क्‍त', 'क्त', 'क्त' इति। क् + ष इति स्थाने क्ष इति लिख्यते, त् + र इति स्थाने 'त्र' इति लिख्यते। 'ज', 'ञ' इति स्थाने 'ज्ञ' इति लिख्यते।

१०. 'इ' इत्यत्र इकारस्वरस्य मात्रा व्यञ्जनात् पूर्वं प्रयुज्यते किन्तूच्चारणं व्यञ्जनात् पश्चाद् भवति। यथा—'निश्चित' इति।

११. वर्णानामाधिक्यात् मात्राविधानानां जटिलत्वात् शीघ्रमेव लेखने मुद्रणे टङ्कणे च विशेषतः काठिन्यमनुभूयते।

**देवनागरीलिप्यां निर्दुष्टताकरणप्रयासः**

देवनागरीलिपेरेतद्दोषदूरीकरणाय प्रयासो विधीयते स्म। अयं प्रयासो व्यक्तिगतत्वेन संस्थागतत्वेन प्राशासनिकतया चाक्रियत। दोषापाकरणप्रयासं सर्वप्रथमं श्रीलोकमान्यतिलकः १९०४ खैस्ताब्दे स्वकीय-'केशरी'-नामकस्य पत्रस्य माध्यमेन कृतवान्। असौ टङ्कणेषु १९२६ खैस्ताब्दे अनपेक्षितानामंशानां त्यागेन १९० टङ्कणाक्षराणां फलकं कृतवान्, यत् तिलकफलकमिति नाम्ना व्यपदिश्यते। पश्चात् काकाकालेलकरमहोदय एकस्य लेखस्य माध्यमेन देवनागरीलिपेः परिष्कारं चकार। असौ संशोधितदेवनागरीलिपिद्वारा 'अ' इत्यत्र मात्राः संयोज्य अन्यवर्णनिर्माणाय सम्मतिं प्रदत्तवान्, यथा—अ, आ, अि, अी, अु, अू, अे, अै, ओ, औ, अं, अः इति।

एवं स्वरेषु केवलम् 'अ' एव अवशिष्टः, एवंविधया टङ्कणयन्त्रस्य 'कीबोर्ड' (Keyboard) तथा टाइप-पटल इत्युभावपि अत्यन्तं लघुतरौ सञ्जातौ। विनोवाभावेमहोदयोऽपि अत्र परिष्काराय लोकं प्रोत्साहितवान्। फलतो गुर्जर प्रकारेशीघ्रं परिष्कारो जातः। गुर्जरलिप्यामुपरि विद्यमाना शिरोरेखा दूरीकृता। अस्य प्रभावो देवनागर्यामपि सञ्जातः, परन्तु स्थायित्वं नाप।

डॉ. श्यामसुन्दरदासोऽप्यचकथद् यत् प्रत्येकवर्गस्य पञ्चमवर्णान् अप्रयोज्य केवलमनुस्वारेण कार्यं भवति। यथा—अङ्ग > अंग, पञ्चम > पंचम, खण्डन > खंडन, नन्द > नंद, अहम् > अहं।

डॉ. गोरखप्रसादस्याप्ययं प्रस्ताव आसीद् यत् प्रयुज्यमाना सर्वापि मात्रा व्यञ्जनेभ्यः पश्चाद् दक्षिणभागे संयुज्येरन्, यथा—'ई' इति मात्रां प्रदर्शयितुं 'दीन' इति तथा 'इ' इति मात्रां प्रदर्शयितुं 'हरि' इति प्रदर्शनं श्रेष्ठं भवति।

डॉ. श्रीनिरासोऽपि कृतवान् यत् सर्वे महाप्राणध्वनयो निःसारिता भवेयुस्तथा तत्स्थाने अल्पप्राणध्वनयः सन्ति, महाप्राणध्वनयश्च चिह्नविशेषै-र्व्यक्ताः स्युः। एवं विधाने लिप्या लक्षणानि न्यूनानि भवेयुस्तथा लिपिरपि प्रभावशालिनी स्यात्। यथा घर > गर इति।

डॉ. सुनीतिकुमारचटर्जीमते देवनागरीलिपिस्थाने रोमनलिपिसञ्चालनमिति प्रथितम्।

१९४७ खैस्ताब्दे उत्तरप्रदेशीयसर्वकारेण देवनागरीलिप्यां परिष्काराय आचार्यनरेन्द्रदेवस्याध्यक्ष्ये एकासमितिः स्थापिता। इयं समितिः 'अ' इत्यस्य द्वादशलम्बमानशिरोरेखाया विहीनताया मान्यतां तत्याज। ततः समितेरधो-लिखिताः सम्मतयः सन्ति—

१. पंक्तौ मात्राणां पृथक् संयोजनम्। यथा—प्रवेश > प्रवएश।

२. अनुस्वाराय शून्यस्य '०' तथानुनासिकत्वाय बिन्दोः '·' प्रयोगः कर्त्तव्यः।

३. संयुक्तरूपेण वर्णानां लम्बमानरेखाया अपाकरणम्। कफौ वर्जयित्वा शेषाणां हलन्तरूपे लेखनम्। यथा—विद्वान, गट्ठर।

४. 'त्र' इत्यस्य स्थाने 'अ' तथा 'म' इत्यस्य स्थाने 'भ' 'ध' इत्यस्य स्थाने 'ध', 'क्ष' इत्यस्य स्थाने 'क्ष्' तथा 'त्र' इत्यस्य स्थाने 'त्र' इति प्रयोग करणम्।

५. वर्णमालायां 'ळ' इति वर्णस्य स्थान प्रापणम्।

उत्तर प्रदेश सर्वकारेण १९५३ खैस्ताब्दे अस्या: समिते:प्रस्तावा किञ्चित् परिवर्तनं विधाय स्वीचक्रिरे। अपि च 'इ', 'ई' इत्यनयो: मात्रयो: स्वरूपमेवं निर्धारितम्। यथा—टिन > टीन, दिन > दीन। परन्तु १९५७ खैस्ताब्दे सर्वकारेण 'ई' इतिमात्रा पुन: स्वीकृता।

कस्यामपि लिपौ परिष्करणमसम्भवि कार्यमस्ति यतो हि अनेन साहित्यस्य अविच्छिन्न परम्परा खण्डिता भविष्यति तथा लिपे: स्वरूपमपि प्रच्युतं भविष्यति तथापि काञ्चिदपि लिपिं वैज्ञानिकीं विधातुं परिष्कार: आवश्यक:।

**देवनागार्य: अङ्का:**

अङ्कानामपि देवनागरी लिप्या विकास: ब्राह्मीलिपितो बभूव। एतेषाम् अङ्कानां प्रथमोत्पत्तिर्भारत एव जाता। अरब देसेषु अङ्का: 'हिन्दस:' इति संज्ञया व्यपदिश्यन्ते येषामर्थ: भारतात् आगता इति भवति। आधुनिका अङ्का: पञ्चम शताब्दीत: प्रागेव प्रचलिता आसन्। वर्तमाना इव पूर्वमङ्का नासन्। पूर्वं एकस्मात् प्रभृति नव पर्यन्ता एव अङ्का आसन्। शून्यं नासीत् अतएव १०, २०, १००, १००० इत्याद्यङ्केभ्य: पृथक्-पृथक् चिह्नानां प्रयोग: आसीत्। शून्यस्य (०) प्रयोगेण १-, २०, १००, १००० इत्यादि अङ्कानाम् अभिव्यक्तौ ऋजुता समागता। सम्भवत: अङ्कानां विकासस्य अधोलिखिता स्थितय: सन्ति।

देवनागर्या अङ्कानां विकासक्रम:—

१-
२-
३-
४-
५-
६-
७-
८-
९-

●

# नीतिशब्दव्युत्पत्तिस्तन्मूलकोऽर्थश्च

**डॉ. हेतरामकछवाहः**

अध्यक्षः, प्राचीनराजशास्त्रार्थशास्त्रविभागस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणस्याम्



'नीति'शब्दः स्त्रीलिङ्गः, तस्या व्युत्पत्तिश्च—'नीयन्ते प्राप्यन्ते लभ्यन्ते अवगम्यन्ते धर्मार्थकाममोक्षोपाया अनया अस्यां वेति नीतिः'। णीञ्-प्रापणे' इति धातोः प्रापणेऽर्थे 'णी' (नी) इत्यस्मात् करणे अधिकरणे वा क्तिन्प्रत्यये कृते सति निष्पद्यते नीतिशब्दः। धर्मार्थकाममोक्षोपायसाधकोपायानां तथा च तेषां प्राप्त्युपायानां येन शास्त्रेण यस्मिन् शास्त्रे वा ज्ञानं भवति तच्छास्त्रं नीतिशास्त्रम्। मानवजीवने लक्ष्यसिद्धये नीतिद्वारैव समुचितमार्गस्य निर्देशनं जायते। यदि मानवो नीतिमार्गमनुसरति तदा साफल्यमन्यथाऽसाफल्यं लभत इत्यनुभवसिद्धं लोकसिद्धञ्च।

अनुचितमार्गेण प्रवृत्तं जनं सन्मार्गे नयति प्रापयतीति नीतिः, अतः प्रथितमिदं नीतिशास्त्रे—'नयनान्नीतिरुच्यते'[१]। एतेन नीतितत्त्वस्य मूर्धन्याचार्यो भीष्मपितामहो महाभारते निर्दिशति—चातुवर्ण्यधर्मस्य विप्लवे तस्य प्रतीकारं राजा एव कर्तुं क्षमते[२]।

किञ्च महर्षियाज्ञवल्क्यस्यायमेव निश्चयः[३]। अत इदं स्पष्टमेव यन्नीतिशब्दस्य प्रापणमर्थः। तस्य प्रापयिता मूलतो राजा एव भवति। अत एव नीतेर्व्युत्पत्तिलभ्योऽर्थो राज्ञा प्रजायाः सन्मार्गे नयनम्। राजनीतिः राजधर्मो

---

१. दमो दण्ड इति ख्यातस्तस्माद्दण्डो महीपतिः।
तस्य नीतिर्दण्डनीतिर्नयनान्नीतिरुच्यते।। (शुक्रनीतिः, १/१५७)

२. चातुर्वर्ण्यस्य धर्माश्च रक्षितव्या महीक्षिता।
धर्म-सङ्कर-रक्षा च राज्ञां धर्मः सनातनः।। (म.भा.शा.प. ५७/१५)

३. कुलानि जातीः श्रेणीश्च गणान् जानपदानपि।
स्वधर्माच्चलितान् राजा विनीय स्थापयेत्पथि।। (याज्ञवल्क्यस्मृतिः, १/३६१)

वा तत्र तत्र राजशास्त्रग्रन्थेषु प्रतिपादितो दृश्यते। मनुस्मृतौ राजनीतिरित्यस्य स्थाने प्रयुक्तो धर्मशब्दः कर्तव्यपर इति स्पष्टं निर्दिशतो मनुस्मृतिटीकाकारौ[१]।

एवं नीतिशब्दस्य एवं व्युत्पत्तौ अपमार्गे गच्छतां जनानां (प्रजानां) ततो निवर्तनं सत्पथे च प्रवर्तनं नीतिमार्गः, इदं क्वचिद् भवितुमर्हति। यदेकपक्षाश्रितानां प्रजानां कृते विहितन्नास्ति, परमन्येषां कृते तत्र नयनं न नीतिविरुद्धम्। उदाहरणार्थं तपस्या हि मोक्षपथारूढानां कृते उपदिष्टा परं सामान्यजनानां कृते संस्कारादिविहीनानां जनानां कृते कठिना तपस्या अनुपादेया। अथ चान्यानि कार्याणि यानि समेषां कृते सर्वथा नीतिविरुद्धानि सन्ति तानि नाचरणीयानि। यथा—चौर्यम्, परदारादिगमनमित्यादयः। तपस्यादयो न समेषां कृते राज्ञा अनिवार्यरूपेण कर्तव्यकोटौ प्रविष्टानि। अत एकस्य कृते धर्मोऽपरस्य कृते चाधर्म इति नयमार्गेऽपि राज्ञा अधिकारिभेदेन नीतिः प्रवर्त्तनीया।

यद्धि सर्वथा अनुचितं कार्यं यथा चौर्यं परदाराभिमर्शनमित्यादि, तत्र प्रवृत्तिरज्ञानादासक्तिवशाद् वा जायते। अत्राऽयं निषेधः सार्वजनीनः। एवं यदि सज्जना अज्ञानादनुचितमाचरन्ति तदज्ञानमेव तत् कारणम्, न चासक्तिः, परमासक्तिवशात् स जनो यदि अनुचितमाचरति सोऽसज्जनकोटावेव परिगणितुं शक्यते। एवमनुचितमाचरणं राज्ञा सम्यक् परिशील्य दुर्जना दण्डनीयाः। निष्कर्षतोऽयमेव उचितानुचितविवेको राज्ञा करणीयः।

सार्वजनीनानामनुचितकार्यसमवरोधाय राज्ञा उपायोऽवलम्बनीयः। स चोपायो मनु[२]-याज्ञवल्क्याभ्यां[३] चतुर्विधः स्थापितः, स च साम-दान-दण्ड-भेदैः। तदतिरिक्ता अन्येऽपि उपाया राज्ञा आचरणीयाः, माया-उपेक्षा-इन्द्रजालप्रभृतयः[४]। यद्यप्येते विविधोपाया न सार्वजनीनाः, तथापि शत्रुराज्ञां वशीकाराय तत्त्वतः स्वीकृताः।

---

१. 'राजधर्मान् प्रवक्ष्यामि' धर्म-शब्दश्च कर्त्तव्यता-वचनः—मेधातिथिः,
धर्म-शब्दोऽत्र दृष्टाऽदृष्टार्थानुष्ठेयपरः—कुल्लूकभट्टः।

२. सामादीनामुपायानां चतुर्णाम्। (मनुस्मृतिः-७/१०९)

३. उपायाः साम दानञ्च भेदो दण्डस्तथैव च।। (याज्ञवल्क्यस्मृतिः-१/३४६)

४. साम भेदस्तथा दानं दण्डश्च मनुजेश्वर।
उपेक्षा च तथा माया इन्द्रजालं तथैव च। (मत्स्यपुराणम्-२२१/२)
साम दानञ्च भेदश्च दण्डश्चेति चतुष्टयम्।
मायोपेक्षेन्द्रजालञ्च सप्तोपायाः प्रकीर्तिताः।। (कामन्दकीयनीतिसार १८/३)

किञ्च न केवलं राज्यव्यवहारनिर्वाहायापि तु सकललोकव्यवहारार्थमेषामुपायानां नूनं महत्त्वम्[१]। अपकारककोटौ यदि कोऽपि जनोऽपकारमाचरति स भवतु नाम परराजा स्वपुत्रो वा परमुभौ तौ शत्रुरूपावेव। एवमपकारकजनानां समेषां कृते यथायोग्यमेतेऽपि उपाया अवलम्बनीया एव।

इत्थं यथापराधमेते उपाया आचरणीया एव। यदि कश्चित् सज्जनः अज्ञानवशात् कुमार्गमाश्रयति तदा तस्य शमनं सामोपायमात्रेण कर्तुं शक्यते[२]। एवं दानभेदयोरपि प्रयोगो यथाऽवसरं कर्तुं युज्यते। परं दुराग्रहपूर्वकं ज्ञानतः कुमार्गप्रवृत्तं दुर्जनं सन्मार्गे नेतुं नोपयुक्तः सामाद्युपायः[३]। त्रिभिरुपायैः अवशीकृतस्य जनस्य निग्रहाय दण्ड एवोपायः समर्थः[४]। वाल्मीकिरामायणेऽपि एवमेवोक्तम्—

न साम रक्षःसु गुणाय कल्पते न दानमर्थोपचितेषु युज्यते।
न भेदसाध्या बलदर्पिता जनाः पराक्रमस्त्वेष ममेह रोचते[५]।।

एवं दण्डप्रयोगे विवेक आवश्यकः। प्रजासु अपराधतोऽधिकतीक्ष्णदण्डेन वा आतङ्कः आक्रोशश्च विवर्धते। एवमेव यथापराधं न्यूने दण्डे प्रयुक्ते राजा उपहासं याति। अतो राज्ञा दण्डप्रयोगे मध्यममार्गः समाश्रयणीयः। यथापराधं विहितो दण्डो नूनं राज्ञां सम्माननाय जायते[६]। सुहृद् वा असुहृद् वा विधानतः

---

१. 'एते सामादयः न केवलं राज्य-व्यवहार-विषयाः, अपि तु सकल-लोक-व्यवहार-विषयाः।'
मिताक्षरा, याज्ञवल्क्यस्मृतिः-१/३४६।

२. तत्र साधुः प्रयत्नेन साम-साध्यो नरोत्तम।। (मत्स्यपुराणम्-२११/४)

३. साम्ना यद्यपि रक्षांसि गृह्णन्तीति परा श्रुतिः।
तथाप्येतदसाधूनां प्रयुक्तं नोपकारकम्।। (मत्स्यपुराणम्-२२१/८)

४. यदि ते तु न निष्ठेयुः उपायैः प्रथमैः त्रिभिः।
दण्डेनैव प्रसह्यैतान् शनकैः वशमानयेत्।। (मनुस्मृतिः-७/१०८)
न शक्या ये वशे कर्तुमुपायत्रितयेन तु।
दण्डेन तान् वशीकुर्याद् दण्डो हि वशकृन्नृणाम्।। (मत्स्यपुराणम् २२४/१)

५. वाल्मीकिरामायणे सुन्दरकाण्डे-४१/३।

६. 'तीक्ष्णदण्डो हि भूतानामुद्वेजनीयः। मृदुदण्डः परिभूयते। यथार्हदण्डः पूज्यः। सुविज्ञातप्रणीतो हि दण्डः प्रजा धर्मार्थकामैर्योजयति। दुष्प्रणीतः कामक्रोधाभ्यामज्ञानाद्वानप्रस्थपरिव्राजकानपि कोपयति, किमङ्ग पुनर्गृहस्थान्।' (कौटिलीयार्थशास्त्रम्-१/३)
उद्वेजयति तीक्ष्णेन मृदुना परिभूयते। दण्डेन नृपतिस्तस्माद् युक्तदण्डः प्रशस्यते।।
(कामन्दकीयनीतिसारः-२/३७)

उभावपराधिनौ दण्डनीयौ[1]। किञ्च महाकविभारविना दण्डस्येयत्ताकृते स्पष्टं व्याख्यायते—

वसूनि वाञ्छन्न वशी न मन्युना स्वधर्म इत्येव निवृत्तिकारणः।
गुरूपंदिष्टेन रिपौ सुतेऽपि वा निहन्ति दण्डेन स धर्मविप्लवम्[2]।।

मनुस्मृतावुक्तं यः कश्चिदपि अपराधी स्यात्तदर्थमपराधानुसारं दण्डो देय इति[3]। महाभारतानुसारेण दण्डभयेनैव सर्वाः प्रजाः सन्मार्गे प्रवर्तन्ते[4]। एवमेतेषु निखिलेषूपायेषु दण्डस्य प्राधान्येनैव नीतिरियं 'दण्डनीतिः' व्यवह्रियते। इत्थं अभेदोपचारेण नीतेः साधनं सामादिकं दण्डपदभाग् भवति। तत्र साध्या नीतिः दण्डनीतिरित्युच्यते। आहोस्विद् दण्डप्रवर्तको राजाऽपि औपचारिकरूपेण दण्डपदवाच्यो भवितुमर्हति। तस्य च दण्डनीतिरिति राज्ञः नीतिः दण्डनीतिरिति व्यवहर्तुं शक्यते। दण्डनीतिः दण्डस्य नयनात् (प्रवर्तनात्) नीतिरित्युच्यते[5]।

तथा च उपाध्यायनिरपेक्षाकारेण नीतिपदस्य परिभाषा इत्थं कृता—

'प्रत्यक्षपरोक्षानुमानलक्षणप्रमाणत्रयनिर्णीतायां फलसिद्धौ देशकालानुकूल्ये सति यथासाध्यमुपायसाधनविनियोगलक्षणा क्रिया नीतिः।'

राजशास्त्रस्य मेरुदण्डभूतायां शुक्रनीतौ नीतेः प्रशंसनं कुर्वता भगवता शुक्राचार्येणोक्तं यद् भारतीयवाङ्मये नीतिशास्त्रातिरिक्तानि समस्तानि किल शास्त्राणि जीवनस्यैकमेवांशं स्पृशन्ति; परं नीतिशास्त्रं हि समेषां जनानामुपकारि समाजस्य स्थितेः रक्षणाय परमोपयोगिमूलकं मोक्षप्रदं च[6]।

---

१. दण्डः शास्ति प्रजाः सर्वाः दण्ड एवाभिरक्षति। दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः।।
(म.भा.शा.प. १५/२, मत्स्यपुराणम्-२२४/१४-१५, मनुस्मृतिः-७/१८)
स्व-देशे पर-देशे वा धर्मशास्त्रविशारदान्। समीक्ष्य प्रणयेद्दण्डं सर्वं दण्डे प्रतिष्ठितम्।।
(मत्स्यपुराणम्-२२४/४)

२. किरातार्जुनीयम्-१/१३।

३. पिताऽऽचार्यः सुहृन्माता भार्या पुत्रः पुरोहितः।
नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्मे न तिष्ठति।। (मनुस्मृतिः-८/३३५)

४. ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः।
दण्डस्यैव भयादेते मनुष्या वर्त्मनि स्थिताः।। (म.भा.शा.प. १५/१२)

५. दमो दण्ड इति प्रोक्तस्तात्स्थ्याद् दण्डो महीपतिः।
तस्य नीतिर्दण्डनीतिर्नयनान्नीतिरुच्यते।। (कामन्दकीयनीतिसारः-२/१५)

६. क्रियैकदेशबोधीनि शास्त्राण्यन्यानि सन्ति हि। सर्वोपजीवकं लोकस्थितिकृन्नीतिशास्त्रकम्।।
धर्मार्थकाममूलं हि स्मृतं मोक्षप्रदं यतः।। (शुक्रनीतिः-१/४-५)

अस्य सम्पूर्णलोकव्यवहारस्य स्थितिर्नीतिशास्त्रादृते तथैव न भवितुमर्हति यथा भोजनं विना जीवानां स्थितिः[१]। एतेन मानवानां सम्पूर्णाभीष्टानां सिद्धये नीतिशास्त्रमेव क्षमतामाधत्ते, इदं सर्वं सम्मतं सार्वजनीनञ्च। न केवलं प्रजयाऽपि तु राज्ञाऽपि राजशास्त्ररहस्यमवश्यमवधेयम्। यतो हि नीत्या एव राजा निखिलप्रजानां स्वामी भवति[२]। नीतेरवलम्बनादेव राजा अजातशत्रुर्जायते, न भवति तस्य कश्चिच्छत्रुः। प्रजानां पालनं दुष्टानाञ्च दमनमेव राज्ञः परमो धर्मः, उभेऽपि च नीतिशास्त्राभावे असम्भवे[३]।

केचन आचार्या नीतिपदस्यार्थः सन्मार्गप्रापणमस्वीकुर्वन्तो दण्डप्रापणमेव नीतिरिति कथयन्ति। मन्ये, दण्डनीतेर्भीष्मपितामहभूतस्य कौटिल्यस्यापि इदमेव मतं स्यात्। मतेऽस्मिन् प्रयुज्यते, परं दण्डोपायो न सामादिकम्। अतस्तस्यैतदर्थं प्रजां स्वस्वधर्मे प्रवर्तयितुं तदुपायरूपेण दण्डप्रयोगो भवतु नाम। अत एव अस्यार्थस्याभिव्यञ्जको दण्डनीतिशब्दः सन्मार्गणार्थको न भवितुं शक्यते। साध्यसाधनयोरभेदोपचारेण प्रस्तुता नीतिः सन्मार्गप्रापणस्योद्देश्यभूता। तथापि आत्माभ्युदयस्तावन्न सर्वाङ्गीणः, यावत्पर्यन्तं परस्यावसादो न स्यात्। परविनाशपूर्वकमात्माभ्युदय एव नीतेर्लक्ष्यं स्वीकर्तुं शक्यते। एतत्सन्दर्भे महाकविमाघस्यैतत् सुभाषितं समीचीनं प्रतीयते—

> आत्मोदयः परग्लानिः द्वयं नीतिरितीयती।
> तदूरीकृत्य कृतिभिर्वाचस्पत्यं प्रतायते[४]॥

अत इदं सिद्धं यद् दण्डप्रापणद्वारा नीतिप्रवर्तनं (सन्मार्गप्रापणं वा) नीतिपदेनाभीष्टम्। दण्डप्रापणेन अभ्युदयो दण्डनीतेः फलं वक्तुं शक्यते।

---

१. सर्वलोकव्यवहारस्थितिर्नीत्या विना नहि।
यथाऽशनैर्विना देहस्थितिर्न स्याद्धि देहिनाम्॥ (शुक्रनीतिः-१/११)

२. सर्वाभीष्टकरं नीतिशास्त्रं स्यात्सर्वसम्मतम्।
अत्यावश्यं नृपस्यापि स सर्वेषां प्रभुर्यतः॥ (शुक्रनीतिः-१/१२)

३. शत्रवो नीतिहीनानां यथाऽपथ्याशिनां गदाः।
सद्यः केचिच्च कालेन भवन्ति न भवन्ति च॥
नृपस्य परमो धर्मः प्रजानां परिपालनम्।
दुष्टनिग्रहणं नित्यं न नीत्याऽतो विना ह्युभे॥ (शुक्रनीतिः-१/१३-१४)

४. शिशुपालवधम्-२/३०।

तथा चोपर्युक्तस्यात्माभ्युदयस्यापि द्वौ रूपौ भवतः—इहलौकिकः पारलौकिकश्च। इहलौकिकाभ्युदयः पारलौकिकाभ्युदयस्य भूमिका इव प्रतिष्ठते। अत एव महर्षिणा याज्ञवल्क्येन, इहलौकिकाभ्युदयार्थप्रयोजकवार्ता[१]-पशुपालन-वाणिज्यादिकृते नीतिपदव्यवहारः कृतः। वार्तायाः फलमेवास्माभिर्दण्डनीतेः (दण्डप्रापणं वा) फलमपि वक्तुं शक्यते। आचार्यकौटिल्येन दण्डनीतेः फलप्रसङ्गे नीतेर्विशेषणं रक्षितविवर्धनीति प्रयुक्तम्।

अर्थशास्त्रे दण्डनीतेः चत्वारि प्रयोजनानि प्रतिपादितानि[२]। अलब्धलाभः, लब्धपरिरक्षणं, रक्षितस्य संवर्धनं तथा संवर्धितसम्पत्तेः सुमात्रे वितरणं च। समुचितदण्डप्रयोगेण मूर्तधनधान्यादिकस्य तथा अमूर्तस्य यशसः सम्प्राप्तिर्भवति। एवं प्रथमं फलं दण्डनीतेः (दण्डप्रापणस्य) एव। द्वितीयञ्च फलं लब्धपरिरक्षणमपि दण्डप्रापणस्यैव फलमिति सन्दर्भेऽस्मिन् महाकविकालिदासस्येदमुदाहरणं समीचीनं प्रतीयते—

> यस्मिन् महीं शासति वाणिनीनां निद्रां विहारार्धपथे गतानाम्।
> वातोऽपि नास्त्रंसयदंशुकानि को लम्बयेदाहरणाय हस्तम्[३]।।

एवं प्रथमं द्वे फले अस्माभिरसन्दिग्धरूपेण दण्डनीतेः (दण्डप्रापणस्य) फलमङ्गीकर्तुं शक्येते[४]। इमे द्वेऽपि फले योगक्षेमरूपे नीतेरेव (सन्मार्गप्रापणरूपायाः)। एवमुभेऽपि अलब्धलाभः, लब्धपरिरक्षणञ्चैहिकाभ्युदयस्वरूपमेव, अनयोः पारलौकिकाभ्युदयस्वीकारेऽपि न किमप्यनुचितं स्यात्। अत एव श्रीमद्भगवद्गीतायामुक्तम्—

> अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।
> तेषां नित्याभियुक्तानां योग-क्षेमं वहाम्यहम्[५]।।

---

१. पालितं वर्धयेन्नीत्या—याज्ञवल्क्यस्मृतिः-१/३१७।
नीत्या=वणिक्पथादिकया—मिताक्षरा।

२. अलब्धलाभार्था, लब्धपरिरक्षणी, रक्षितविवर्धनी, वृद्धस्य तीर्थेषु प्रतिपादिनी च। (कौटिलीयार्थशास्त्रम्-१/३)

३. रघुवंशमहाकाव्यम्-६/७५।

४. दण्ड-नीत्याम्=अर्थ-योग-क्षेमोपयोगिन्याम्। मिताक्षरा याज्ञवल्क्यस्मृतिः-१/३११।

५. श्रीमद्भगवद्गीता-९/२२।

तृतीयफलस्वरूपाया वार्तायाः पूर्वनिर्देशानुसारं दण्डनीतेः दण्डप्रापणस्वरूपायाः फलान्तर्गत एव निर्देशो विहितः। चतुर्थफलस्य हि सम्बन्धः अनया दण्डनीत्या (दण्डप्रापणेन) सम्बन्धस्थापनं स्पष्टतरं नास्ति। तथा च महाभारतम्[1], मनुस्मृतिः[2], याज्ञवल्क्यस्मृतिः[3] प्रभृतिषु दण्डनीतेः (दण्डप्रापणस्वरूपायाः) द्वे एव फले अलब्धलाभः लब्धसंरक्षणञ्च निर्दिष्टे। दण्डप्रयासस्यापि[4] समावेशः अत्रैवोचितः। अत एव मनुस्मृतौ याज्ञवल्क्यस्मृत्याञ्च द्वितीयफलस्य प्रसङ्गे क्रमशः—'अवेक्षया' तथा 'यत्नेन' इति च संयोजितम्। परमिदं दण्डनीतेरेव (दण्डप्रापणस्य) प्रापणस्य फलम्। एतद्दृष्ट्या दण्डनीतौ प्रयुक्तो नीतिशब्दः (दण्डप्रापणम्) इत्यस्यार्थ-स्याभिधायकः। एतन्मते शास्त्रमिदं दण्डनीतिशास्त्रमेव।

किञ्च अस्या नीतेः 'दण्डप्रापणम्' इत्यस्य नामान्तरमुपलभ्यत इति। अर्थशास्त्रे[5] यथा दण्डस्य दण्डनीतेर्वा उभे फले भवतः, अलभ्यलाभः, लाभसंरक्षणञ्च। अर्थशास्त्रस्यापि इमे एव फले निर्दिष्टे[6]। एतस्मात् कारणादेव दण्डनीतिः (नीतिशास्त्रं वा) अर्थशास्त्रपदेनाप्यभिधीयते। यद्यपि शुक्रनीतौ नीतिशास्त्रार्थशास्त्रयोः स्पष्टः सङ्केतो न दृश्यते। तथाप्यत्र विद्यापरिगणने नीतिशास्त्रस्य पृथगनुल्लेखादर्थशास्त्रलक्षणस्य च सम्यग् ध्यानादनयोः पर्यायत्वं प्रतीतिपथमवतरति[7]। दण्डप्रयोगे धर्मस्यानुसन्धानं[8] परमावश्यकम्।

---

१. दण्डनीतिं पुरस्कृत्य विजानन् क्षत्रियः सदा।
अनवाप्तं च लिप्सेत लब्धं च परिपालयेत्।। (म.भा.शा.प. ६९/१०३)

२. अलब्धमीहेद्दण्डेन लब्धं रक्षेदवेक्षया।
रक्षितं वर्धयेद्वृद्ध्या वृद्धं पात्रेषु निक्षिपेत्।। (मनुस्मृतिः-७/१०१)

३. अलब्धमीहेद्धर्मेण लब्धं यत्नेन पालयेत्।
पालितं वर्धयेन्नीत्या वृद्धं पात्रेषु निक्षिपेत्।। (याज्ञवल्क्यस्मृतिः-१/३१७)

४. साम्नि प्रयास-धन-व्यय-सैन्य-प्रक्षयादि-दोषाभावाद् दण्डे तु तत्सद्भावेऽपि कार्यं सिद्ध्यती त्याशयात्।। (कुल्लूकभट्टः, मनुस्मृतिः-७/१०९)

५. आन्वीक्षिकीदण्ड नीतिःतर्क विद्याऽर्थशास्त्रयोः।। (अमरकोषः, शब्दादिवर्गः)

६. पृथिव्या लाभे पालने च यावन्त्यर्थशास्त्राणि पूर्वाचार्यैः प्रस्थापितानि प्रायशस्तानि संहृत्यैकमिदमर्थशास्त्रं कृतम्। (कौटिलीयार्थशास्त्रम्-१/१)

७. श्रुतिस्मृत्यविरोधेन राजवृत्तादिशासनम्।
सुयुक्त्याऽर्थार्जनं यत्र ह्यर्थशास्त्रं तदुच्यते।। (शुक्रनीतिः-४/५५)

८. याज्ञवल्क्यस्मृतिः-२/२१ मिताक्षरा द्रष्टव्या।

महाभारते[1] धर्मशास्त्रेणाननुमोदितस्यार्थशास्त्रस्य निन्दाऽपि कृता। परमस्य तात्पर्यञ्च उपर्युक्तमेव। 'बार्हस्पत्यार्थशास्त्रे' प्रयुक्तस्यार्थशब्दस्य व्यापकोऽर्थः। कामन्दकेन[2] कौटिल्यार्थशास्त्रस्यापरपर्यायो नीतिशास्त्रमिति बार्हस्पत्यार्थ-शास्त्रस्यैकादेशत्वेन स्वीकृतम्। महामहोपाध्यायकाणे[3] महोदयस्य कथनमनुसृत्य शास्त्रस्य सर्वोचितं नाम 'राजशास्त्रमेव'। अस्याभिप्रायस्तु अयमेव दण्डशब्दः स्वप्राधान्येन 'राजा' अथवा 'शासकः' इत्यर्थे व्यवह्रियते। एतत्सर्वन्तु दण्डाभिन्नस्य राज्ञो व्यापकशास्त्रमधिकृत्य दण्डनीतिनामान्तरं राजशास्त्रमिति नामान्तरं युक्तमेव। नयशब्दस्य[4] प्रयोगोऽपि नीतिविद्याया अर्थे काव्येषु सञ्जातः। वाल्मीकिरामायणे आदिकाव्ये वेदातिरिक्तराजनीतेः नीतेः वा स्वरूपं दृश्यते। तथैव प्राचेतसराजशास्त्रस्य सप्तमे काण्डे समग्रनीतिवचसां सङ्कलनं दृश्यते। महाभारतस्य उद्योगपर्वणः अष्टाध्यायेषु महात्मना विदुरेण प्रोक्तानि नीतिवचनानि 'विदुरनीतिः' इति पदेन कथितानि। एवमेव भीष्मपर्वणः पञ्चविंशाध्यायमारभ्य द्विचत्वारिंशाध्यायपर्यन्तं विश्वविश्रुता 'भगवद्गीता' ब्रह्मविद्या तथा योगशास्त्रेण सहैव नीतिशास्त्रमपि। किञ्च शान्तिपर्वणो राजधर्मोपदेशो नीतिशास्त्रमेव। एवं रामायणमहाभारतादीनां नीतिवचसामाधारेण 'पञ्चतन्त्र'-'हितोपदेश'-प्रभृतयो नीतिग्रन्था देदीप्यन्ते। अत्र नीतिग्रन्थेषु खग-मृगादिजीवजन्तूनां कथाऽऽख्यायिकामाध्यमेन नैतिकोपदेशाः, चाणक्यस्य चाणक्यनीतिः, कौटिल्यार्थशास्त्रं, कामन्दकीयनीतिसारः, कामदेव-क्षेमेन्द्रकृतः 'नीतिकल्पतरुः', सोमदेवसूरिप्रणीतं 'नीतिवाक्यामृतम्', भर्तृहरिकृतं 'नीतिशतकम्', चण्डेश्वरठाकुरस्य 'राजनीतिरत्नाकरः', विद्यापतिरचिता 'पुरुषपरीक्षा' चेत्यनेके नीतिनिर्देशकग्रन्थाः समुल्लसितास्सन्ति। एतदतिरिक्तं पूर्वतः 'शुक्रनीतिः' तत्तच्छास्त्रेषु नीतिपरकशतशो ग्रन्थाः विचाराश्च नीतिविषयमाश्रित्य प्रवर्तन्ते।

कामन्दकीयनीतिसाराधारेण नीतिमयूखे नयस्य मूलं विनयः, विनयः शास्त्रद्वारा निश्चितक्रमः, विनयेनैव इन्द्रियेषु जयः, लघुषः शास्त्राणां

---

१. अर्थ-शास्त्र-परो राजा धर्मार्थान्नाधिगच्छति।
अस्थाने चास्य तद्वित्तं सर्वमेव विनश्यति।। (म.भा.,शा.प. ७१/१४)

२. नीतिशास्त्रामृतं श्रीमानर्थशास्त्रमहोदधेः।
य उदध्रे नमस्तस्मै विष्णुगुप्ताय वेधसे।। (कामन्दकीयनीतिसारः-१/६)

३. हिस्ट्री ऑफ धर्मशास्त्र, भाग-३ पृ. ४।

४. रघुवंशमहाकाव्यम्, ४/१०, किरातार्जुनीयम्, १/७-९।

निश्चयः। नीतिशास्त्रस्यानुरागिण जितेन्द्रियस्य राज्ञो लक्ष्यमुज्ज्वलं भवति, तेन तस्य कीर्तिरतुला जायते[१]।

कालिकापुराणमनुसृत्य षड्गुणाश्रयी राजा शुभानि लभते तद्रहितश्च क्षयं याति[२]। एवञ्चोपायं निर्दिशति या सा नीतिरिति सर्वाचार्याणां मतमवतिष्ठते। स्वामिकरपात्रचरणाश्चाभ्युदयस्य धारको धर्मः, अभ्युदयस्य प्रापिका नीतिरिति अभ्युपगच्छन्ति। उभयोः समान एवार्थः। अत एव केचन नीतिरेव धर्म इत्यामनन्ति। केचन हि लौकिकाभ्युन्नतेः साधनं नीतिः, पारलौकिकाभ्युन्नतिसाधनं धर्म इति व्यपदिशन्ति। अतो धर्म-नीत्योरपृथक्सम्बन्धः। नीत्या एव शास्त्रं धर्मश्च प्रतिष्ठेते। एवं नीतेरभावे त्रयी-धर्मो नश्यति। तदुक्तं—'नश्यते त्रयी दण्डनीतौ हतायाम्।' एवं नीतिर्लक्ष्मीः धर्मश्च तत्पतिरित्यामनन्ति नीतिविदः। श्रीमद्भागवतमहापुराणे राजा परीक्षितो वक्ति यद् यद्राज्ये साधुप्रजा असाधुभिः पीड्यते नीति-धर्मरहितस्य राज्ञः सर्वं क्षयं याति। यथा—

यस्य राष्ट्रे प्रजाः सर्वास्त्रस्यन्ते साध्वसाधुभिः।
तस्य मत्तस्य नश्यन्ति कीर्तिरायुर्भगो गतिः[३]।।

(इति सुधीभिरूह्यम्)

इत्थं विश्वतोमुखाया राजनीतेः क्षेत्रं विस्तृतं व्यापकञ्च वर्तते। अत्र शास्त्रे विधिनिषेधमयं धर्मशास्त्रं, ज्ञानात्मको वेदान्तः, दर्शनानि, मन्वादिस्मृतयः, पुराणानि, रामायणं, महाभारतं, गीता, धर्मसूत्रादीनि, कोश-काव्यादीनि चाखिलं वाङ्मयं क्रोडीभवति। रघुवंशकाव्ये यदा सर्वविद्याजातमधीत्य ब्रह्मवर्चसयुतो ब्रह्मचारी कौत्सः समावर्तनसंस्कारेण संस्कृतो गृहाश्रमे प्रवेष्टुं गुरुणादिष्टस्तदा स गुरुदक्षिणार्थं सानुनयं प्रार्थयति। परमप्रियतेजस्विब्राह्मणशिष्यस्य धनराहित्यं विभाव्य वारं वारं दक्षिणामस्वीकारं

---

१. नयस्य विनयो मूलं विनयः शास्त्रनिश्चयः। विनयो हीन्द्रियजयस्तद्युक्तः शास्त्रनिश्चयः।।
जितेन्द्रियस्य नृपतेर्नीतिशास्त्रानुरागिणः। भवन्त्युज्ज्वलिताः लक्ष्म्याः कीर्तयश्च नभःस्पृशः।।
(नीतिमयूखः)

२. यानाश्रयासनद्वैधसन्धयो विग्रहस्तथा। अभ्यसेत् षड्गुणानेतान् तेषां स्थानं च शाश्वतम्।।
यः प्रमाणं न जानाति स्थाने वृद्धौ तथा क्षये। क्रोधं जनपदे च स राज्येऽध्यतिष्ठते।।
(कालिकापुराणे, राजनीतिः, पृ. ८५)

३. श्रीमद्भागवतमहापुराणे-१/१७/१०।

कुर्वन् शिष्याग्रहेण क्रुद्धो गुरुः चतुर्दशभारं सुवर्णयाचनं चकार। तन्निशम्य तदर्थं भारतवर्षस्य चक्रवर्तिनं परमोदारं राजानं रघुं कौत्स उपसर्पति। महाराजो रघुः (प्रतिद्वादशवर्षं तीर्थराजप्रयागे त्रिवेणीसङ्गमे) ब्राह्मणेभ्यो याचकेभ्यश्च विश्वजिद्यागे सर्वस्वदक्षिणां प्रयच्छति स्म। एकदा तत्र गते कौत्से रघुः सर्वं दत्वा निवृत्तः सन् मृण्मय-पत्रादिमय-पात्रेषु फलाहारादिकं कुर्वन्नास्ते। कौत्सेन निवेदिते च स्वागमनकारणं कृतनिश्चयो रघुः, कौत्सं रात्रिमेकं विश्रामाय निवेद्य सचिवैः सेना पतिभिश्च कौत्साय गुरोर्दक्षिणादानाय परामृशति स्म। इत्थं गुरुदक्षिणायै चतुर्दशभारं सुवर्णं धनाधिपात् कुबेरादाहर्तुं निश्चयो बभूव। रात्रेरवसाने सेनाप्रयाणाय सन्नद्धाऽभवत्। स्वगुप्तचरैः कुबेरेण धर्मात्मनो रघोः प्रतिज्ञापूरणाय सेनाप्रयाणकालात्पूर्वमेव प्रभूततरा स्वर्णवृष्टिश्चक्रवर्तिरघोः कोषागारे व्यधायि। राजा रघुश्च सर्वमेव सुवर्णराशिं कौत्साय दातुमुद्यतः। कौत्सश्च चतुर्दशभारमेव नेतुमैच्छत्।

उपात्तविद्यो गुरुदक्षिणार्थी कौत्सः प्रपेदे वरतन्तुशिष्यः[१]॥

(इति रघुवंशमहाकाव्यम्)

उपात्तविद्य इति प्रतीकमादाय टीकाकारो मल्लिनाथस्तत्र चतुर्दशविद्यानां परिचयं ददाति। तेन ज्ञायते यत् चत्वारो वेदाः, षड्वेदाङ्गानि, चत्वारश्चोपाङ्गानि च। तत्र चतुर्षूपाङ्गेषु क्रमशो 'धर्मशास्त्रं, सांख्ययोगः, न्यायवैशेषिकम्, मीमांसा च परिगणितानि। धर्मशास्त्रस्य नित्य-नैमित्तिककाम्य-प्रायश्चित्तेषु चतुर्व्यूहेषु सर्व-विधि-निषेधमयो व्यवहारः समायाति। अतः स्मृत्यादीनामुपर्युक्तानां सर्वासां विद्यानामत्रान्वयो भवति। सांख्ययोगस्तत्त्वात्मकं दर्शनम्। अत्र तत्त्वनिरूपक-सर्वाऽऽगमाः, दर्शनानि चान्तर्भवन्ति। पदार्थविज्ञानं न्यायवैशेषिक-शास्त्रेणोपपद्यते। मीमांसा द्विविधा—पूर्वमीमांसा उत्तरमीमांसा च। पूर्वमीमांसा कर्मकाण्डस्वरूपा। उत्तरमीमांसायां ज्ञानकाण्डस्वरूपायामद्वैतब्रह्म-चिन्तनमुपनिषदात्मकं प्रवर्तते। एवमेतां विद्यामधीत्य कौत्सो रघोः सकाशमागतः। एवं चतुर्दशसु विद्यासु सर्वत्र नीतेः प्रतिपादनं दृश्यते। तस्मात् श्रुति-स्मृति-पुराण-दर्शन-कोश-काव्य-रामायण-महाभारतादिषु च नीतेर्महद्-वितानमिति सुधयो जानन्त्येव।

एवं राजशास्त्रं विस्तृतं सत् सर्वशास्त्रोपजीवकमुपजीव्यञ्च। यथा दधि निर्मथ्य ततो नवनीतं नीयते तथैव श्रुतिस्मृतिपुराणादिनिर्मथिता नवनीतसमा

---

१. र.म.का.-५/२।

नीतिर्निर्गता। नीतिश्च बुद्धेः सात्त्विकगुणस्य नवनीतम्। तन्नीतिं पालयन् राजा राज्यप्रतिनिधयश्च शुभं लभन्ते।

मनुस्मृतावुक्तम्—'वेदोऽखिलो धर्ममूलम्'[1] इति। तस्माल्लोक-परलोकलक्षणपरा नीतिर्भवति धर्मसापेक्षा, न तु धर्मनिरपेक्षा। वर्तमानकाले भारतीयशासनव्यवस्थायां धर्मनिरपेक्षस्याचरणं दरीदृश्यते। तेन फलतः सर्वत्रा-धर्मः प्रवर्तते। तद्वशाच्चाशान्तिरुपद्रवकलहदुर्भावनादयश्च प्रवर्तन्ते। येन लोकव्यवस्था दुःखदा अशान्तिप्रदा च जायते। सर्वत्राव्यवस्थायां सत्यां लोकव्यवस्था अव्यवस्थिता सती भविष्यमन्धकारमयं जायते, लोकाश्च चेखिद्यमना जायन्ते, गर्हिता भवति शासनव्यवस्था शासनतन्त्रञ्च। सम्प्रति तदेव दृश्यतेऽनुभूयते च।

चिन्तकान् मनीषिणश्चाशुभेन निर्वर्त्य शुभाचाराय प्रवर्तनीया शासनव्यवस्था शासननीतिश्च। एतदर्थं रामस्याचरणं रामस्य राजनीतिव्यवस्थाञ्चानुकृत्य तस्य पालनं निश्चेतव्यम्।

रामायणे रामस्य नीतिर्धर्ममूला। तदाचरणेन सर्वत्र लोकेषु सुखशान्तेर्वातावरणं प्रवृत्तमासीत्। उक्तञ्चापि रामायणे—

रामो विग्रहवान् धर्मः साधुः सत्यपराक्रमः।
राजा सर्वस्य लोकस्य देवानामिव वासवः[2]।। इति।

रामेण रघुवंशराजभिश्च धर्मवृत्तिमाश्रित्य सुदीर्घं यावत् शासितम्। तद्राज्ये न किमपि भयम्, न च दुःखं दैवकृतमपि आसीत्। अकाले कोऽपि न म्रियते स्म। पितरः पुत्राणां प्रेतकर्माकृतत्वेन नासन्। न कापि स्त्री विधवा भवति स्म। रामराज्ये व्याल-चौर-भीतिभयास्तिरोहिता अभूवन्। सर्वाः प्रजाः स्व-स्वकर्मधर्मनिरताः सुखिनश्चासन्। तदुक्तं तत्र—

आसन् प्रजा धर्मपरा रामे शासति नानृताः।
सर्वे लक्षणसम्पन्नाः सर्वे धर्मपरायणाः[3]।। इति।

निष्कर्षरूपेणाभिधेयं भवति यद् नीतिविद्याया एव नामान्तराणि—राजनीतिः, राजधर्मः, राजविद्या, दण्डनीतिः (दण्डेन नीतिः आहोस्विद् दण्डस्य

---

१. मनुस्मृतिवचनम्।
२. वा.रा. ३/३७/१३।
३. वाल्मीकिरामायणम्-६/२८/१०५।

राज्ञो नीतिः) अर्थविद्या, नय इति। एतदाधारेणैव अस्या विद्यायाः तत् प्रतिपादकग्रन्थश्च नीतिशास्त्रम्, राजनीतिशास्त्रं, राजधर्मशास्त्रं (राजधर्मानुशासनम्), राजशास्त्रं, दण्डनीतिः, दण्डनीतिशास्त्रं, नयः, अर्थशास्त्रञ्चेति नामभिः प्रसिद्धिमाप्नुवन्ति। 'वेदे सर्वं प्रतिष्ठितम्' इति नियमेन व्यापकायां राजनीतौ प्राणिनामुत्थानमेव राजधर्म इत्युच्यते। एतेनोपनिषन्मूलकानि अखिलानि श्रुतिवाक्यान्यपि भवन्ति खलु सङ्गतानि— 'वेदोऽखिलो धर्ममूलम्', 'तमसो मा ज्योतिर्गमय', 'जीवेम शरदः शतम्', 'यो वै भूमा तत्सुखम्', 'नाल्पे सुखमस्ति यदल्पं तन्मर्त्यम्', 'मातृदेवो भव', 'पितृदेवो भव', 'आचार्यदेवो भव', 'अतिथिदेवो भव' इत्यादि-शिष्टोक्तानि।

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत्॥ इति।



# अध्यासो नाम ख्यातिः

**डॉ. दिव्यचेतनब्रह्मचारी**
संविदाऽध्यापकः, व्याकरणविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणस्याम्



अध्यासस्तावद् अतस्मिन् तद्बुद्धिः। यथा शुक्तौ रजतं यदा भासते तदा अतस्मिन् रजतत्वाभाववति शुक्तिविशेषे रजतत्वं प्रतीयते। सा च प्रतीतिरध्यासः कथ्यते। अयञ्चाध्यासो द्विविधः—सोपाधिको निरुपाधिकश्च। आद्यो यथा लोहितस्फटिके दर्पणे मुखमिति। निरुपाधिकस्तु—इदं रजतं सर्पोऽयमित्यादिरूपः।

सोपाधिकस्तु भ्रमो नाधिष्ठानतत्त्वसाक्षात्कारेण निवर्तते। एवञ्च अधिष्ठानाधिकरणयोश्च भेदः सङ्केतितो भवति। यद् आरोप्यविषमसत्ताकमधिष्ठानम्, उक्तञ्च 'भ्रमोपादानाज्ञानविषयत्वमधिष्ठानम्'। अधिकरणन्तु समसत्ताकमपि भवति, यथा 'भूतले घटः' इति घटभूतलयोः समसत्ताकत्वम्।

पुनश्चायमध्यासस्त्रिधा भिद्यते—१. तादात्म्याध्यासः, २. संसर्गाध्यासः, ३. स्वरूपाध्यासश्च।

१. **तादात्म्याध्यासः**—यत्राध्यासाधिष्ठानयोर्न विविक्तत्वेन प्रतीतिर्भवति, सोऽध्यासतादात्म्याध्यास उच्यते। यथा 'मनुष्योऽयं देहोऽयम्' इत्यत्र मनुष्योऽध्यस्तः, अहमत्राधिष्ठानमुभयोः समानविभक्तिप्रयोगात् सामानाधिकरण्यरूपस्तादात्म्याध्यासो वर्तते।

२. **संसर्गाध्यासः**—यत्राध्यस्तवस्तुनः प्रथमान्तत्वेन प्रयोगः क्रियते, तत्र सोऽध्यासः संसर्गाध्यास उच्यते। यथा—'ममेदं शरीरम्'। अत्र ममेति अधिष्ठानपदार्थत्वेन वर्तते। इदं शरीरमित्यध्यस्तत्वेन वर्तते। तत्र तयोर्यः संसर्गः स्वस्वामिभावस्तस्य तत्राध्यासः।

ननु देहात्मनोस्तादात्म्यमेव संसर्ग इति तयोः को विशेषः? इति चेत्,

उच्यते—सत्तैक्ये सति मिथो भेदस्तादात्म्यम्। तत्र मनुष्योऽहमित्यैक्यांशप्रतीतिः, ममेदमिति भेदांशरूपसंसर्गभानमिति तयोर्भेदः।

एवमात्मानात्मनोरन्योऽन्यस्मिन् अन्योन्यतादात्म्याध्यासः। तथापि आत्मनः संसृष्टरूपेणैवाध्यासः, न स्वरूपेण तेन आत्मनः सत्यत्वे अनात्मनां तु स्वरूपेणाऽध्यास इति तेषामनृतत्वम्। एतद् अध्यासस्वरूपमाह आचार्यः 'स्मृतिरूपः परत्र पूर्वदृष्टावभासः'।

अयमेवाध्यासः शास्त्रेषु ख्यातिपदेनोच्यते। सा च ख्यातिर्विभिन्नदर्शनेषु विभिन्नप्रकारैरुपवर्णिता। तत्र न्यायवैशेषिकदर्शनयोः—अन्यथाख्यातिः। मीमांसादर्शने—अख्यातिः। सांख्यदर्शने—सदसत्ख्यातिः, रामानुजदर्शने—सत्ख्यातिः, माध्वदर्शने—अभिनवान्यथाख्यातिः, अद्वैतदर्शने—अनिर्वचनीयाख्यातिः, शुद्धाद्वैतदर्शने चाविद्वद्दशायामन्यथाख्यातिः, विद्वद्दशायाञ्चाख्यातिः। तत्रान्यथाख्यातिवादिनामिदं हार्दं चाकचिक्यादिसहोद्बुद्धसंस्कारसहकृतेन दोषोपहतेन चक्षुषा सन्निकृष्टं शुक्त्यादिकमेव रजताद्यात्मना गृह्यते।

अयं भावः—यदा हि प्रकृष्टे सूर्यालोके शुक्तिशकलं चक्षुषा सन्निकृष्टं चकचकायमानं दृश्यते, तदा रजतवदिदं चकचकायते इत्येवंविधेन चाकचिक्यलक्षणसादृश्यदर्शनेन पूर्वानुभूतरजतविषयकः प्रथमतोऽनुवर्तमानो रजतविषयकः संस्कारः समुद्बुध्यते। सादृश्यदर्शनात्मको दोषः पुरोवर्तिनि शुक्तिशकले शुक्तित्वभानं प्रतिरुणद्धि। इदन्तत्वेन केवलेन प्रतिभासमाने तत्र तस्मिन् रजतत्वबाधज्ञानाभावसहकृतेन रजतत्वस्मरणात्मकेन ज्ञानलक्षणसन्निकर्षेण सन्निकृष्टं रजतत्वं प्रत्यक्षं प्रकाशते।

न च स्मृतेस्तत्त्वावगाहिनियमेन तद् रजतमित्येव भूतस्यैव स्मरणस्य युक्ततयेदं तद् रजतमित्याकारिकैव धीः स्यात्, न त्विदं रजतमित्याकारिकेति वक्तुं शक्यम्, तत्रांशे संस्कारानुद्बोधलक्षणप्रमोषस्य सम्भवेन तत्राविनिर्मुक्तस्य रजतस्य स्मरणे स्फुरणे च बाधकाभावात्।

मीमांसादर्शने—गुरुसंज्ञया प्रसिद्धाः प्राभाकरास्तादृशस्थलेऽख्यातिमभ्युपयन्ति। अख्यातिर्नाम अल्पाख्यातिः, तत्र नञः अल्पवाचित्वात्, अल्पत्वञ्च विशेष्यविशेषणयोः संसर्गाभानम्। तथा च तन्नये पुरोवर्तिनः शुक्त्यादेः प्रत्यक्षं रजतत्वादेश्च स्मरणमिति ज्ञानद्वयं जायते। तत्र न किमपि

ज्ञानं शुक्त्यादौ रजतत्वादेः सम्बन्धं विषयीकरोति। पूर्वोक्तज्ञानद्वये तदीयविषयद्वये च भेदाज्ञानमेव तयोर्ज्ञानयोरैक्यस्य शुक्त्यादे राजताद्यात्मकतायाश्च व्यपदेशस्य व्यवहारस्य च मूलम्। इत्येवं तन्त्रयेऽन्यथाख्यातिर्न भवति, किन्तु अन्यथा व्यवहारो भवति। तत्प्रवृत्तिश्चान्यथाख्यातिस्थानीयाया अख्यातेः सम्पद्यत इति सर्वमेव ज्ञानं तन्मते यथार्थमेव परमिदमपि मतमालोच्यमानं स्थिरतां न लभते। शुक्त्यादौ रजतत्वादिकं संसर्गाग्रहे तत्र रजतार्थिनः सर्वजनानुभवसिद्धायाः प्रवृत्तेरनुपपत्तिप्रसङ्गात्।

**अयं भावः**—रजतादिस्थले रजताद्यर्थिप्रवृत्तिं प्रति रजतत्वादि-संसर्गज्ञानस्य कारणता क्लृप्ता। अत्र भ्रमस्थले शुक्त्यादौ रजतत्वादिसंसर्गज्ञानं यदि न स्यात्, तर्हि तत्र रजताद्यर्थिप्रवृत्तिर्नोदियात्। यदि च तत्स्थलानुरोधेन रजतत्वाद्यसंसर्गाग्रहरूपाया अख्यातेरेव विशेष्यविशेषणगोचरज्ञानद्वय-सहकृतायाः प्रवृत्तिहेतुत्वं मन्येत तदा सद्रजतादिस्थलेऽपि तत एव प्रवृत्त्यादेरुपपत्त्या विशिष्टज्ञानस्योच्छेदः स्यात्। न च इष्टापत्तिः, रजताद्यर्थिप्रवृत्तिं प्रति रजतत्वादिसंसर्गज्ञानत्वेन कारणत्वापेक्षया रजतत्वादिसंसर्गाभावज्ञाना-भावत्वेन कारणतायां गौरवात्।

सांख्यास्तु तादृशस्थले सदसत्ख्यातिं मन्यन्ते। अर्थात् तत्र जायमाना ख्यातिः सन्तमसन्तं चार्थं विषयीकरोति, यथा शुक्तिरजतस्थले जायमाना 'इदं रजतम्' इत्याकारिका ख्यातिः धर्मिणि विद्यमानमिदन्त्वमविद्यमानरजतत्वञ्च गृह्णातीति। इयमप्यन्यथाख्यातिसमकक्षतया तत्पक्षीयदोषैरेव, आस्कन्दिततया च परित्याज्या। रामानुजदर्शनेऽपि, प्राभाकरदर्शनमिव सर्वज्ञानं यथार्थमेव, किन्तु न तत्र तद्दर्शनमिव भ्रमस्थले विशेष्यविशेषणयोः संसर्गाख्यातिः। किन्तु तयोः संसर्गख्यातिरेव। एवं कथमिति चेत्? त्रिवृत्करणश्रुत्या सर्वत्र सर्वस्य सन्निहितत्वेन सर्वस्य सत्त्वेन शुक्तौ रजतांशस्यापि सत्तया दोषमहिम्ना शुक्तित्वभानप्रतिबन्धे लौकिकसन्निकर्षेणैव चक्षुषा तत्र विद्यमानस्य रजतस्य प्रत्यक्षसम्भवः। न च शुक्त्यंशरजतांशयोरुभयोरेकस्मिन् वस्तुनि विद्यमानत्वं कथं लोके कस्यचित् शुक्त्यात्मनैव कस्यचिच्च रजतात्मनैवोपगम इति वाच्यम्, यत्र यस्य भूयस्त्वं तत्र तदात्मकतायाः सुग्रहतया ग्रहणस्योपगमाद् इदमपि मतमविचारितरमणीयम्। तथा हि—यद्येकस्मिन् वस्तुनि शुक्त्यंशो रजतांशश्चोभौ वर्तेते तर्हि सदैव सहैव चोभयोर्ग्रहणं प्रसज्येत।

अधिकांशोऽल्पांशग्रहणस्य विरोधि इति यदि मन्येत तदा परमतेन भ्रमप्रयोजकसन्निधानेऽपि तद्ग्रहणं न स्यात्। दोषे हि यद्यधिकांशस्याभिभवः तदाल्पांशस्य ग्रहणस्य का नाम प्रत्याशा? तदिन्द्रियं दोषस्यासत्त्वे यमंशं न गृह्णाति तं दोषकाले ग्रहीष्यतीत्यभ्युपगमस्तु कदाग्रहविजृम्भणमात्रम्।

माध्वाः—भ्रमस्थलेऽप्यभिनवामन्यथाख्यातिं मन्यन्ते। न्याय-वैशेषिकसम्मान्यान्यथाख्यातित्वापेक्षया तदीयायामन्यथाख्यातौ इयमेवाभिनवता यत् तत्र न हि न्यायमत इवान्यत्र सतो रजतादेः शुक्तित्वादिस्थले भानम्। किन्त्वत्यन्तमसतो रजतस्य तत्र भानम्। परमिदमपि मतं न रमणीयम्, अत्यन्तमसतः प्रतीतिगोचरताया अनुपपत्तेः। कथञ्चिदुपपत्तौ च सर्वत्र प्रतीयमानस्यासत्त्वाभ्युपगमसम्भवे शून्यवादापत्तेः।

शून्यवादिनः—शून्यवादिनोऽसत्ख्यातिमङ्गीकुर्वन्ति। तेषां मते अधिष्ठानमसत्प्रमाणप्रमेयप्रमात्रादिकं सर्वमसद् असदधिष्ठानभ्रमस्यैवानुत्पत्तेः, असत्ख्यातौ प्रमाणाभावाच्च। न चासद्भाने असदेव रजतमभादिति प्रत्यक्षं मानम्। नेदं रजतमित्यनन्तरं शुक्तिबाधानुपपत्तेः तदादित्सया प्रवृत्त्यनुपपत्तेश्च।

योगाचारमतानुयायिनः—भ्रमविषये आत्मख्यातिं स्वीकुर्वन्ति। क्षणिकविज्ञानवादिनस्ते हि विज्ञानमेवात्मा बाह्यपदार्थो नास्ति। विज्ञानधर्मत्वादान्तरत्वम् आन्तररजतादेर्विज्ञानस्वरूपात्माधिष्ठानम्। तथा चेदं रजतमिति प्रतीतौ चान्तरं रजतमेव बाह्यतया प्रतीयते, नेदं रजतमिति प्रतीतौ रजतादेर्न बाधः, आन्तररजतस्य आवश्यकत्वात्; किन्तु इदन्तारूपबाह्यताया बाध आन्तररजतं सत्यमेव। तस्य बाह्यदेशे प्रतीतिर्भ्रमः। अत्र रजतज्ञानं रजतविषयकत्वांशे न भ्रमः किन्तु रजतांशे बाह्यदेशस्थत्वस्य भ्रम इति। तत्तु तुच्छम्, अत्यन्तालीकाया अपि बाह्यतायाः प्रतिभासवद् अत्यन्तासतोऽपि रजतादेः प्रतिभासोपपत्तेः। न च नेदं रजतमिति, इदन्तामात्रं बाध्यते कल्पनालाघवाद् इति वाच्यम्, इदं रजतमिति प्रतिपन्नविशिष्टस्य नेदं रजतमिति बाधस्य चानुभवसिद्धतया कल्पनीयत्वाभावात्। किञ्च आरोपितं बुद्धौ चेद् गुञ्जापुञ्जादौ दहनसमीपे देहदाहप्रसङ्ग इति चेत्, तर्हि न तद्बहिः सद् इत्यनिर्वचनीयं स्यात्। गत्यन्तराभावाद् इत्येव वक्तव्यं स्यात्।

शुद्धाद्वैतमते—मनस्संयुक्तस्य चक्षुषः शुक्त्यादिभिः सह संयोगात् प्राक्सामान्यज्ञानं जायते। तत उद्भूतसत्त्वगुणया बुद्ध्या प्रमात्मकं ज्ञानम्।

मायाख्यया भागवत्या शक्त्योद्भावितततमोगुणया च बुद्ध्या संशयादिरूपमनेकविधं ज्ञानमुत्पद्यते। तत्र भ्रमस्थले मायामोहिता समुदिततमोगुणा बुद्धिर्बलवत्तरस्य रजतसंस्कारस्य तदुद्बोधकस्य चाकचिक्याद्यात्मकसादृश्यदर्शनस्य च सहकारेण रजतं प्रसूयते। तदेव बुद्धिप्रसूतं रजतं भ्रमात्मकज्ञानेनान्यख्यातिशब्दव्यपदेश्येन विषयीक्रियते। तत्रेन्द्रियार्थसंयोगेन जायमाने सामान्यज्ञानेऽवभासमानं रजतं वास्तवम्। तदुत्तरं जायमानं मायामूलके विशेषज्ञाने भासमानं रजतञ्च कल्पितम्।

रजतन्तु तदनन्तरं बुद्ध्यर्थयोर्मध्ये यद् भाति तन्मृषा, तदित्थं भ्रमस्थलीयं विशेषज्ञानं वास्तवादिन्द्रियज्ञानग्रहणार्हात्, रजतादेरन्यस्य बुद्धिकल्पितस्य रजतादेः ख्यापकत्वादन्यख्यातिर्बुद्धिवृत्तिरूपाद्विपर्यास-शब्दवाच्या। तादृश्या ख्यात्या च विषयीक्रियमाणं सर्वं वस्तु मायिकं मिथ्या च। इन्द्रियैर्गृह्यमाणो बुद्ध्या अप्रसूतो मायाख्यशक्तिसहकृतस्य परमात्मनः परिणामभूतः समग्रो दृश्यमानो जडात्मकः पदार्थराशिर्वास्तवो भगवतः सदंशश्च।

अत एव जडस्य प्रकाशः सेन्द्रियमनोवृत्त्यादिसापेक्षो भवति। रजो-व्यापारेण तमोऽपनयने सति सत्त्वमहिम्ना वस्तुप्रकाशः। अतः शुद्धाद्वैतवेदान्ते संसारस्य मायिकत्वेऽपि प्रपञ्चस्य ब्रह्मात्मतैव स्वरूपम्। इत्थञ्च ये पूर्णयोगिनो निष्कल्मषा अधिगतपदार्थसार्थयथार्था विद्वांसस्तेषामख्यातिरेव, अर्थाद् अन्यख्यात्यात्मकविभ्रमाभाव एव सर्वदावद्योतते। ये च मायामोहितमतयोऽल्पविदो मानवास्तेषां बुद्धेस्तमसो गुणस्य मायया प्राबल्ये सति तदानीं बुद्धेः सकाशाल्लब्धजन्मनो वास्तवरजतादितोऽन्यस्य नवीनस्यैव ज्ञानात्मिकान्यथाख्यातिरेवेति।

अद्वैतवेदान्तिनः—तादृशस्थलेऽनिर्वचनीयस्य रजतादेर्ज्ञानमभ्युपगच्छन्ति। सिद्धान्ते 'इदं रजतम्' इत्यादिप्रत्ययः इत्थमुपपद्यते—अवधारितचापले न मनसावधारस्य चक्षुःसन्निकृष्टे पुरोवर्तिनि चक्षुर्द्वारातिलघीयसतैजसमन्तः-करणमपि द्रुतं गच्छति तस्मिन् च विषयदेशगतेऽन्तःकरणे इदमाकारा चाकचिक्यादिरूपा च काचिद्दोषदूषितलोचनस्य पुरुषस्य वृत्तिरुद्भवति, ततश्चेदमवच्छिन्नचैतन्यस्येदमाकारवृत्त्यवच्छिन्नस्य चैक्यादिदमिति ज्ञानं भवति प्रत्यक्षम्।

सिद्धान्ते तद्वृत्त्यवच्छिन्नचैतन्यस्य यद्विषयावच्छिन्नचैतन्यस्य ऐक्यञ्जायते तयोस्तद्विषयांशे तज्ज्ञानस्य प्रत्यक्षत्वमविभाजकयोरपि वृत्तिविषययो-रुपाध्योरेकदेशस्थत्वेनोपधेयस्य चैतन्यस्य भेदाजनकत्वाद् यथा गृहावच्छिन्नस्य गृहान्तर्वर्तिघटावच्छिन्नस्य चाकाशस्य न भेदः, ततश्चेदमवच्छिन्नचैतन्यस्य सम्बन्धिनो शुक्तित्वप्रकारिकाऽविद्यातूलविद्यापदाभिधेया मूलाविद्यायाः शक्तिरूपा वा उद्बुद्धरजतसंस्कारागन्तुकाचादिदोषविशेषसहकृताया रजताकारेण रजतगोचरवृत्त्याकारेण च परिणमते। तच्चाविद्यापरिणामरूपं रजतमिदमवच्छिन्न-चैतन्येऽविद्याधिष्ठाने तदानीमवतिष्ठते। सर्वमेव हि कार्यं स्वोपादानाविद्याधिष्ठानाधिष्ठितं भवति। चैतन्यनिष्ठस्यापि तद् रजतस्य सत्त्वाद् 'इदं रजतम्' इति तादात्म्यप्रत्यय उपपद्यते। यथा न्यायमते आत्मनिष्ठस्य सुखादेः शरीरनिष्ठत्वेनोपलम्भः शरीरस्य सुखाद्यधिकरणतावच्छेदकत्वात् तद्वत्। तत्र चक्षुर्द्वारा पुरोवर्तिन्यन्तःकरणस्यापि गमनादन्तःकरणोपहित-मनोवृत्तिचैतन्यरूपः साक्ष्यपि तत्रास्तीति विषयावच्छिन्नचैतन्यसाक्षि-चैतन्ययोरेतयोश्चैकदेशस्थत्वेन ऐक्याद् विषयचैतन्येऽध्यस्तं रजतं साक्षिण्यध्यस्तं तदेव तस्य साक्षिस्वरूपं प्रत्यक्षमुच्यते। रजतादेः पूर्वमविद्यमानस्य चक्षुरादिनाऽसन्निकर्षात् चाक्षुषादिवत्स्वरूपस्यासम्भवाद् रजततादात्म्यापन्ने पुरोवर्तिनि चक्षुःसन्निकर्षादेव चक्षुषा रजतं पश्यामीति भवति व्यवहारः। एवमेवाऽविद्यान्तःकरणतद्धर्मसुखदुःखार्थिनां केवलं साक्षिप्रत्यक्षमेव भवति, अविद्यावच्छिन्नचैतन्यस्य साक्षिणश्चैकदेशस्थत्वेनैक्यात् तत्र वृत्त्यनपेक्षणाद् आवरणाभिभवार्थाचिदुपपरागार्था वा वृत्तिरपेक्ष्यतेऽविद्यादीनां चानावृत्तत्वान्न वृत्त्यपेक्षेति।

अथ रजतावयवादिरूपकारणविरहेण पुरोवर्तिनि कथं रजतोत्पत्तिरिति चेन्न, प्रातीतिकपदार्थोत्पत्तौ लोकसिद्धसामग्र्या अनपेक्षणत्वाद् अघटितघटनापटीयसी मायैव अविद्यैव हि साक्षात् तदात्मना परिणमते, न तु कार्यपरया व्यवहारिकभौतिकोत्पत्तावेव कार्यद्वारा तत् परिणामोपगमाद् व्यावहारिकस्यापि पदार्थस्याविद्यमानतया सृष्टिदृष्टिपक्षेऽपि कस्यचिद् साक्षादेव मायापरिणामत्वं कस्यचिच्च कार्यद्वारेति विशेषः समाश्रीयत एव। भवति हि अल्पीयसानेहसालघीयस्या नभोमण्डलव्यापिन्या मेघमालायाः सौदामिन्याः आखण्डलधनुःखण्डस्य रजन्यां जगद्व्यापिनः सावयवद्रव्यस्य तमसः प्रभाते प्रभायाः, अन्येषाञ्चैवं जातीयकानां समुदयः, न चामी पदार्थास्तत्तदवयवादि-

संश्लेषणविश्लेषणाल्पीयसा समयेनारम्भवादमनुसरन्तोऽर्हन्ति आविर्भावयितुं तस्मादघटितघटनापटीयस्या याया विविधानेकशक्तिशालिन्याः साक्षात् परिणामा एवैते पदार्था इति मन्तव्यम्। सा च चैतन्यमेव विषयीकृततयाश्रयते यथा रज्ज्ववच्छिन्नचैतन्याज्ञानं रज्ज्ववच्छिन्नचैतन्यं विषयीकुर्वद् रज्ज्ववच्छिन्न-चैतन्यमेवाश्रीयते। अहङ्काराध्यासात् प्रागेव सिद्धाया मायाया न मायानन्तरं भाति। उक्तञ्च सङ्क्षेपशारीरके—

आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः।।

माया हि ब्रह्मचैतन्यान्न वस्तुतो भेदवती, ब्रह्मप्रमातिरिक्तस्य सर्वस्य मिथ्यात्वप्रतिपादनात्। नेह नानास्ति किञ्चन इत्यादिश्रुतिविरोधेन वस्तुतो मायाया ब्रह्मचैतन्याद् भेदासम्भवात्। नाप्यभिन्ना चैतन्यद्वयोरैक्यायोगाद् नापि चैतन्यात् भिन्ना-भिन्ना एकत्र भिन्नत्वयोर्विरोधेनासम्भवात् एवं तावत् माया न सती अद्वैतश्रुतिविरोधाद् एकमेवाद्वितीयं ब्रह्म इत्यादितः, नाप्यसती भूतप्रकृतित्वानुपपत्तेः। यथा प्रत्यक्षमेव शशशृङ्गमसत् नहि धनुरादिकारणं भवति। तस्मात् माया नासती नापि सदसती सत्त्वासत्त्वयोरेकत्र विरोधात्। एवं मया नावयववती। एवं सति मायायाः सादित्वप्रसङ्गेन मायाप्रतिबिम्ब-भूतेश्वरस्यापि सादित्वप्रसङ्गात्। मायायाः सादित्वं मायाप्रकृतित्वेन मायान्तरापेक्षायामनवस्थाप्रसङ्गाच्च। तस्मात् माया अनादिः। उक्तञ्च—

जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा।
अविद्या तच्चितोर्योगः षडस्माकमनादयः।।

एवञ्चापि न निरवयवा, तथा सति भूतप्रकृतित्वाभावप्रसङ्गात्। सावयवपदार्थानां लोके प्रकृतित्वदर्शनात्। नाप्युभयरूपा, सावयवत्व-निरवयवत्वयोरेकत्र विरोधात्। तस्मात् सर्वप्रकारेण मायाया निर्वक्तुमशक्यतया माया अनिर्वचनीया स्वीकरणीया। उक्तञ्च—

सन्नासन्नाप्युभयात्मिका नो भिन्नाप्यभिन्नाप्युभयात्मिका नो।
साङ्गाप्यनङ्गाप्युभयात्मिका नो यायाद्भूताऽनिर्वचनीयरूपा।।

सा माया शक्तिद्वयविशिष्टा। तत्र शक्तिद्वयमावरणशक्तिर्विपेक्षशक्तिश्च। यथा शुक्त्याद्यवच्छिन्नचैतन्याज्ञानमावरणशक्त्या शुक्त्याद्यवच्छिन्नचैतन्यमावृत्य

विक्षेपशक्त्या रजतादिकमुद्भावयति। तथा मायाप्यावरणशक्त्या संस्फुरच्छुद्रचैतन्यमावृत्य विपेक्षशक्त्या जीवेश्वरादिभेदं कल्पयति। उक्तञ्च सङ्क्षेपशारीरके—

आच्छाद्य विक्षपयति संस्फुरदात्मरूपं जीवेश्वरत्वगताकृतिभिर्मृषैव।
अज्ञानमावरणविभ्रमशक्तियोगादात्मत्वमात्रविषयाश्रयता बलेन।।

तथा च आवरणशक्तिमाध्यमेन मायापरिच्छिन्नाऽप्यपरिच्छिन्न-मसंसारिणमात्मानं छादयति। तथा चोक्तं वेदान्तसारे—'तथाज्ञानं परिच्छिन्नमप्यात्मानमपरिच्छिन्नमसंसारिणमवलोकयितृबुद्धिपिधायकतयाच्छादयतीव तादृशं सामर्थ्यम्।' तदुक्तं च—

घनच्छन्नदृष्टिर्घनच्छन्नमर्कं यथा मन्यते निष्प्रभं चातिमूढः।
तथा बद्धवद्भाति यो मूढदृष्टेः स नित्योपलब्धिस्वरूपोऽहमात्मा।।

विक्षेपशक्तिस्तु आत्मनि आकाशादिप्रपञ्चं भावयति। उक्तञ्च—

विक्षेपशक्तिर्लिङ्गादिब्रह्माण्डान्तं जगत् सृजेत्।। इति।

इयञ्च शक्तिद्वयविशिष्टा माया अनादि, एवञ्च सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानाविरोधि भावरूपं यत्किञ्चिद् इत्यज्ञानलक्षणं कृतम्। तत्त्वप्रतिपादिकायाम्—

अनादिभावरूपं यद् विज्ञानेन विलीयते।
तदज्ञानमिति प्राज्ञा लक्षणं सम्प्रचक्षते।।

अद्वैतसिद्धौ तु कथं केयमविद्या? उपक्रम्य अनादित्वे सति भावत्वे सति ज्ञाननिवर्त्यत्वं भ्रमोपादानत्वं वा इत्येवप्रकारेणाविद्याया लक्षणं कृतम्, प्रमाणं श्रुतिस्मृत्यादयः। तथा हि—'मायां तु प्रकृतिं विद्यात्, योगी मायाममेयाय, इन्द्रो मायाभिः पुरुरूप ईयते' इति श्रुतयः स्मृतिश्च—मम माया दुरत्यया, अज्ञानेनावृतं ज्ञानमित्यादिकम्।

प्रत्यक्षप्रमाणमपि अहमज्ञो मामन्यं च न जानामि इति। त्वदुक्तमर्थं न जानामीति विशेषतः प्रत्यक्षमेतावन्तं कालं सुखमहमस्वाप्सं न किञ्चिदवेदिषम् इति परामर्शसिद्धं सौषुप्तप्रत्यक्षं च प्रमाणम्। अनुमानं च विगीतं

देवदत्तनिष्ठप्रमाणज्ञानं देवदत्तनिष्ठप्रभाभावातिरिक्तानादेर्निवर्तकं प्रमाणत्वाद् यज्ञदत्तादिगतप्रमाणज्ञानवदित्यनुमानं च। त्वदुक्तमर्थं न जानामि—इति व्यवहारान्यथानुपपत्तिः। जीवस्यानवच्छिन्नब्रह्मानन्दप्रकाशान्यथानुपपत्तिश्च भाव-रूपाविद्यासत्त्वेऽर्थापत्तिप्रमाणवादिनः प्रति श्रुतिप्रमाणं तूक्तमेव मायां तु प्रकृतिं विद्याद् इत्यादिना। एवं लक्षणप्रमाणाभ्यां माया सिद्ध्यति। तया माययैव ब्रह्मणि प्रपञ्चाध्यासः। यथा सर्पभूतायां रज्जौ रज्ज्ववच्छिन्नचैतन्याविद्यया सर्पाध्यासः। अध्यासो नाम अतस्मिन् तद्बुद्धिः। अध्यासो भ्रमः, आरोपः, अध्यारोपः, अवभास इति चानर्थान्तरम्। तथा च निबन्धे प्रारम्भे दर्शितम्, पुनरपि भेदेन प्रदर्श्यते।

अयञ्चाध्यासो द्विविधः—स्वरूपाध्यासः संसर्गाध्यासश्च। यत्रा-निवर्चनीयपदार्थस्योत्पत्तिस्तत्र स्वरूपाध्यासः, यथा शुक्तौ रजतस्य स्वरूपाध्यासः। तथा चात्मनि अहङ्कारादीनां स्वरूपाध्यासः। यत्र तु पदार्थः सिद्ध एव, किन्तु द्वयोः संसर्गः कल्पितः सः संसर्गाध्यासः। तथा चानात्मनि नात्माध्यासश्चैतन्यस्य पारमार्थिकत्वात् किन्त्वनात्मन्यात्मनस्तादात्म्याध्यासः। स च संसर्गाध्यासः। एतयोः स्वरूपसंसर्गाध्यासयोरन्तः षड्विधस्याध्या-सस्यान्तर्भावो वर्तते।

षड्विधोऽध्यासश्च—१. धर्माध्यासः, २. धर्मसहितधर्मिणोऽध्यासः, ३.सम्बन्धाध्यासः, ४. सम्बन्धसहितसम्बन्धिनोऽध्यासः, ५.अन्यतराध्यासः, ६. अन्योन्याध्यासः।

१. **धर्माध्यासः**—यथा देहगतस्य गौरत्वस्य, इन्द्रियगतस्य बधिरत्वस्य चात्मनि अध्यासो धर्माध्यासः—गौरोऽहम्, बधिरोहमित्यादि।

२. **धर्मसहितधर्मिणोऽध्यासः**—यथा कर्तृत्वादिधर्मसहितस्य अन्तः-करणस्य धर्मिणि आत्मनि अध्यासो धर्मसहितधर्मिणि अध्यासः।

३. **सम्बन्धाध्यासः**—शरीरादौ आत्मनस्तादात्म्यं सम्बन्धाध्यासः।

४. **सम्बन्धसहितसम्बन्धिनोऽध्यासः**—सम्बन्धसहितशरीराद्यनात्मनां पदार्थानामात्मनि अध्यासः।

५. **अन्यतराध्यासः**—अनात्मनि आत्मनो न किन्तु आत्मनि अनात्मपदार्थस्वरूपाणामध्यासः।

६. **अन्योन्याध्यासः**—अयोगोलकवह्निसदृश आत्मानात्मनोः परस्पराध्यासः।

अयं चाध्यासोऽधिष्ठानविषमसत्ताकोऽवभासः, अथवा तदभाववति तत्प्रकारकोऽवभासः, अयथार्थज्ञानमिति यावत्। उक्तञ्च—

प्रमाणदोषसंस्कारजन्यार्थस्य परात्मना।
तद्धीश्चाध्यास इति हि द्वयमिष्टं मनीषिभिः।।

अयमेवाध्यासः ख्यातिरप्युच्यते। सा च ख्यातिर्बहुविधा पूर्वमेव निरूपिता। तत् सङ्ग्रहभूतं पद्यमत्रोदाह्रियते—

आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा।
तथानिवर्चनीयख्यातिरेतत्तु ख्यातिपञ्चकम्।।
विनाशशून्यमीमांसातर्काद्वैतविदां मतम्।। इति।



# रसस्य प्रत्येयताप्रतिपादकस्थले काव्यप्रकाशस्याधुनिकव्याख्यातॄणां प्रमादः

**डॉ. विजयपालशास्त्री**
प्रवाचकः, साहित्य-विभागे
राष्ट्रिय-संस्कृत-संस्थानम्, जयपुर-परिसरः,
त्रिवेणीनगरम्, जयपुरम् (राजस्थान-प्रदेशः)



काव्यप्रकाश-चतुर्थोल्लासे रसस्वरूपनिरूपणप्रकरणे भरतसूत्रविवरण-परमभिनवगुप्तमतं स्वीयया सङ्क्षेपवत्या शैल्या प्रस्तुवन्नाचार्य-मम्मटस्तत्राभिनवगुप्तेन दर्शितां रसस्यालौकिकतामित्थं प्रतिपादयति—

'स च न कार्यो विभावादिविनाशेऽपि तस्य सम्भवप्रसङ्गात्। नापि ज्ञाप्यः सिद्धस्य तस्यासम्भवात्, अपि तु विभावादिभिर्व्यञ्जितश्चर्वणीयः। कारक-ज्ञापकाभ्यामन्यत् क्व दृष्टमिति चेत्, न, क्वचिद् दृष्टमित्यलौकिकत्व-सिद्धेर्भूषणमेतन्न दूषणम्। चर्वणानिष्पत्त्या तस्य निष्पत्तिरुपचरितेति कार्योऽप्युच्यताम्। लौकिकप्रत्यक्षादिप्रमाणताटस्थ्यावबोधशालिमितयोगिज्ञान-वेद्यान्तरसंस्पर्शरहितस्वात्ममात्रपर्यवसितपरिमितेतरयोगिसंवेदनविलक्षणस्वसंवेदनगोचर इति प्रत्येयोऽप्यभिधीयताम्'[1] इति।

अत्र प्रत्येयोऽप्यभिधीयतामिति रसस्य प्रत्येयत्वप्रतिपादिका पङ्क्तिर्नवीनैर्व्याख्याकारैरन्यथैव व्याख्यायते। अत्राभिनवभारतीमूलको मम्मटस्याभिप्रायस्त्वित्थमस्ति—लौकिकप्रत्यक्षादिप्रमाणेभ्यो विलक्षणम्, ताटस्थ्यावबोधशालिमितयोगिज्ञानाद् विलक्षणम्, वेद्यसंस्पर्शरहितस्वात्म-मात्रपर्यवसितपरिमितेतरयोगिसंवेदनाच्च विलक्षणं रसस्य यल्लोकोत्तरं स्वसंवेदनं तस्य गोचर इति स प्रत्येयोऽप्यभिधीयतामिति।

परन्तु प्रायेण सर्व आधुनिका व्याख्यातारः 'लौकिकप्रत्यक्षादि' इत्यस्थाने छेदं कृत्वा प्रमाणपदं चाग्रिमेण योजयित्वा मूलग्रन्थाभिप्रायविरुद्धमित्थं व्याख्यान्ति—लौकिकप्रत्यक्षादिविलक्षणं प्रमाणताटस्थ्यावबोधशालिमित-योगिज्ञानविलक्षणम्........इत्यादि।

---

१. काव्यप्रकाशः, चतुर्थोल्लासः, रससूत्रविवरणप्रकरणम्, पृ. ९३-९४ (बालबोधिनी-टीकोपेतं संस्करणम्, भाण्डारकरप्राच्यविद्यासंस्थानम्, पूना, १९८३ ई.)।

व्याख्यानमिदमभिनवभारतीविरुद्धं काव्यप्रकाशाभिप्रायविपरीतं चास्तीति अत्रोद्ध्रियमाणाया अभिनवभारत्या आलोके स्वयमेवावलोकयन्तु विद्वांसः—

'न च सा चर्वणा प्राङ् मानान्तराद् येनाधुना स्मृतिः स्यात्। न चात्र लौकिकप्रत्यक्षादिप्रमाणव्यापारः। सा च प्रत्यक्षानुमानागमोपमानादिलौकिकप्रमाणजनितरत्याद्यवबोधतः, तथा योगिप्रत्यक्षजनिततटस्थपरसंवित्तिज्ञानात् सकलवैषयिकोपरागशून्यशुद्धपरयोगिगतस्वात्मानन्दैकघनानुभवाच्च विशिष्यते। एतेषां यथायोगमर्जनादिविघ्नान्तरोदयात् ताटस्थ्यास्फुटत्वं[1] विषयावेशवैवश्येन च सौन्दर्यविरहात्'[2]।

'अत्र तु स्वात्मैकगतत्वनियमासम्भवान्न विषयावेशवैवश्यम्। स्वात्मानुप्रवेशात् परगतत्वनियमाभावान्न ताटस्थ्यास्फुटत्वम्। तद्विभावादिसाधारण्यवशसम्प्रबुद्धोचितरत्यादिवासनावेशवशाच्च न विघ्नान्तरादीनां सम्भव इत्यवोचाम बहुशः। अत एव विभावादयो न निष्पत्तिहेतवो रसस्य, तद्बोधापगमेऽपि रससम्भवप्रसङ्गात्'[3]।

पूर्वनिर्दिष्टायाः काव्यप्रकाशपङ्क्तेरुपजीव्यभूतामिमामभिनवभारतीमदृष्ट्वा वा गजनिमीलिकयावधीर्य वा कृतमुपरिनिर्दिष्टमाधुनिकव्याख्यातॄणां व्याख्यानं सम्प्रति प्रायेण सर्वत्र पठनपाठने प्रचलितं दृश्यते।

अस्मिन् स्थले एतादृशप्रामादिकव्याख्यानकर्तृषु बालबोधिनीकारो वामनझलकीकरमहाभागः प्रमुखोऽस्ति। वामनाचार्यस्य व्याख्यानमित्थमस्ति— 'नन्वेवमपि ज्ञाप्य इति व्यवहारः कथमित्यत आह—लौकिकेति। लौकिकं यत् प्रत्यक्षादिज्ञानम्, यच्च प्रमाणताटस्थ्येन प्रमाणौदासीन्येन अवबोधः, ज्ञानं तच्छालिनां तद्वतां मितयोगिनामपक्वयोगिनां युञ्जानपदवाच्यानां ध्यानजन्यं ज्ञानम्, यदपि च वेद्यान्तरस्य ज्ञेयान्तरस्य लौकिकविषयस्य संस्पर्शेन रहितं सम्बन्धेन रहितं स्वरूपमात्रविषयकं परिमितेतरयोगिनां पक्वयोगिनां संवेदनं ज्ञानम्, एतत्त्रितयविलक्षणम्, अलौकिकविभावादिमत्त्वेन विसदृशम्, अत एव च लोकोत्तरं यत्स्वात्मकं संवेदनं तस्य गोचरविषय इत्यर्थः'[4]।

---

१. अत्र **'ताटस्थ्यहेतुकास्फुटत्वेन'** इति पाठः स्यात्, आचार्यहेमचन्द्रस्य काव्यानुशासनविवेकगते अभिनवभारत्युद्धरणे—'ताटस्थ्यहेतुकास्फुटत्वेन विषयावेशवैवश्येन च सौन्दर्यविरहात्' इति पाठदर्शनात्। द्रष्टव्यम्—काव्यानुशासनम्, अ. २, पृ. ७८, (निर्णयसागरसंस्करणम्) मेहरचन्दलक्ष्मनदासप्रकाशनम्, नई दिल्लीद्वारा पुनर्मुद्रितम्, १९८६ ई.।

२. नाट्यशास्त्रम् अभिनवभारतीसहितम्, (द्वितीयभागः) अ. ६, पृ. ७५।
सम्पादकः अनुवादकश्च—पारसनाथद्विवेदी, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी-१९९६ ई.।

३. नाट्यशास्त्रम् अभिनवभारतीयसहितम्, (द्वितीयभागः) अ. ६, पृ. ७४।

४. काव्यप्रकाश-बालबोधिनी, चतुर्थोल्लासः-रससूत्रविवरणप्रकरणम्, पृ. ९४।

अत्र झलकीकरमहाभागस्य व्याख्याने समस्तपदस्य विच्छेदोऽस्थाने विहित इति द्वितीयं ज्ञानमन्यथैव व्याख्यातमभूत्। इत्थमस्थाने पदच्छेद एवात्र प्रमादनिमित्तं जातः।

वस्तुतोऽत्र पदच्छेद एवं करणीयः—लौकिकप्रत्यक्षादिप्रमाणेति एकः, ताटस्थ्यावबोधशालिमितयोगिज्ञानेति द्वितीयः, द्वन्द्वान्ते श्रूयमाणं विलक्षणपदं च प्रत्येकमन्ते स्थापनाल्लौकिकप्रत्यक्षादिप्रमाणविलक्षणं ताटस्थ्यावबोधशालिमित-योगिज्ञानविलक्षणमित्यादिरूपेण सङ्गतिर्भवति। एवं प्रथमं रत्यादिज्ञानं लौकिकप्रत्यक्षादिप्रमाणकं भवति। द्वितीयं ताटस्थ्येन विषयानावेशेन मितयोगिना ध्यानद्वारा तटस्थतया क्रियमाणं भवति। तृतीयं च यत् परिमितेतरयोगिसंवेदनमस्ति तत्र रत्यादिज्ञानमेव नास्ति। 'तदा द्रष्टुः स्वरूपेऽवस्थानम्'[1] इत्युक्तदिशा परमयोगिन आत्मस्वरूपसंवेदनातिरिक्त-ज्ञानाभावात्। इत्थं रससंवेदनमेतेभ्यः त्रिभ्योऽपि विलक्षणमुक्तमिति निर्भ्रान्तमभिनवभारत्यावगम्यते।

मन्येऽयं प्रमादोऽस्थाने पदच्छेदरूपोऽभिनवभारत्या उपेक्षया सञ्जातः। अस्मिन् प्रमादे सति द्वितीयज्ञानस्य स्वरूपमन्यथैव जातम्। अत्र द्वितीयज्ञाने बालबोधिनीकारेण यत् प्रमाणताटस्थ्यं प्रतिपादितं तन्नैवाभिप्रेतमभिनवगुप्तस्य मम्मटस्य च, प्रत्युत ताटस्थ्येन ज्ञातृज्ञेययोर्भेदेन ध्यानदशायां विषयानावेशेन यद् योगिज्ञानं भवति, तदेवाभिप्रेतम्। एवं सत्येव मितयोगिज्ञानेन लब्धे रत्यादाविव ताटस्थ्येन लब्धे रत्यादौ ताटस्थ्यहेतुकोऽस्फुटत्वदोषो योऽभिनवगुप्तेन दर्शितः स सङ्गतो भवति, नान्यथा।

इत्थं मूलग्रन्थविरुद्धमेव वामनाचार्यस्येदं व्याख्यानमतः संशोधनमर्हति। काव्यप्रकाशस्याधुनिका हिन्दीव्याख्याकाराः प्रायेण वामनझलकीकरमहाभागस्य व्याख्यानमेवानुसरन्ति। अतः सम्प्रति पठनपाठने बाहुल्येन प्रचलितासु हिन्दीटीकासु अयं प्रमादो दृश्यते। तद्यथा—आचार्यो विश्वेश्वर-सिद्धान्तशिरोमणिप्रणीतायां काव्यप्रकाश-दीपिकायां हिन्दीव्याख्यायां[2] श्रीगजाननशास्त्रिमुसलगाँवकरप्रणीतायां सविमर्शायां रहस्यबोधिन्यां हिन्दीव्याख्यायां[3] आचार्यश्रीनिवासशास्त्रिप्रणीतायां व्याख्यायाम्[4],

---

१. योगदर्शनम्-१.३।

२. 'इस अनुच्छेद की इस बात को कहने वाली पंक्ति को बहुत ध्यान से समझने की आवश्यकता है। उसमें (१) 'प्रत्यक्षादि', (२) 'प्रमाणताटस्थ्यावबोधशालिमितयोगिज्ञान' और ३. 'वेद्यान्तरसंस्पर्शरहितस्वात्ममात्रपर्यवसितपरिमितेतरयोगिसंवेदन' ये तीनों वाक्यांश विशेष रूप से ध्यान देने योग्य हैं'। काव्यप्रकाश (दीपिका व्याख्या) चतुर्थोल्लास, पृ. १११, ज्ञानमण्डल लिमिटेड, वाराणसी-१९६० ई.।

३. काव्यप्रकाश, सविमर्शरहस्यबोधिनी टीका, पृ. ११९।

४. श्रीनिवासशास्त्रिकृता काव्यप्रकाश-हिन्दीव्याख्या-पृ. १३५; साहित्यभण्डार, सुभाष बाजार, मेरठ।

आचार्यपारसनाथद्विवेदिप्रणीतायां काव्यप्रकाशव्याख्यायाञ्च[१]। इत्थमेव च कासुचित् नवीनासु संस्कृतव्याख्यासु अप्ययं प्रमादो दृश्यते, यथा— श्रीहरिशङ्करशर्मविरचितायां नागेश्वरीटीकायाम्[२]।

कालदृष्ट्या ये मम्मटस्य निकटस्थाः प्राचीनाः काव्यप्रकाशस्य व्याख्यातारो रुय्यक-सोमेश्वर-माणिक्यचन्द्रप्रभृतयः सन्ति, तेषां टीकास्वयं प्रमादो न दृश्यते। ते खल्वभिनवभारतीसंवादिनीमेव व्याख्यां कुर्वन्ति। तद्यथा काव्यप्रकाशसङ्केतनाम्नी रुय्यकव्याख्या—'लौकिकेति। लौकिकानि प्रत्यक्षादीनि प्रमाणानि.......। परिमितयोगिनां युञ्जानसञ्ज्ञानां ज्ञानानि ताटस्थ्येन वस्त्ववगमयन्ति। तटस्थस्य विषयानावेशेन प्रवृत्तिः'[३] इति। तथा च काव्यप्रकाशसङ्केतः सोमेश्वरस्य—'स च लौकिक-प्रत्यक्षानुमानागमोपमानादि-प्रमाणजनितरत्याद्यवबोधात् तथा तटस्थपरसंवित्तिशालियोगिज्ञानाद् विशिष्यते'[४] इति। एतादृश एव च भावो माणिक्यचन्द्रकृते काव्यप्रकाशसङ्केते दृश्यते— 'लौकिकेति। लौकिकप्रमाणेभ्यो विलक्षणम्। चमत्कारित्वात्। ताटस्थ्येन स्वात्मानं विना यः परस्य बोधस्तेन शालते यन्मितयोगिज्ञानं तस्माद्विलक्षणम्। ताटस्थ्यप्रतीत्यादित्वेन रत्यादिबोधस्य निषिद्धत्वात्'[५] इति। अलङ्कार-महोदधिकारो नरेन्द्रप्रभसूरिरपि तथ्यमिदं स्फुटमुद्घाटयति— 'लौकिकप्रत्यक्षादिप्रमाणेभ्यः, स्वात्मव्यतिरिक्तपदार्थप्रकटनेन ताटस्थ्याव-बोधशालिनः परिमिताद् योगिज्ञानाद् (विलक्षणस्य)'[६]।

इतः परमपि पञ्चदश-शतकभवस्य बङ्गपण्डितस्य परमानन्दचक्रवर्तिनो नैयायिकस्य काव्यप्रकाशविस्तारिकायाम् अयमर्थोऽभिनवभारत्यनुकूल एव व्याख्यातः—'लौकिकेत्यादि। विलक्षणपदं प्रमाणेत्यन्त-योगिज्ञानेत्यन्त-

---

१. काव्यप्रकाश-हिन्दीव्याख्या, पृ. १४४-४५ विनोद पुस्तकमन्दिर, रांगेय राघव मार्ग, आगरा-२; २००३ ई.।

२. 'लौकिकं यत्प्रत्यक्षादिज्ञानम्। यच्च प्रमाणताटस्थ्येन चक्षुरादिलौकिकप्रमाणमनपेक्ष्यैव'। काव्यप्रकाशः, नागेश्वरीटीकासहितः, पृ. ३८; चौखम्बा संस्कृत संस्थान-१९८५ ई.।

३. काव्यप्रकाश-सङ्केतः, रुय्यकरचितः (काव्यप्रकाश, सम्प्रदायविमर्शिनी टीकासहित, द्वितीयखण्ड, सम्पादक—रामचन्द्र द्विवेदी, प्रकाशक—मोतीलाल बनारसीदास, दिल्ली-७, १९७० ई. के अन्त में 'अपेण्डिक्स डी.' के अन्तर्गत मुद्रित) पृ. ५५७।

४. काव्यप्रकाश, सोमेश्वरकृत सङ्केत सहित, सम्पादक—रसिकलाल छोटीलाल परीख, प्राच्यविद्या प्रतिष्ठान, जोधपुर, १९६९ ई.।

५. काव्यप्रकाशः (माणिक्यचन्द्रकृतसङ्केतेन मधुमत्या च टीकयोपेतं संस्करणम्)। प्रथमसम्पुटः, चतुर्थोल्लासः, पृ. २३५; सम्पादकः—एन्.एस्. वेङ्कटनाथाचार्यः, प्राच्यविद्यासंशोधनालयः, मैसूरु, विश्वविद्यालयः, मैसूरु, १९७४ ई.।

६. अलङ्कारमहोदधिः नरेन्द्रप्रभसूरिप्रणीतः, तृतीयतरङ्गः, पृ.-५७; सम्पादकः—लालचन्द्र भगवान् दास गाँधी, प्रकाशकः—प्राच्यविद्या शोध संस्थान, बड़ौदा, १९४२ ई.।

संवेदनेत्यन्तः सह प्रत्येकमन्वेति। लौकिकं सन्निकर्षान्यतमजन्यं प्रत्यक्षप्रमाणं चक्षुरादिजन्या प्रमा। मानसत्वेन ततो वैलक्षण्यम्, योगिज्ञानवैलक्षण्यमाह-ताटस्थ्येनेत्यादि'[1]। एतादृशमेव व्याख्यानं नरसिंहसरस्वतीतीर्थविरचितायां काव्यप्रकाशस्य बालचित्तानुरञ्जनी-व्याख्यायां[2] श्रीवत्सलाञ्छनभट्टाचार्यस्य सारबोधिन्यां[3] च स्फुटं विहितम्।

इत्थं प्राचीनव्याख्यानामालोकेऽपि अभिनवभारतीगतो मम्मट-प्रतिपादितश्च परमार्थोऽत्र ग्राह्यः, पूर्वोक्तान्याधुनिकव्याख्यानानि च शोधनीयानि।

## 'वेद्यान्तर' इत्यपपाठ-समीक्षा

अस्मिन्नेव प्रसङ्गे परिमितेतरयोगिसंवेदनप्रतिपादकस्थलेऽपपाठरूपः प्रमादोऽपि प्रायेण सर्वेष्वाधुनिकेषु मुद्रितकाव्यप्रकाशपुस्तकेषु लब्धप्रसरोऽनर्थं जनयति। स च एष—'वेद्यान्तरसंस्पर्शरहितस्वात्ममात्रपर्यवसितपरिमितेतर-योगिसंवेदनविलक्षण-लोकोत्तरस्वसंवेदनगोचर इति प्रत्येयोऽप्यभिधीयताम्'[4] इति। अत्र 'वेद्यान्तर' इत्यपपाठः। एतस्य आगन्तुकस्य पाठस्य स्थाने आद्यपाठस्तु 'वेद्य' इत्येवासीदिति औचित्यानुरोधेन प्राचीनटीकानां समर्थनेन च निश्चप्रचं ज्ञायते।

परमधुनातनेषु काव्यप्रकाशसंस्करणेषु 'वेद्यान्तरसंस्पर्शरहिते'-त्यशुद्धपाठो दृश्यते। तदनुसारि चाधुनिकानामशुद्धव्याख्यानं दूरारूढं सत् सर्वत्र लब्धप्रसरमभूत्। यथा बालबोधिनीकारस्याचार्यवामनझलकीकरमहाभागस्य व्याख्यानं पूर्वमुद्धृतम्। वस्तुतो मितेतरयोगिसंवेदनं सकल-वैषयिकोपरागशून्यत्वात् स्वात्ममात्रपर्यवसितत्वाद् वेद्यशून्यं भवति,

---

१. काव्यप्रकाशः (विस्तारिकाव्याख्यया संवलितः) प्रथमभागः, सम्पादकः—गौरीनाथशास्त्री, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी-१९७६ ई.।

२. 'तर्हि रसः प्रतीयत इति व्यवहारविरोध इत्याशङ्कायामपि भाक्तो व्यवहार इत्याह—लौकिकेत्यादिना। विलक्षणशब्दः प्रत्येकमभिसम्बध्यते। लौकिक-प्रत्यक्षादिप्रमाणविलक्षणं ताटस्थ्यावबोधशालिमितयोगिज्ञानविलक्षणं वेद्यान्तरसंस्पर्शरहितस्वात्ममात्रपर्यवसित-परिमितेतरयोगिसंवेदनविलक्षणं यस्य संवेदनम्, तद्गोचर इति'। काव्यप्रकाशः (सारबोधिनी-बालचित्तानुरञ्जनीटीकाभ्यां युक्तं संस्करणम्) पृ. ७३, सम्पादकौ-डॉ. गोपराजु रामा, डॉ. जगन्नाथपाठकः, प्रकाशकम्—गंगानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्, प्रयागः, १९७६ ई.।

३. 'लौकिकेत्यादि। विलक्षणपदं प्रमाणेत्यन्तमितयोगिज्ञानेत्यन्तसंवेदनेत्यन्तैः प्रत्येकमन्वेति। लोकोत्तरेति लौकिकाद्वैलक्षण्ये हेतुः। युञ्जानयोगिज्ञानवैलक्षण्ये हेतुमाह—**ताटस्थ्येनेति**। ताटस्थ्यं भेदः तेन योगजधर्मप्रत्यासत्त्या अतीतानागतसर्वविषयाणामवबोधः'। सारबोधिनी-पृ. ७४।

४. काव्यप्रकाशः, चतुर्थोल्लासः, रससूत्रविवरणप्रकरणम्, पृ. ९४ (बालबोधिनी-टीकोपेतं संस्करणम्)।

तत्रात्मस्वरूपमात्रभानात् किमपि वेद्यं नैव भवति। एतदभिनवभारत्यां प्राचीनग्रन्थेषु च स्फुटतया दृश्यते।

अभिनवभारत्यामिदं तृतीयं परयोगिसंवेदनमित्थं निर्दिश्यते—'सकल-वैषयिकोपरागशून्यशुद्धपरयोगिगत-स्वात्मानन्दैकघनानुभवाच्च विशिष्यते'[1]। अभिनवभारतीगत एव भावो मम्मटभट्टेन 'वेद्यसंस्पर्शरहित-स्वात्ममात्रपर्यवसिते'ति विशेषणाभ्यां निर्दिष्टः। यद्यत्र 'वेद्यान्तरेति' पाठो मन्येत चेत् काव्यप्रकाशगतं स्वात्ममात्रपर्यवसितेति विशेषणं व्यर्थं भवति। मम्मटोऽत्र 'स्वात्ममात्र-पर्यवसित'शब्देन तदा 'द्रष्टुः स्वरूपेऽवस्थानमिति'[2] योगदर्शन-प्रोक्तमसम्प्रज्ञातसमाधिगतमात्मस्वरूपावस्थानं सूचयति। अतोऽत्रात्मस्वरूपानु-भूतिव्यतिरिक्तं किमपि वेद्यमेव नास्तीति युज्यते 'वेद्यसंस्पर्शरहिते'ति पाठः। मम्मटस्यायमुपन्यासश्च अभिवनभारत्या इमां पङ्क्तिमुपजीव्य तिष्ठति—'सकल-वैषयिकोपरागशून्य-शुद्धपरयोगिगत-स्वात्मानन्दैकघनानुभवाच्च विशिष्यते'[3] इति।

काव्यप्रकाशस्य तालपत्राङ्कितायां सर्वतः प्राचीनायां जैसलमेरजैनग्रन्थभाण्डागारे प्राप्तायां जोधपुरस्थप्राच्यविद्याप्रतिष्ठानेन च (२०१६ मिते विक्रमाब्दे) प्रकाशितायां[4] मातृकायां 'वेद्यसंस्पर्शे'त्येव पाठोऽस्ति। अनन्तरकालेऽर्वाचीनमातृकास्वत्र पाठभ्रंशोऽभूदिति निश्चीयते।

प्राचीनाष्टीकाकारा अपि अमुमेव मूलपाठं निर्दिशन्ति। तद्यथा रुय्यकः काव्यप्रकाशसङ्केते—'अपरिमितयोगिनां शान्तब्रह्मसाक्षात्कारिणां संवेदनानि शान्तत्वाद् वेद्योपरागशून्यत्वेन स्वात्ममात्रपर्यवसितानि'[5]। एवमेव अलङ्कारमहोदधिकारो नरेन्द्रप्रभसूरिरपि 'तत्त्वविषयोपरागविरहाद् वेद्यसंस्पर्श-रहितत्वेन स्वात्ममात्रपर्यवसितात् जगद्व्यापकत्वेन परिमितेतराद् योगिसंवेदनाच्च'[6] इत्येवं पठति। इत्थमौचित्यानुरोधात् प्राचीनानां लिखितपुस्तकानां संवादात् प्राचीनानां टीकाकाराणां साक्ष्याच्चात्र 'वेद्यान्तरे'त्यस्य स्थाने 'वेद्ये'त्येव मूलपाठोऽवगन्तव्यः।

●

---

१. नाट्यशास्त्रम् अभिनवभारतीसहितम्, (द्वितीयभागः) अध्यायः-६, पृ. ७४।
२. योगदर्शनम्-१.३।
३. नाट्यशास्त्रम् अभिनवभारतीसहितम्, (द्वितीयभागः) अध्यायः-६, पृ. ७४।
४. काव्यप्रकाश, सोमेश्वरकृत सङ्केत सहित, सम्पादक-रसिकलाल छोटीलाल पारीख, प्राच्यविद्या प्रतिष्ठान, जोधपुर, १९६९ ई.।
५. अलङ्कारमहोदधिः, तृतीयतरङ्गः, पृ.-५८।
६. काव्यप्रकाश-सङ्केत-रुय्यकरचितः (काव्यप्रकाश, सम्प्रदायविमर्शिनी टीका सहित, द्वितीय खण्ड, सम्पादक-रामचन्द्र द्विवेदी, प्रकाशक-मोतीलाल बनारसीदास, दिल्ली-७, १९७० ई. के अन्त में 'अपेण्डिक्स-डी.' के अन्तर्गत मुद्रित) पृ. ५५७।

# काव्यस्वरूपभेदविमर्शः

**डॉ. मङ्गलारामः**
सहाचार्यः, संस्कृतविभागे,
जयनारायणव्यासविश्वविद्यालयस्य, जोधपुरे



'वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये'[1] इति कविशिरोमणिकालिदासस्य उक्त्या स्पष्टीभवति यत् शब्दार्थयोः सम्यग्बोधनेनैव काव्यरचना सम्भवा। शब्द एव वाक् शब्दतत्त्वं शब्दात्मा वोच्यते यो वक्तुर्बुद्धौ तिष्ठति[2]। यदा स शब्दात्मा तत्तत्ककारादिध्वनिभिर्वक्तुर्मुखादभिव्यक्तो भवति तदा श्रोता तद्वर्णसमूहस्वरूपं ध्वन्यात्मकं पदं श्रुत्वा घटपटादिपदार्थान् अवगच्छति।

संसारेऽस्मिन् वाण्या अनुग्रहेणैव लोकव्यवहारश्चलति। कविना दण्डिना स्पष्टशब्दैरुक्तम्—

इह शिष्टानुशिष्टानां शिष्टानामपि सर्वथा।
वाचामेव प्रसादेन लोकयात्रा प्रवर्तते[3]॥

वाण्याः, अर्थात् शब्दस्य द्वौ प्रभेदौ स्तः शिष्टशब्दोऽशिष्टशब्दश्च। शब्दानुशासनकारैः पाणिन्यादिभिर्निर्दिष्टसूत्रैः सिद्धाः कुम्भकारप्रभृतिशब्दाः शिष्टा उच्यन्ते। एषु शब्देषु प्रकृतिप्रत्ययादिविभागः सर्वथा सिद्धोऽस्ति। व्याकरणसम्मताः संस्कृतभाषाशब्दाः शिष्टा उच्यन्ते। शब्दानुशासनकारैरननुशासिताः डित्थादिशब्दा अशिष्टा उच्यन्ते। प्राकृतादिभाषाणां शब्दा एवाशिष्टश्रेणीमधिगच्छन्ति। उक्तमपि—

अयं भावः—लोकव्यवहारो वाचां प्रयोगेणैव सिद्ध्यति। वाचश्च द्विविधाः शिष्टानुशिष्टा व्याकरणसम्मताः संस्कृतरूपाः, इतराश्च

---

१. कालिदासः, रघुवंशम् १.१ (साहित्यभण्डारः, मेरठम्, प्रथमसंस्करणम्, १९९९)।

२. वितर्कितः पुरा बुद्ध्या क्वचिदर्थे निवेशितः। करणेभ्यो विवृत्तेन ध्वनिना सोऽनुगृह्यते॥ —भर्तृहरिः, वाक्यपदीयम्, १.४७ (चौखम्बासंस्कृतसंस्थानम्, पञ्चमसंस्करणम्, वाराणसी, १९८४)

३. दण्डी, काव्यादर्शम्, १.३ (मेहरचन्दलछमनदासप्रकाशनम्, प्रथमसंस्करणम्, दिल्ली, १९७३)

प्राकृतापभ्रंशरूपाः। द्विविधानामप्यासां गिरां प्रयोगो लोकयात्राप्रवृत्तौ हेतुः। वाक्प्रयोगाभावे लोकव्यवहारासिद्धेः[1]।

शिष्टशब्दाः साधव उच्यन्ते, अशिष्टशब्दाश्चासाधव उच्यन्ते। आचार्य-भर्तृहरेः मतानुसारमर्थवाचकता साधुशब्देषु असाधुशब्देषु चोभयत्रैवास्ति—

उभयेषामविच्छेदेनान्यशब्दविवक्षया।
योऽन्यः प्रयुज्यते शब्दो न सोऽर्थस्याभिधायकः[2]॥

कर्ता लोकव्यवहारे पदार्थावबोधनाय साधुशब्दानामेव प्रयोगं कुर्यात्। शास्त्रं कथयति यत् पदार्थबोधाय साधुशब्दप्रयोगेण कर्ता कल्याणं प्राप्नोति—

इहापि समानायामर्थावगतौ शब्देन चापशब्देन च धर्मनियमः क्रियते शब्देनैवार्थोऽभिधेयो नापशब्देनेति। एवं क्रियमाणमभ्युदयकारि भवति[3]।

महर्षिपतञ्जलेर्मतानुसारं न तु केवलं शब्दानां ज्ञानेन धर्मो भवति न चैव केवलं प्रयोगेण, अपि तु कर्ता यदाऽष्टाध्यायीप्रभृतिशास्त्राणां बोधपूर्वकं प्रयोगं करोति तदा स अभ्युदयं धर्मं वाधिगच्छति—

शास्त्रपूर्वकं यः शब्दान् प्रयुङ्क्ते सोऽभ्युदयेन युज्यते। तत्तुल्यं वेदशब्देन। वेदशब्दा अप्येवमभिवदन्ति—योऽग्निष्टोमेन यजते य उ चैनमेवं वेद योऽग्निं नाचिकेतं चिनुते य उ चैनमेवं वेद[4]।

आचार्यभर्तृहरिणा लोकव्यवहारस्य सिद्ध्यर्थं शब्दप्रयोगस्य उपयोगिता पदे पदे निरूपिता—

शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धनी।
यन्नेत्रः प्रतिभात्मायं भेदरूपः प्रतीयते॥

षड्जादिभेदः शब्देन व्याख्यातो रूप्यते यतः।
तस्मादर्थविधाः सर्वाः शब्दमात्रासु निश्रिताः॥

शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।
छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत॥

---

१. गुप्तः, धर्मेन्द्रकुमारः, काव्यादर्शम्, १.३, सुदर्शनाव्याख्या, पृष्ठम् ३, (मेहरचन्दलछमनदासप्रकाशनम्, प्रथमसंस्करणम्, दिल्ली, १९७३)

२. वाक्यपदीयम्, १.१५७।

३. महर्षिपतञ्जलिः, व्याकरणमहाभाष्यम्, प्रथमाह्निकः, पृष्ठे ३१-३२। (मोतीलालबनारसीदासप्रकाशनम्, प्रथमसंस्करणम्, दिल्ली, १९८४)

४. तदेव, पृष्ठम् ३८।

इतिकर्तव्यता लोके सर्वा शब्दव्यपाश्रया।
यां पूर्वाहितसंस्कारो बालोऽपि प्रतिपद्यते।।

आद्यः करणविन्यासः प्राणस्योर्ध्वं समीरणम्।
स्थानानामभिघातश्च न विना शब्दभावनाम्।।

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।।

वाग्रूपता चेन्निष्क्रामेदवबोधस्य शाश्वती।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी।।

सा सर्वविद्याशिल्पानां कलानां चोपबन्धनी।
तद्वशादभिनिष्पन्नं सर्वं वस्तु विभज्यते।।

सैषा संसारिणां संज्ञा बहिरन्तश्च वर्तते।
तन्मात्रमनतिक्रान्तं चैतन्यं सर्वजन्तुषु।।

अर्थक्रियासु वाक् सर्वान् समीहयति देहिनः।
तदुत्क्रान्तौ विसञ्ज्ञोऽयं दृश्यते काष्ठकुड्यवत्।।

प्रविभागे यथा कर्ता तया कार्ये प्रवर्तते।
अविभागे तथा सैव कार्यत्वेनावतिष्ठते।।

स्वमात्रा परमात्रा वा श्रुत्या प्रक्रम्यते यथा।
तथैव रूढतामेति तया ह्यर्थो विधीयते।।

अत्यन्तमतथाभूते निमित्ते श्रुत्युपाश्रयात्।
दृश्यतेऽलातचक्रादौ वस्त्वाकारनिरूपणा।।

अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम्।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते।।

तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः।
तस्य प्रवृत्तितत्त्वज्ञस्तद्ब्रह्मामृतमश्नुते[1]।।

शब्दस्वरूपं ज्योतिर्विना सकललोकोऽज्ञानस्वरूपेणान्धकारेणाऽऽवृत्तो भविष्यति। दण्डिना स्पष्टशब्दैरुक्तम्—

---

१. वाक्यपदीयम्, १.११८-१३२।

इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम्।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते[१]।।

संसारे प्रकाशार्थं यन्महत्त्वं सूर्यादीनां ग्रहनक्षत्राणामस्ति तदेव महत्त्वं लोकव्यवहाराय शब्दानामस्ति—

यथा सूर्यादिज्योतिषोऽभावे जगदिदमन्धकारमयं तिष्ठति तथैव शब्दरूपज्योतिषोऽभावोऽपि शब्दसाध्यानां व्यवहाराणामनुपगमादज्ञानान्धकारमयं विलुप्तलोकव्यवहारं सकलं जगत् स्यात्[२]।

अभीष्टार्थवाचकं शब्दसमूहात्मकं भवति काव्यम्। अभीष्टार्थबोधक-वाक्यानां समूह एव काव्यं प्रबन्धग्रन्थो वोच्यते। पुरातनराज्ञां यशःकीर्तनमेव काव्यस्य प्रमुखप्रयोजनमस्ति। प्राचीननृपाणां कीर्तिस्वरूपप्रतिरूपं कविनिबद्धकाव्यप्रबन्धरूपदर्पणं प्राप्य सम्प्रति तन्नृपाणामभावेऽपि नष्टं न जायते। वस्तुतो वाङ्मयस्वरूप आदर्शोऽद्भुतो वर्तते—

दर्पणे बिम्बस्य प्रतिबिम्बनं तावदेव भवति यावद्बिम्बं तत्र तिष्ठति तदपगमे तु प्रतिबिम्बस्याप्यपगमो निश्चितः। परन्तु काव्यप्रबन्धरूपे दर्पणे प्राचां राज्ञां यशोरूपं बिम्बं तेषां नृपाणामपगमेऽपि प्रतिबिम्बितं विद्यत इत्याश्चर्यकरः खलु वाङ्मयरूप आदर्शः[३]।

दोषहीना गुणालङ्कारभूषिता वाग् विद्वद्भिः कामदोहिनी इष्टफलप्रदा गौरुक्ता। धीरजना दोषरहिता वाचं जानन्ते यतस्तेषां वाण्यां कल्याणमयी लक्ष्मीर्निहिता वर्तते—

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि[४]।।

शब्दानां प्रयोगे कुशलः पुरुषः परलोकेऽनन्तोत्कर्षं प्राप्नोति—

यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद् व्यवहारकाले।
सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः[५]।।

दोषयुक्ता गुणालङ्काररहीना वाक् कवेर्मूर्खताया अभिव्यक्तिं करोति अतः कविना काव्यनिर्माणकाले अत्यल्पो दोषोऽपि न करणीयः। उक्तमपि—

---

१. काव्यादर्शम्, १.४।
२. काव्यादर्शम्, १.४, सुदर्शना-व्याख्या, पृष्ठम् ४।
३. तदेव, पृष्ठम् ५।
४. व्याकरणमहाभाष्यम्, प्रथमाह्निकः, पृष्ठम् १४।
५. तदेव, पृष्ठम् ८।

तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथञ्चन।
स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्[१]॥

अज्ञानी जनः काव्यदोषान्न पश्यति। वाक् तस्मै स्वस्वरूपं न दर्शयति किन्तु शब्दार्थविदं पुरुषं प्रति वाक् सर्वं स्वस्वरूपं प्रकटीकरोति—

उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः[२]॥

यः काव्यं दूषितं करोति स दोष उच्यते। रसहीनताकारका रसविच्छेद-कारका वा दोषा भवन्ति। श्रुतिकटुत्वादिदोषा रसास्वादबाधकास्सन्ति। दोषा इमे शब्दार्थद्वारेण काव्यस्यात्मस्वरूपरसस्यापकर्षं कुर्वन्ति। दोषाः प्रायः पद-पदांशवाक्यार्थरसेषु तिष्ठन्ति। दुःश्रवस्त्वाश्लीलत्वानुचितार्थत्वग्राम्यत्वादिदोषाणां विवेचनं विश्वनाथकविराजेन साहित्यदर्पणशास्त्रीयग्रन्थे विस्तारपूर्वकं कृतम्—

रसापकर्षका दोषास्ते पुनः पञ्चधा मताः।
पदे तदंशे वाक्येऽर्थे सम्भवन्ति रसेऽपि यत्॥

दुःश्रवस्त्रिविधाश्लीलानुचितार्थाप्रयुक्तताः।
ग्राम्याप्रतीतसन्दिग्धनेयार्थनिहतार्थताः॥

अवाचकत्वं क्लिष्टत्वं विरुद्धमतिकारिता।
अविमृष्टविधेयांशभावश्च पदवाक्ययोः॥

दोषाः केचिद् भवन्त्येषु पदांशेऽपि पदे पदे।
निरर्थकासमर्थत्वे च्युतसंस्कारतो यथा[३]॥

दोषगुणविज्ञो जन एव सत्काव्यासत्काव्ययोर्भेदं कर्तुं शक्नोति। आचार्यदण्डिनो मतानुसारमभिलषितार्थेन समन्विता पदावली एव काव्यशरीरमस्ति—

शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली[४]।

आचार्यमम्मटस्य मतानुसारं दोषहीनौ गुणयुक्तौ कुत्रापि अलङ्काररहीनौ शब्दार्थौ एव काव्यमुच्यते—

---

१. काव्यादर्शम्, १.७।
२. व्याकरणमहाभाष्यम्, प्रथमाह्निकः, पृष्ठम् १३।
३. विश्वनाथः कविराजः, साहित्यदर्पणम्, ७.१-४।
(मोतीलालबनारसीदासप्रकाशनम्, नवमसंस्करणम्, दिल्ली, १९८२)
४. काव्यादर्शम्, १.१०।

तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि[१]।

प्रकृतकाव्यलक्षणे क्वापिपदस्य प्रयोजनमिदं यत् प्रायः सर्वत्र अलङ्कारयुक्तौ शब्दार्थौ काव्यमुच्यते, किन्तु यदि कुत्रापि स्पष्टालङ्काराहित्यमपि स्यात्तर्हि अपि तत्र अदोषतायां सगुणतायाञ्च सत्यां काव्यताया हानिर्न भवति—

क्वापीत्यनेनैतदाह यत्सर्वत्र सालङ्कारौ क्वचित्तु स्फुटालङ्कारविरहेऽपि न काव्यत्वहानिः[२]।

आचार्यविश्वनाथस्य मतानुसारं रसात्मकं वाक्यमेव काव्यमुच्यते[३]। तेन उक्तं यद् रस एव काव्यस्यात्मा विद्यते—

रस एवात्मा साररूपतया जीवनाधायको यस्य।

तेन विना तस्य काव्यत्वाभावस्य प्रतिपादितत्वात्। रस्यत इति रस इति व्युत्पत्तियोगाद् भावतदाभासादयोऽपि गृह्यन्ते[४]।

केचित् प्रमातार एव रसस्यास्वादनं कर्तुं शक्नुवन्ति। सहृदयजना रसास्वादनकाले तथैव आनन्दानुभूतिं कुर्वन्ति यथैव योगिनो ब्रह्मसाक्षात्कारकाले आनन्दानुभूतिं कुर्वन्ति। उक्तमपि—

सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः।
वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः॥
लोकोत्तरचमत्कारप्राणः कैश्चित्प्रमातृभिः।
स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः[५]॥

रसास्वादस्य प्रमुखहेतुका वर्तते वासना—

न जायते तदास्वादो विना रत्यादिवासनाम्[६]।

माध्यमदृष्ट्या काव्यस्य त्रयः प्रकाराः सन्ति—गद्यकाव्यं पद्यकाव्यं मिश्रकाव्यञ्च। उक्तमपि—

---

१. मम्मटः, काव्यप्रकाशम्, १.४।
(साहित्यभण्डारप्रकाशनम्, दशमसंस्करणम्, मेरठम्, १९८९)
२. तदेव, स्वोपज्ञवृत्तिः, पृष्ठम् १९।
३. वाक्यं रसात्मकं काव्यम्। (साहित्यदर्पणम्, १.३)
४. तदेव, स्वोपज्ञवृत्तिः, पृष्ठम् १९।
५. साहित्यदर्पणम्, ३.२-३।
६. तदेव, ३.९।

गद्यं पद्यं च मिश्रं तत्त्रिधैव व्यवस्थितम्[१]।

चतुष्पादयुता छन्दोबद्धरचना पद्यमुच्यते। पद्यस्य द्वे प्रभेदौ स्तः—वृत्तपद्यं जातिपद्यञ्च। वर्णसंख्यया नियमितानि मन्दाक्रान्तादिछन्दोबद्धानि पद्यानि वृत्तपद्यान्युच्यन्ते। मात्रासंख्यया नियमितानि आर्यादिछन्दोबद्धानि पद्यानि जातिपद्यान्युच्यन्ते। उक्तञ्च—

पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा[२]।

कायपरिमाणदृष्ट्या काव्यस्य द्वौ प्रकारौ स्तः—लघुकाव्यं महाकाव्यञ्च। मेघदूतप्रभृतीनि लघुकाव्यस्योदाहरणानि सन्ति। रघुवंशप्रभृतीनि महाकाव्यस्योदाहरणानि सन्ति। महाकाव्यस्य लक्षणानि प्रस्तुवन्नाचार्यो दण्डी कथयति—

सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम्।
आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्।।

इतिहासकथोद्भूतमितरद्वा सदाश्रयम्।
चतुर्वर्गफलोपेतं चतुरोदात्तनायकम्।।
नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः।
उद्यानसलिलक्रीडामधुपानरतोत्सवैः।।

विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः।
मन्त्रदूतप्रयाणाजिनायकाभ्युदयैरपि।।

अलङ्कृतमसङ्क्षिप्तं रसभावनिरन्तरम्।
सर्गैरनतिविस्तीर्णैः श्रव्यवृत्तैः सुसन्धिभिः।।

सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जकम्।
काव्यं कल्पान्तरस्थायि जायेत सदलङ्कृति[३]।।

पादहीना छान्दोरहिता रचना गद्यमुच्यते। गद्यस्य द्वौ भेदौ स्तः—आख्यायिका कथा च।

अपादः पदसन्तानो गद्यमाख्यायिका कथा[४]।

आख्यायिका नायकेनैव वाच्या भवति, कथा च नायकेन केनचिद्वा अन्यपात्रेणापि वाच्या भवति। यथार्थकथनकर्त्रा नायकेन स्वगुणानां प्रकटीकरणं

---

१. काव्यादर्शम्, १.११;　　२. तदेव, १.११।
३. तदेव, १.१४-१९;　　४. तदेव, १.२३।

दोषपूर्णं न मतम्। आख्यायिकायां वक्त्रापरवक्त्रछन्दसोः प्रयोगो भवति विषयवस्तुनश्च विभाजनमुच्छ्वासैर्भवति किन्तु कथायामार्याछन्दसः प्रयोगो भवति विषयवस्तुनश्च विभाजनं लम्भैर्भवति। खण्डकथापरिकथा-कथानिकाप्रभृतीनां गद्यकाव्यभेदानामन्तर्भावः कथाख्यायिकयोरेव करणीयः। दण्डिनो मान्यतेयं कथाख्यायिकाविषये यद् इमे द्वे एकैव गद्यजातिः—

तत्कथाख्यायिकेत्येका जातिः सञ्ज्ञाद्वयाङ्किता।
अत्रैवान्तर्भविष्यन्ति शेषाश्चाख्यानजातयः[1]॥

गद्यपद्याभ्यां मिश्रितं काव्यरूपं मिश्रकाव्यमुच्यते। नाटकादीनि मिश्रकाव्यानि कथ्यन्ते। मिश्रकाव्यस्यापरं नाम चम्पूरस्ति—

मिश्राणि नाटकादीनि तेषामन्यत्र विस्तरः।
गद्यपद्यमयी काचिच्चम्पूरित्यभिधीयते[2]॥

भाषादृष्ट्या काव्यस्य चत्वारः प्रकाराः सन्ति। संस्कृतकाव्यं प्राकृतकाव्यमपभ्रंशकाव्यं मिश्रकाव्यञ्च। पाणिन्यादिभिर्मुनिभिरनुशासिता देवभाषैव संस्कृतमुच्यते। उक्तमपि—

संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः[3]।

पाणिन्यादिमहामुनिभिः प्रकृतिप्रत्ययप्रदर्शनपुरस्सरं संस्कृतभाषाऽनु-शासिता। इयं संस्कृतवाग्देवैरपि व्यवहारभूता जाता। वस्तुतः संस्कारवती भाषैव संस्कृतं कथ्यते—

संस्कृतं नाम संस्कारवत्त्वात् संस्कृतमित्यभिधीयते[4]।

प्रकृतेः अर्थात् संस्कृताद् उत्पन्नभाषा प्राकृतमुच्यते। अस्या नैके भेदाः सन्ति; यथा तद्भवप्राकृतं तत्समप्राकृतं देशीप्राकृतम्। तद्देशप्रसिद्धं देशविशेषोद्भवं वा प्राकृतमेव देशीप्राकृतमुच्यते। कविपदाज्जातं कइपदं तद्भवप्राकृतस्योदाहरणम्। गङ्गापदाज्जातं गङ्गापदं तत्समप्राकृतस्योदाहरणम्। सुन्दरपदाज्जातं चङ्गपदं देशीप्राकृतस्योदाहरणम्। देशभेदाद् भिन्नताप्राप्ताः प्राकृतभाषाः महाराष्ट्री शौरसेनी गौडी लाटी मागधी अर्धमागधी पैशाची च सन्ति यासां काव्यशास्त्रादिव्यवहारेषु प्रयोगो भवति। आसु सर्वासु प्राकृतभाषासु

---

१. काव्यादर्शम्, १.२८।
२. तदेव, १.३१।
३. तदेव, १.३३।
४. काव्यादर्शम्, १.३३, सुदर्शना-व्याख्या, पृष्ठम् २७।

महाराष्ट्र्याः प्राकृतभाषायाः काव्यकारैः बहुप्रयोगः कृतः, अतऽ इयं सर्वश्रेष्ठा प्राकृतभाषा मता[१]।

काव्यग्रन्थेषु प्रयुक्ताः शकाभीरयवनतुरुष्कादीनां म्लेच्छजातीनाम् उक्तयः अपभ्रंशभाषेत्युच्यन्ते, किन्तु आचार्यदण्डिनो मतानुसारं शास्त्रग्रन्थेषु प्रसङ्गवशप्रयुक्ताः सर्वसंस्कृतेतरभाषा अपभ्रंशभाषा उच्यन्ते—

शास्त्रेषु संस्कृतादन्यदपभ्रंशतयोदितम्[२]।

यस्मिन् काव्ये संस्कृतप्राकृतापभ्रंशभाषाणां प्रयोगो भवति तन्मिश्रकाव्यमुच्यते। नाटकप्रकरणादीनि मिश्रकाव्यस्योदाहरणानि सन्ति[३]।

विनियोगभेददृष्ट्या काव्यस्य द्वौ प्रकारौ स्तः—दृश्यकाव्यं श्रव्यकाव्यञ्च[४]। आचार्यभोजदेवेन सरस्वतीकण्ठाभरणग्रन्थे दृश्यकाव्यस्य लास्यताण्डवछलितशल्याहल्लीसकरासरूपाणि षड्रूपाणि मतानि। शृङ्गाररसप्रधानं स्त्रीनृत्यवत्काव्यं लास्यमुच्यते। पुरुषनृत्यस्य प्राधान्यवत्काव्यं छलितमुच्यते। मस्तके करविन्यासं कृत्वा नृत्यवत्काव्यं शल्योच्यते।

मार्गभेददृष्ट्या काव्यस्य द्वौ भेदौ स्तः—वैदर्भमार्गिककाव्यं गौडीयमार्गिककाव्यञ्च। वैदर्भमार्गिककाव्ये श्लेषादिदशकाव्यगुणानामनिवार्यता मता, किन्तु गौडीयमार्गिककाव्ये श्लेषादिकाव्यगुणानामन्यथाभावो दृश्यते—

श्लेषः प्रसादः समता माधुर्यं सुकुमारता।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः।।
इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः।
एषां विपर्ययः प्रायो दृश्यते गौडवर्त्मनि[५]।।

श्रेष्ठत्वदृष्ट्या काव्यस्य त्रयः प्रकाराः सन्ति—उत्तमकाव्यं मध्यमकाव्यमवरकाव्यञ्च। उत्तमकाव्ये वाच्यार्थापेक्षया व्यङ्ग्यार्थः प्रतीयमानार्थो वा अधिकः चमत्कारजनको भवति। स व्यङ्ग्यार्थ एव ध्वनिरुच्यते—

---

१. महाराष्ट्रं जनपदविशेषः तदाश्रयः अधिष्ठानं प्रयोगक्षेत्रं यस्याः तां महाराष्ट्रीं भाषां प्रकृष्टमुत्कृष्टतमं प्राकृतं विदुः जानन्ति भाषाविदः।
—काव्यादर्शम्, १.३४, सुदर्शना-व्याख्या, पृष्ठम् २८।

२. काव्यादर्शम्, १.३६।

३. नाटकप्रकरणादिकन्तु मिश्रकं संस्कृतप्राकृतादिमिश्रं नानाभाषामयं भवति।
—काव्यादर्शम्, १.३७, सुदर्शना-व्याख्या, पृष्ठम् ३१।

४. विनियोगभेदात्काव्यं दृश्यं श्रव्यं चेति द्विविधं मतमित्यर्थः।
—तदेव, १.३९, सुदर्शना-व्याख्या, पृष्ठम् ३२।

५. काव्यादर्शम्, १.४१-४२।

इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः[1]।

ध्वनेः द्वौ प्रकारौ स्तः—लक्षणामूलकध्वनिरभिधामूलकश्च। लक्षणामूलकध्वनिरविवक्षितवाच्या भवति। अभिधामूलकध्वनिर्विवक्षितान्यपरवाच्या भवति। अविवक्षितवाच्यध्वनेः द्वौ प्रकारौ स्तः—अर्थान्तरसंक्रमितवाच्याऽत्यन्ततिरस्कृतवाच्या च[2]।

वाच्यार्थप्रधानं काव्यं मध्यमकाव्यमुच्यते। अस्मिन् काव्ये वाच्यार्थापेक्षया व्यङ्ग्यार्थोऽधिकः चमत्कारजनको न भवति। काव्यतत्त्वज्ञैरिदं काव्यं गुणीभूतव्यङ्ग्यकाव्यमुक्तम्—

अतादृशि गुणीभूतव्यङ्ग्यं तु मध्यमम्[3]।

गुणीभूतव्यङ्ग्यकाव्ये व्यङ्ग्यार्थो वाच्यार्थादुत्तमो न भवति, न्यूनो वा भवति व्यङ्ग्यश्च गुणीभूतोऽप्रधानो भवति। मध्यमकाव्ये वा तु व्यङ्ग्यार्थो रसादीनामङ्गो भवति वा काक्वाक्षिप्तो भवति वा वाच्यार्थसिद्धेरङ्गभूतो भवति वा वाच्यार्थापेक्षया व्यङ्ग्यप्राधान्ये सन्देहो भवति वा व्यङ्ग्यार्थोऽस्फुटः अर्थाद् गूढो भवति—

अपरं तु गुणीभूतव्यङ्ग्यं वाच्यादनुत्तमे व्यङ्ग्ये।
तत्र स्यादितराङ्गं काक्वाक्षिप्तं च वाच्यसिद्ध्यङ्गम्[4]॥

यस्मिन् काव्ये व्यङ्ग्यार्थः स्फुटरूपेण सर्वथा न स्यात् तदवरकाव्यमुच्यते। अवरकाव्यमेव चित्रकाव्यमुच्यते। चित्रकाव्यस्य द्वौ प्रकारौ स्तः, शब्दचित्रमर्थचित्रञ्च—

शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्[5]। इति।

●

---

१. काव्यप्रकाशम्, १.४।

२. वाच्यादधिकचमत्कारिणि व्यङ्ग्यार्थे ध्वन्यतेऽस्मिन्निति व्युत्पत्त्या ध्वनिर्नामोत्तमं काव्यम्। तत्राविवक्षितवाच्यो नाम लक्षणामूलो ध्वनिः। लक्षणामूलत्वादेवात्र वाच्यमविवक्षितं बाधितस्वरूपम्। विवक्षितान्यपरवाच्यस्त्वभिधामूलः। अत एवात्र वाच्यं विवक्षितम्। अन्यपरं व्यङ्ग्यनिष्ठम्। अत्र हि वाच्योऽर्थः स्वरूपं प्रकाशयन्नेव व्यङ्ग्यार्थस्य प्रकाशकः। यथा प्रदीपो घटस्य। अविवक्षितवाच्यो नाम ध्वनिरर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विविधः। यत्र स्वयमनुपयुज्यमानो मुख्योऽर्थः स्वविशेषरूपेऽर्थान्तरे परिणमति तत्र मुख्यार्थस्य स्वविशेषरूपार्थान्तरसङ्क्रमितत्वादर्थान्तरसङ्क्रमितवाच्यत्वम्।

—साहित्यदर्पणम्, ४.१-३, स्वोपज्ञवृत्तिः, पृष्ठे १२९-१३०।

३. काव्यप्रकाशम्, १.५।

४. साहित्यदर्पणम्, ४.१३; ५. काव्यप्रकाशम्, १.५।

# उत्तररामचरितस्याङ्गिरससमीक्षा

**डॉ. हरिवंशकुमारपाण्डेयः**
ईक्ष्यशोधकः
शिक्षण-शोध-प्रकाशन-संस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणस्याम्



'रसो वै सः'[१] इत्याद्यौपनिषत्सिद्धान्ताध्वाध्वनीनैः शैलूषसामाजिक-प्रशिक्षणपरैर्नाट्यशास्त्रकारैर्निश्शङ्कमुपपादितम्—'न हि रसादृते कश्चिदर्थः प्रवर्तते'[२]। धनञ्जयाचार्येणापि तत्त्वमेतदुदघुष्यत स्वकीयया कारिकयैकया—

'आनन्दनिस्यन्दिषु रूपकेषु व्युत्पत्तिमात्रम्फलमल्पबुद्धिः।
योऽपीतिहासादिवदाह साधुस्तस्मै नमः स्वादुपराङ्मुखाय'[३]॥

समभिहितञ्च सकलसहृदयहृदयानन्दवर्धनेनानन्दवर्धनेन—

'अभिनेयार्थे तु सर्वथा रसबन्धेऽभिनिवेशः कार्यः'[४]।

काव्यमात्रार्थमप्युपनिबद्धं तेनैव ध्वनिकृता—

'कविना काव्यमुपनिबध्नता सर्वात्मना रसपरतन्त्रेण भवितव्यम्। तत्रेतिवृत्ते यदि रसाननुगुणां स्थितिं पश्येत्तदेमां भङ्क्त्वाऽपि स्वतन्त्रतया रसानुगुणं कथान्तरमुत्पादयेत्। न हि कवेरितिवृत्तमात्रनिर्वाहेण किञ्चित् प्रयोजनम्, इतिहासादेव तत्सिद्धेः'[५]॥

सकलसहृदयलोकालोकध्वन्यालोकलोचननिर्माणचणेनाभिनवगुप्तपादेनापि मुहुर्मुहुः समुन्मीलितं रसतत्त्वस्य माहात्म्यम्—

(क) 'स च रसादिर्ध्वनिर्व्यवस्थित एव। न हि तच्छून्यं काव्यं किञ्चिदस्ति'[६]।

---

१. तैत्तिरीयोपनिषदि (ब्रह्मानन्दवल्ल्यां सप्तमेऽनुवाके)।
२. ना.शा., पृ. २७२, ख. १; ३. दश., पृ. १।
४. ध्व., पृ. ३२६; ५. तत्रैव, पृ. ३३६।
६. ध्व.लो., पृ. १७५।

(ख) 'रसेनैव सर्वं जीवति काव्यम्'[१]।

(ग) 'तेन रस एव वस्तुत आत्मा'[२]।

(घ) 'शब्दसमर्प्यमाणहृदयसंवादसुन्दरविभावानुभावसमुचितप्राग्विनिविष्ट-रत्यादि-वासनानुरागसुकुमारसुसंविदानन्दचर्वणाव्यापाररसनीयरूपो रसः। स काव्यव्यापारैकगोचरो रसध्वनिरिति। स च ध्वनिरेवेति। स एव मुख्यतयाऽऽत्मेति'[३]।

अस्य नाट्यात्मभूतस्य रसस्य संस्फूर्त्तिः काव्येष्वङ्गाङ्गिरूपाभ्यां द्विधा। निखिलनाट्याभिनये व्यापितया प्राधान्येन चर्व्यमाणो रसोऽङ्गी, इतरस्तु व्यभिचारिवद् अप्राधान्येन रस्यमानोऽङ्गरसः। भावनिवहे स्थायिभाववत् प्रासङ्गिकवृत्ते चाधिकारिकवृत्तवच्चायं काव्यार्थभूतोऽङ्गिरस उच्चैस्तमसोपान-पङ्क्तिमधिरोहति। तथा हि—

'रसान्तरसमावेशः प्रस्तुतस्य रसस्य यः।
नोपहन्त्यङ्गितां सोऽस्य स्थायित्वेनावभासिनः।।
कार्यमेकं यथा व्यापि प्रबन्धस्य विधीयते।
तथा रसस्यापि विधौ विरोधो नैव विद्यते'[४]।।

अन्यच्च सिद्धान्तितं तैरेवालङ्कारिकमतव्यवस्थापनधुरीणैराचार्यैः—

'प्रबन्धेषु महाकाव्यादिषु नाटकादिषु वा विप्रकीर्णतयाऽङ्गाङ्गिभावेन बहवो रसा उपनिबध्यन्त इत्यत्र प्रसिद्धौ सत्यामपि यः प्रबन्धानां छायातिशययोगमिच्छति तेन तेषां रसानामन्यतमः कश्चिद् विवक्षितो रसोऽङ्गित्वेन विनिवेशयितव्य इत्ययं युक्ततरो मार्गः'[५]।

महाकविभवभूतिविरचितोत्तररामचरितं तावत् समस्तनाट्यविधास्वन्यतमं नाटकमेवेत्यत्र न कश्चित् संशयलेशावकाशः। नाटकगताङ्गिरससमावेश-व्यवस्थाऽपि विहितचरा धनञ्जयाचार्यैः—

'एको रसोऽङ्गी कर्त्तव्यो वीरः शृङ्गार एव वा।
अङ्गमन्ये रसाः सर्वे कुर्यान्निर्वहणेऽद्भुतम्'[६]।।

---

१. ध्व.लो., पृ. १७५;
२. तत्रैव, पृ. ८५।
३. तत्रैव, पृ. ५१-५२;
४. ध्व., पृ. ३७८-३७९।
५. तत्रैव, पृ. ३७८;
६. दश., पृ. ९२।

वीरश्रृङ्गारान्यतरस्याङ्गिभावताऽत्रोररीकृता सागरनन्दि[१]-शिङ्गभूपाल[२]-शारदातनय[३]-विश्वनाथादिभिर्नाटकलक्षणकारैः[४]। अत्र न व्यभिचरति कोऽपि नाट्यलक्ष्मविधायी। तस्मान्नाटकत्वेनोत्तररामचरितस्यापि वीरश्रृङ्गारान्यतरेणाङ्गिरसेन भवितव्यम्। परन्तु संस्कृतसाहित्यमार्मिका इदानीन्तनविपश्चितो नात्र सम्प्रतिपत्तितोऽवतिष्ठन्ते। मैक्डोनेल[५]-विण्टरनित्स[६]-प्रभृतिभिः पाश्चात्त्यैः काणे[७]-कृष्णमाचार्य[८]-राघवादिभिश्च[९] भारतीयैः करुणरसाङ्गितोत्तररामचरितस्य प्रतिपादिता। न केवलमेतन्मतं शास्त्रविरोधि, अपि तु सकलसामाजिकजनानुभवमपि तिरोधत्ते। नाट्याचार्यैरलङ्कारकारैश्च करुणविप्रलम्भकरुणरसयोर्भेदोऽणीयसीशेमुष्या व्युत्पादितो व्यवस्थापितश्च। नाट्यवेदमहर्षिणा रसभरितेन भरतेन विवेचितपूर्वोऽयम्भेदस्तदीये नाट्यशास्त्रे—

---

१. ना.ल.र., पृ. ८२; २. र.सु., पृ. २८५।

३. भा.प्र., पृ. २६६; ४. सा.द., पृ. ३६३।

५. 'The description of the tender love of Rāma and Sītā purified by sorrow exhibits more genuine pathos than appears perhaps in any other Indian drama.' —HSL. (p. 365).

६. 'The poet, however, in this drama finds abundant opportunities for presenting the pathos in its real perspective and in generating in an efficient manner in the mind of his audience the feeling of the sentiment of pity (Karuṇarasa).' —HIL. Vol. III, Pt. I (p. 259).

७. 'He is unrivalled in the treatment of tender human feeling. (Mark the verdict of Saṁskṛta critics—कारुण्यम्भवभूतिरेव तनुते)'. —Introduction to the URC. (XIV).

८. 'In the expression of genuine pathos (Karuṇa) and the description of the wild scenery, it has rarely been surpassed anywhere.' —HCSL. (p. 623).

९. (i) "By Rasa synthesis is meant reducing of all Rasas to the nature of one, a formulation of one as prakṛti and rest as its vikṛtis. No Ālaṅkārika ever attempted a Karuṇa-synthesis; but Bhavabhūti, in his drama Uttararāmacarita, suggested such a synthesis in Karuṇa, and that it assumes the different forms called Sṛṅgāra, etc., even as the same water assumes the forms of whirl, bubble, etc. Karuṇa is the prakṛti, the other Rasas are its vikṛtis. —The Number of Rasas.

(ii) 'This comment has an oblique reference to the play itself, built upon the sentiment of pathos (Karuṇa Rasa)' —NHSL. (p. 341).

(iii) 'Discarding the often repeated sentiment of love, Bhavabhūti selected the ruling theme of pathos and made a perfect job of it.' —SDOD. (p. 182).

'यद्ययं रतिप्रभवः शृङ्गारः कथमस्य करुणाश्रयिणो भावा भवन्ति? अत्रोच्यते—पूर्वमेवाभिहितं सम्भोगविप्रलम्भकृतः शृङ्गार इति। वैश्विक-शास्त्रकारैश्च दशावस्थोऽभिहितः। ताश्च सामान्येऽभिनवे वक्ष्यामः। करुणस्तु शाप-क्लेश-विनिपतितेष्टजनविभवनाश-वधबन्धसमुत्थो **निरपेक्षभावः**। औत्सुक्यचिन्तासमुत्थः **सापेक्षभावो** विप्रलम्भकृतः। एवमन्यः करुणोऽन्यश्च विप्रलम्भ इति। एवमेष सर्वभावसंयुक्तः शृङ्गारो भवति'[१]।

एतेन तावदपेक्षायाः सद्भावे विप्रलम्भः, तदभावे च करुणो रस इति व्यवस्था शैलूषशास्त्रिपितामहस्य महामुनेः। अस्यैव तत्त्वस्यावदाततरं विवेचनं शृङ्गारप्रकाशकारेण महाराजभोजेन विततम्—

'रत्येकहेतुः करुणः, प्रीतिदयाद्यनेकहेतुः शोकः। पुनःसङ्गमफलः करुणः, अपुनःसङ्गमफलः शोकः। स्त्रीपुंसविषयः करुणः, अस्त्रीपुंसविषयः शोकः। सप्रत्याशरूपः करुणः, निष्प्रत्याशरूपः शोकः। इत्यन्य एव शोकः, अन्यश्च करुणः'[२]।

एवं हि करुणविप्रलम्भ-शोकस्थायिभावकरुणयोश्च हेतु-फल-विषय-स्वरूपचतुष्टयगतः सार्वत्रिको भेदः समुल्लसति। नवीनेनापि पण्डितराजजगन्नाथेन स्वीये रसगङ्गाधरेऽनयोर्भेद एवम्प्रत्यपादि—

'स्त्रीपुंसयोस्तु वियोगे जीवितत्वज्ञानदशायां वैक्लव्यपोषिताया रतेरेव प्राधान्याच्छृङ्गारो विप्रलम्भाख्यो रसः। वैक्लव्यन्तु सञ्चारिमात्रम्। मृतत्वज्ञानदशायान्तु रतिपोषितस्य वैक्लव्यस्येति करुण एव। यदा तु सत्यपि मृतत्वज्ञाने देवताप्रसादादिना पुनरुज्जीवनज्ञानं कथञ्चित् स्यात्, तदालम्बनस्यात्यन्तिकनिरासाभावाच्चिरप्रवास इव विप्रलम्भ एव। न स करुणः। यथा चन्द्रापीडम्प्रति महाश्वेतावाक्येषु। केचित्तु रसान्तरमेवात्र करुणविप्रलम्भाख्यमिच्छन्ति'[३]।

एवं तावत्स्थितेषु शृङ्गारकरुणरसयोर्नैकेषु भेदेषु भवभूतिविरचितोत्तर-रामचरिते कथङ्कारङ्करुणरसस्फुरणाशङ्कानुगमनमिति तु नैव जानीमः। अत्रत्यनायकौ सर्वत्र सापेक्षभावभरसम्भृतौ। भगवती सीताऽऽद्याङ्कादाऽन्त्याङ्कं यावद्रामविषयकसापेक्षभावमयरतिपात्रतामावहन्ती सामाजिकजनमानसेषु शृङ्गारमात्रवैचित्र्यचमत्कारानातनोति। तथैव भगवान् रामभद्रोऽपि प्रथमतः

---

१. ना.शा., पृ. ३०८-३१०।

२. Raghavan : Sṛṅgāraprakāśa. (p. 60).

३. रस., पृ. ३९।

सप्तमाङ्कपर्यन्तं सीतालम्बनात्मक-सापेक्षभावरूपरतिस्थायिभाव-शृङ्गाररसस्यैवाभिव्यञ्जकतामेति। तस्मात् करुणकणिकावकाशशङ्काऽपि नैव समुदेतीति भरतमुनिमतेनात्र विप्रलम्भ एवेति स्थितमेव। भोजराजोक्तरीत्याऽप्यत्र रत्येकहेतुत्वाद् दयाद्यनेकहेत्वभावात् सीतारामपुनःसङ्गमफलकत्वात् स्त्रीपुंसविषयत्वात् सप्रत्याशरूपत्वाच्च करुणविप्रलम्भ एव प्रतीतिपथमवतरति सचेतसश्चेतसीति निश्चप्रचम्। शोकस्थायिभावात्मा करुणस्तु नितरान्नभोनलिनायते। पण्डितराजजगन्नाथस्य सिद्धान्तशय्याधिशयने सर्वत्र जीवितत्वज्ञानदशानपायादात्यन्तिकनिरासाभावाच्चालम्बनस्य चिरप्रवासरूपो विप्रलम्भ एव मतान्तरेण वा करुणविप्रलम्भः। सीतारामान्यतरस्य नारायणाङ्कनिलयाववबोधजन्यालम्बनात्यन्तिकनिराससद्भाव एव करुणसमुद्भवप्रसङ्गादत्र तस्य कृते संस्फुरणावसर एव नोदेति। तस्मात् समस्तशास्त्रकारोक्तसिद्धान्तपक्षसमाश्रयणे करुणरसशङ्कावकाशनिरासपूर्विका रतिस्थायिभावात्मकशृङ्गाररसप्रतिपत्तिरेवात्र सुतरां प्रसज्यते।

अथ रसाधिष्ठानविषयकास्त्रयः पक्षाः सम्भवन्ति, अनुकार्यगतत्वेनानुकर्तृगतत्वेन सामाजिकगतत्वेन वा तस्याभिमतत्वात्। लोल्लटभट्टेन मुख्यया वृत्त्या रामादावनुकार्ये रसाधिष्ठानन्निर्णीतम्। अस्मिन् पक्षेऽपि करुणरसस्य पुष्टिर्नैव सम्भावनावर्त्मावतरति नाटकेऽस्मिन्। यतो हि, रामालम्बनः सीताश्रयः शोकस्थायिभावस्तदात्यन्तिकनिरासाभावादुत्पद्यत एवेति न, तदीयनयनानन्ददायितयाऽऽलम्बनस्य प्रथमाङ्कादा सप्तमाङ्काच्च निरन्तरं रतिविभावत्वेन वर्त्तमानत्वात्। अथ सीतालम्बनो रामाश्रयश्चेत् करुणस्तस्यापि सम्भवविरह एवायातितराम्, आलम्बनस्य मृतत्वज्ञानदशायाः सुतरामभावात्। प्रत्युत सर्वत्र सप्रत्याशताया व्यापितया रतेरेवात्र साम्राज्यम्। अन्यथा भगवत्या पृथिव्या— 'एहि वत्से! पवित्रीकुरु रसातलम्' इति व्याहृते सति भगवान् रामभद्रः—'हा प्रिये! लोकान्तरं प्रस्थिताऽसि[1]?' इति नैव प्रतिवदेत् सप्तमेऽङ्के। अथ च तत्रैव सीतावसुन्धराभागीरथीभिर्निष्क्रमणे कृते सति भगवतः—'कथं प्रतिपन्न एव तावत्? हा चारित्रदेवते! लोकान्तरे प्रस्थिताऽसि[2]' इति समुदाहृतिस्तावदौचितीं नोपवहेत्। एवंविधा ह्याकस्मिकी वाचोयुक्तिस्तावत् सीताया जीवितत्वज्ञानदशायामेव सम्भववर्त्म समवतरति। अन्यथा तत्र विस्मयावबोधः पर्य्यनुयोगयोगो वा नैवोद्भवेताम्। अनन्तरमेव च गाङ्गाम्भसः पुण्यतोयापृथिवीभ्यां देवताभ्यां सहार्या सीता मूर्च्छितरामसमाश्वासनाय समुपैति, पवित्राश्चर्यमयश्चोभयसंयोगयोगः संघटते। एतेनानुकार्यगतत्वेऽपि

---

१. उत्तर., पृ. ३५२; २. तत्रैव, पृ. ३५३।

रसस्य शृङ्गारस्यैव विजृम्भणविज्ञापनसम्पोषणानि नाटकेऽस्मिन्ननुष्ठितानि। नात्र विमतिः काचन कस्यचिदपि भवितुमलम्।

अनुकर्तृगतत्वेऽपि रसस्य शृङ्गार एव प्रसज्यते, न तु करुणः। अनुकर्त्तरि च नटे रामादिरूपतानुसन्धानबलादेव लोल्लटादिभिः प्रतिपादिता रसस्थितिः। तत्र तु करुणः सर्वथैवाकाशरोमन्थायते। नाट्यदर्पणकाराभ्यामपि वारविलासिनीवन्नटेऽपि कादाचित्क्येव रसस्थितिरुररीकृता। सीता-रामानुकारिभ्यां नटाभ्यां निरन्तरदर्शनस्पर्शनादिभिः परिपोषमुपगताया रतेरेव कादाचित्कावभासे सत्यपि तद्रूपतानुसन्धानादपि शृङ्गारप्रतिपत्तिरेव सम्भवितुं शक्यते। करुणरसवार्ताऽपि प्रियपञ्चताप्राप्तेरभावे सुतरां शशशृङ्गायते। एतत् पक्षद्वयमपि वस्तुतः पूर्वपक्षपात्येव ध्वनिसिद्धान्ताद् दूरविभ्रष्टम्।

तार्तीयकः पक्ष एवालङ्कारिकसरणीमनुहरति। सामाजिकनिष्ठतैव रसस्यानन्दवर्द्धनाभिनवगुप्तादिभिः सकलसहृदयमौलिमणिरिव प्रमाणीकृता शिरसि च स्थापिता। विशदीभूतमनोमुकुरवर्णनीयतन्मयीभवनयोग्यतामयस्व-हृदयसंवादभाजि सहृदयहृदये सहचरसाहचर्यैकपर्यवसाय्यविरतसापेक्षभावत्वात् करुणरसोचितशोकस्थायिभावादन्य एव विप्रलम्भशृङ्गारोचितरतिस्थायिभावो लौकिकरतिव्यतिरिक्तां स्वचित्तद्रुतिसमास्वाद्यसारतां प्रतिपन्नोऽभि-व्यक्तिरूपचर्वणाविषयीभूतोऽलौकिकचमत्कारात्मा शृङ्गाररसास्वादः। अस्मिन् पक्षे करुणादिशङ्का सर्वथैव परिहर्त्तव्या। सामाजिकजनलोचनासेचनकताङ्गतौ सीतारामावुभावपि निरन्तरसन्निहितौ सन्तौ मनागपि जीवितत्वाभावशङ्कां तयोरेकतरविषयिकां कदाचिदपि नैव जनयतः, नैव चान्योन्यनैरपेक्ष्यमीषदपि कदाचन कुर्वतः, अथ च तयोः पुनःसङ्गमफलकत्वात् स्त्रीपुंसविषयत्वादनु-रागैकमूलत्वात् सप्रत्याशरूपत्वाच्च रत्येकविषयतामेवास्य द्रढयतः। एतेनामूलात् करुणप्रसङ्गनिरासः सुतरां प्रसक्तः। एतेनास्मिन्नयेऽपि करुणरसोन्मेषवार्ताऽपि सर्वथैव वन्ध्यापुत्रायते।

तस्मात् पक्षत्रितयेऽपि विधुरीभूते शोकप्रसङ्गे करुणरससम्भावनैव दूरे प्रतिहता। एतेनास्य रसस्य अङ्गिताया अङ्गताया वा प्रश्न एव न स्फुरति। रससम्प्रदायवन्ध्याः शास्त्रमर्यादापराङ्मुखा एव पाश्चात्त्यचिन्तनविपर्यस्तचेतनाः शेमुषीतपस्विनः करुणाङ्गितापक्षप्रतिपादनैकसाहसिकतां प्रकाशयामासुः। नाटकलक्षणविचक्षणा रसविचारदृक्चारचुञ्चवश्च नाट्यशास्त्रमर्मज्ञा उत्तररामचरिते शृङ्गाराङ्गितामेव प्रतिपादयितुमलम्।

अथ केचन काव्यकाञ्चनकषाश्ममानिन एतस्यैव नाटकस्य काश्चन व्याहृतीः समुद्धृत्य करुणरसाङ्गितां समर्थयन्ति। ता उक्तयो यथा—

'अनिर्भिन्नो गभीरत्वादन्तर्गूढघनव्यथः।
पुटपाकप्रतीकाशो रामस्य करुणो रसः'[१]।। इति।

'एको रसः करुण एव निमित्तभेदाद्
भिन्नः पृथक्पृथगिव श्रयते विवर्तान्।
आवर्तबुद्बुदतरङ्गमयान् विकारा-
नम्भो यथा सलिलमेव हि तत् समस्तम्'[२]।। इति।

'त्रस्तैकहायनकुरङ्गविलोलदृष्टे-
स्तस्याः परिस्फुरितगर्भभरालसायाः।
ज्योत्स्नामयीव मृदुबालमृणालकल्पा
क्रव्याद्भिरङ्गलतिका नियतं विलुप्ता'[३]।।

एते मतिमन्मानिनो वाच्यार्थमात्रसर्वस्वाः प्रतीयमानार्थानाकलनेन रससम्प्रदायबाह्या एव। 'रसस्तु स्वप्नेऽपि न वाच्य' इति तत्त्वविदः। एताः शब्दगुम्फमय्य उक्तयस्तु केवलं विभावानुभावसंयोजनात्मिकाः। नैव तद्वाच्यार्थगता रसादिप्रतीतिर्भवितुमर्हति। 'करुणो रस' इति 'रसः करुण' इति च वर्णानुपूर्व्योर्वाच्यार्थगत एव करुणरसरूपार्थावबोधो भवितुमर्हति, यदि च तत्र सोऽन्यथा संयोगाद्यैर्नियन्त्रितो न स्यात्। रसचर्वणा रसवाचकशब्देन स्वप्नेऽपि भवितुं नैव शक्या। प्रत्युत स रसवाचकशब्दः शल्यभूत एव स्यात्, नित्यदोषप्रतिपादकत्वापत्तेः। स्वशब्दनिवेदितत्वस्य रसविघातकत्वात् काव्यत्वावच्छेदकविच्छेदप्रसङ्ग एवोदियात्। उक्तं हि तावदालङ्कारिकमत-व्यवस्थापकाचार्येणानन्दवर्द्धनेन—

'प्रसिद्धिश्चेयमस्त्येव विदग्धविद्वत्परिषत्सु यदभिमततरं वस्तु व्यङ्ग्यत्वेन प्रकाश्यते न साक्षाच्छब्दवाच्यत्वेन'[४]।

अथ चास्य स्वशब्दवाच्यतां लौकिकव्यवहारगामिताञ्च समुपपादयन्नाहाचार्याभिनवगुप्तपादः स्वकीये ध्वन्यालोकलोचने—

(क) 'यस्तु स्वप्नेऽपि न स्वशब्दवाच्यो न लौकिकव्यवहारपतितः, किन्तु शब्दसमर्प्यमाणहृदयसंवादसुन्दरविभावानुभावसमुचितप्राग्विनिविष्टरत्यादिवासनानुरागसुकुमारस्वसंविदानन्दचर्वणाव्यापार-

---

१. उत्तर., पृ. १३०; २. तत्रैव, पृ. २०६-२०७।
३. तत्रैव, पृ. १७४-१७५; ४. ध्व., पृ. ५३३।

रसनीयरूपो रसः, स काव्यव्यापारैकगोचरो रसध्वनिरिति। स च ध्वनिरेवेति'[१]।

(ख) 'तस्मादभिधातात्पर्यलक्षणाव्यतिरिक्तश्चतुर्थोऽसौ व्यापारो ध्वनन-द्योतनव्यञ्जनप्रत्यायनावगमनादिसोदरव्यपदेशनिरूपितोऽभ्युपगन्तव्यः'[२]।

(ग) 'रसभावतदाभासतत्प्रशमाः पुनर्न कदाचिदभिधीयन्ते। अथ चास्वाद्यमानप्राणतया भान्ति, तत्र ध्वननव्यापारादृते नास्ति कल्पनान्तरम्'[३]।

(घ) 'रसभावादिरर्थो ध्वन्यमान एव भवति न वाच्यः कदाचिदपि'[४]। इत्यादि।

विपक्षधृतप्रथमपद्यस्याभिप्रेतार्थद्वयं हि परस्परोपमेयोपमानपक्षौ प्रकटयति। प्रस्तुते तु—'अनन्यो गाम्भीर्यगुणयुक्तत्वादन्तःकरणनिगूहितसान्द्रसन्तापश्च पुटपाकतुल्यो रामनिष्ठः कृपापूर्णः (सीताविषयकः) रागः' इति। अप्रस्तुतपक्षे हि—'अविदीर्णो निम्नवर्त्तित्वान्मध्यसंवृतदृढतापश्च करुणवृक्षगतः पारदमयः पुटपाकः' इति। कोशाश्चात्र—'भिन्नोऽन्यः सङ्गतः फुल्लो दीर्णः' इत्यनेकार्थसङ्ग्रहः। 'निम्नं गभीरं गम्भीरम्' इत्यमरकोशः। 'अन्ता रन्ध्रावकाशयोर्मध्ये विनाऽर्थे तादर्थ्ये विशेषेऽवसरेऽवधौ। आत्मीयात्म-परिधानान्तर्ध्यबाह्येषु' इत्यनेकार्थसङ्ग्रहः। 'गूढं रहः संवृतयोः' इति हैमः। 'घनः सान्द्रे दृढे दार्ढ्ये विस्तारे मुद्गरेऽम्बुदे' इत्यनेकार्थसङ्ग्रहः। 'करुणा तु कृपायां स्यात् करुणो रसवृक्षयोः' इति, 'रसः स्वादे जले वीर्ये शृङ्गारादौ विषे द्रवे। चोले रागे देहधातौ तिक्तादौ पारदेऽपि च'।। इति चानेकार्थसङ्ग्रहः।

अत्र सहृदयहृदयैकगोचरचर्वणारूपचमत्कारस्य नाट्यरसस्य रामनिष्ठत्वेन कल्पनं सर्वथा शास्त्रबाह्यम्। लोकगतत्व एव तस्य तन्निष्ठता नान्यथा। तथात्वेऽपि रसस्य तस्य निर्भेदानिर्भेदौ घनव्यथताऽघनव्यथता गम्भीरताऽगम्भीरता च भवभूतिसम्मतताङ्गच्छेयुः। नैतावदेव, अपि तु तदीयाऽन्तर्गूढताऽनन्तगूढताऽपि सम्भावनावर्त्म यास्यतः। एतेनास्य लोल्लटसम्मतनायकगतत्वमपि दुःशकमेव, तस्यान्तर्निष्ठत्वेनैव समपेक्षितत्वात्। पदानामेतेषामविशेषणत्वे लक्षणरूपत्वे च रामस्येति पदस्य वैयर्थ्यं सम्भवेदथ च सर्वत्र करुणस्यानिर्भिन्नतैवापतेत्। तस्मादत्र प्रत्यवमर्शात्मचितिरूपस्य

---

१. ध्व.लो., पृ. ५१-५२;
२. तत्रैव, पृ. ६१-६२।
३. तत्रैव, पृ. ७८;
४. तत्रैव, पृ. २४८।

चमत्कारापरपर्य्यायस्य करुणरसपदार्थत्वेनाभीष्टत्वशङ्का नैव कार्या। रागार्थपक्ष एव सुतरां समर्थनीयः।

द्वितीये पद्ये तु नैके विद्वांसः शास्त्रप्रतिपक्षिताङ्गताः। एतेनैव तैः कवेः करुणरसवादिताऽपि समुद्घोषिता। विद्वद्वरराघवप्रभृतिभिरत्र करुणस्य प्रकृतित्वं रसान्तराणाञ्च विकृतित्वं समर्थ्य तावदव्यक्तदशायां रसान्तराणां करुणमात्रात्मता प्रतिपादिता। परन्तु कविना त्वत्र वस्तुप्रतिवस्तुरूपेणैव विवर्तविकारौ परिगृहीतौ। एतेन विवर्तस्य तात्त्विकासद्रूपता नैव सम्भवति। व्यक्तरसान्तराणां विकाररूपत्वे परिणामवाद एव प्रसक्तो भवति। अध्यस्तविवर्तस्य मिथ्यात्वपक्षोऽत्र नैव सङ्घटते, दृष्टान्ते विकारपदोपादानात्। अथ विकारपदस्य लाक्षणिकत्वे विवर्तरूपार्थपरत्वेऽपि निमित्तभेदादिति भिन्न इति श्रयत इति च पदानां विपरीतार्थबोधकत्वं वैयर्थ्यं वा समापतिष्यति। अन्यच्च तत्र रूढिप्रयोजनयोरभावः, तद्योगासम्भवश्च। अपि चात्र मुख्यार्थबाधोऽपि, विवर्तस्य विकाररूपत्वे समभीष्टे कृते, नैव स्पृशति। एवं हेतुत्रितयस्य हेतुद्वयस्य वाऽसत्त्वे लाक्षणिकत्वमपि विकारपदस्य नैव सम्भवति। अर्थान्तरग्रहणे शक्त्यन्तरस्यानुपाश्रयणीयत्वात् पदयोर्द्वयोर्वस्तुप्रतिवस्तुभावपक्ष एव ज्यायान्। तथात्वे च स्वरूपस्य विनाशेऽविनाशे वा द्रव्यान्तरारम्भ-कत्वमेवाभिप्रेतम्। यथा दुग्धादेर्दध्याद्यारम्भकत्वम्, बीजादेर्वृक्षकाद्यारम्भकत्वं वा। साङ्ख्यदृशा वा दुग्धादेर्दध्यादिरूपेण परिणाम एव विकारः। एष एव सत्कार्यवादो भवभूतेरभिमत इति चेत्, न, द्वैतस्य दुर्वारत्वाद् व्यक्ताव्यक्तावुभावपि सन्तावेव। प्रकृतिविकृती उभेऽपि सत्यौ। परन्तु एतेन 'एक' इति 'एवे'ति च, 'अम्भो यथा सलिलमेव च तत् समस्तम्' इति पदोपादानमपार्थं स्यात्। अथ यथा परमशिवस्य पारमार्थिकसत्त्वेऽपि शक्तिपरिस्पन्दरूपविश्वप्रपञ्चस्य सत्त्वे शङ्का नैव कार्या, तथैवात्र करुणरसो रसान्तरञ्चोभयमपि सत्। परमार्थतश्च शैवाद्वैतवदत्राप्येक एव द्वयोरभेदात्। एषोऽपि परिहारः सुतरामसङ्गतः सर्वथा परिहरणीयश्च। शक्तिशक्तिमतोरभेद एव प्रसज्यते न तु प्रकृतिविकृतिभावः। विमर्श एव प्रकृतिविकृतिभावः सम्भवति, न तु प्रकाशरूपे। शक्तितत्परिस्पन्दयोः प्रकृतिविकृतिभावो यथा समर्थ्यते तथैवात्रेति चेत्, न, 'एक एव' इति विशेषणस्य वैयर्थ्यात्। तस्मादत्र शैवाद्वैतसाङ्ख्ययोगवन्न परिणामः। रामानुजनयेऽपि द्वैतत्वापत्तेः 'एक एवे'-त्यादिपदानामपार्थतैव सम्पद्यते। तस्मादत्र परिणामवादमनुसृत्य प्रकृतिविकृतिभावो नैव भवितुमर्हति। न्यायवैशेषिकनये प्रागभावप्रध्वंसाभावौ 'एक एवे'-त्यादिपदोपादानविरोधिनौ सन्तौ प्रकृतिविकृतिभावं बाधेते। तस्मादत्र प्रकृतिविकृतिभावो हि कौतस्कुत्यः? कथङ्कारञ्च स शास्त्रमनुरुणद्धि?

किम्प्रकारकश्चासौ? इति परिच्छेत्तुं नैव शक्यते। तस्मादलमतिशास्त्रप्रसङ्गेन। यतो हि तावदिदमपि विभावानुभावसंयोजनात्मकमभिनेयपदार्थवाक्यार्थकं दृश्य-काव्यम्। अत्रापि वाच्यार्थपूर्विका प्रतीयमानरसादीनाम्प्रतिपत्। अत्रापि शब्दार्थौ तमर्थमुपसर्जनीकृतस्वार्थौ व्यङ्क्तः। तत एवास्य शब्दगुम्फस्य काव्यत्वम्। नात्र वाच्यः कश्चन रसः। नात्र भवभूतिः कमपि रससिद्धान्तं प्रतिपादयति। अत्रानुकार्यायास्तमसाया एव रसनिःस्यन्दनिष्पादिनी मार्मिकी भणितिः। नाट्यकाराणां सिद्धान्तप्रतिपत्तिः प्रस्तावनाभरतवाक्ययोरेव लोचनगोचरताङ्गच्छति नान्यत्र रसप्रतीतिवैकल्यात्। संस्कृते शास्त्रस्थितिसम्पादनेच्छा वारिता शास्त्रकृद्भिः। रसैकतानमानसेन कविनाऽत्र भवितव्यमिति च प्रतिपादितम-लङ्कारकारैः। तस्माद् व्युत्पित्सूनामविद्यानिवारणविद्याप्रवर्तने कान्तासम्मिततया सरसतापादनेन गुडजिह्विकया विधीयेते, 'प्रथमालीढमधवः पिबन्ति कटुभेषजम्' इति शास्त्रकृत्प्रवर्त्तितन्यायात्। ते च पुरुषार्थचतुष्टयावष्टब्धशास्त्रमर्यादा-विषयात्मके एव परिगृह्येते नेतरे। नाट्यशास्त्रमर्यादा तु नाट्यकाराणा-मनुवर्तनमात्रार्था न तु नूतनमतोपन्यासावसरोपस्थापनार्था। शिङ्गभूपविश्वनाथ-महापात्रप्रभृतिनाट्यकृद्भिर्नाट्यसिद्धान्तगतस्वोपज्ञमतविस्फोरणाय प्रतिपित्सुभि-र्नाट्यशास्त्रग्रन्थ एवालेखि। तैरपि स्वीयः सिद्धान्तो रूपकेषु नैवोपन्यासि। यदि चात्र करुणरसवादरूपं वस्तुव्यङ्ग्यत्वेनाभिमन्यते तदपि कविनिबद्ध-वक्तृप्रौढोक्तिसिद्धमेव भवितुमर्हति; यतो हि करुणरसस्य नात्र प्रतीतिः सहृदयानाम्। अन्यथा सर्वत्र तद्वाचकपदद्वारेण शास्त्रवाक्येष्वपि स प्रतीयेत। कविनिबद्धवक्तृप्रौढोक्तिसिद्धपक्षेऽपि वाच्यस्यापि व्यङ्ग्यत्वमिति नवीनेयं वादशैली स्यात्। वाच्यभिन्नस्यैव तावदर्थस्य प्रतिपादनाय ध्वनिसमाख्यशक्त्यन्तरोपास्तिः प्रसज्यते नान्यथा। तथात्वे च वाच्यस्यैव नामान्तरकरणे किम्मानं स्यादिति नैवायं पक्षो विमर्दक्षमः। तस्मात् स्थितमेतत्—करुणरसस्य प्रतीतिरत्र कथमपि न सम्भवति नैव चास्य प्रकृतिभावः सर्वरसानाम्प्रति कथमपि साध्यतां याति।

वाच्यार्थतात्पर्यार्थविवेकेनाप्यत्र शोकस्थायिभावात्मककरुणरसस्य प्रतिपत्तिर्नैव भवितुमर्हति। अत्रत्यौ रस-करुण-शब्दौ नानार्थकौ। कोशवचने तु पुरस्तादेव समुद्धृते। नानार्थकपदोपादाने सति संयोगादिभिरभिधा नियन्त्रिता भवति। चमत्कारापरपर्यायरूपरसस्य स्वशब्दनिवेदितत्वरूपदोषावहत्वाद् व्यङ्ग्यतयैव च काव्ये प्रतिपादनार्हत्वादथ चालौकिकस्वरूपत्वादेवञ्च विवर्तश्रयणाक्षमत्वादत्र वाच्यता निवर्त्यते। केवलं लौकिकोऽन्वित्यनुकूलो रागरूपवाच्यार्थ एव सङ्गतिमर्हति दोषविशेषपरिहारात् काव्ये वाच्यरूपेण प्रस्तावार्हत्वाद् विवर्तश्रयणसमर्थत्वाच्च। अन्यच्चायमेवार्थोऽत्र

समस्तपदार्थान्वयभरसहिष्णुः। उक्तं हि तावद्रसमतविवेचकमौलिमणिनानन्दवर्द्धनाचार्येण—

'शृङ्गाररसो हि संसारिणां नियमेनानुभवविषयत्वात् सर्वरसेभ्यः कमनीयतया प्रधानभूतः'[१]।

समुद्धृता चेयङ्कारिका तेनैव—

शृङ्गारी चेत् कविः काव्ये जातं रसमयं जगत्।
स एव वीतरागश्चेन्नीरसं सर्वमेव तत्'[२]॥

तथैवाभिनवगुप्तपादाचार्येणापि—

'रतौ हि समस्तदेवतिर्यङ्नरादिजातिष्वविच्छिन्नैव वासनाऽस्ति इति न कश्चित् तत्र तादृग् यो न हृदयसंवादमयः, यतेरपि तच्चमत्कारोऽस्त्येव। अत एव मधुर इत्युक्तम्। मधुरो हि शर्करादिरसो विवेकिनोऽविवेकिनो वा स्वस्थस्यातुरस्य वा झटिति रसनानिपतितस्तावद् अभिलषणीय एव भवति'[३]।

महाराजेन भोजेनापि प्रकटितं शृङ्गारप्राधान्यम्—

(क) 'तस्माद् रत्यादयः सर्व एवैते भावाः, शृङ्गार एवैको रसः'[४]।

(ख) 'रत्यादयोऽर्धशतमेकविवर्जिता हि
भावाः पृथग्विविधभावभुवो भवन्ति।
शृङ्गारतस्तमिह ते परिवारयन्तः
सप्तार्चिषं द्युतिचया इव वर्धयन्ति'[५]॥

रागस्य वाच्यतास्वीकारेण रतिस्थायिभावात्मकशृङ्गाररस्य ध्वन्यमानतैवायातितराम्। तेन च संस्कृतनाट्यशास्त्रे प्रायेण प्राधान्यमुपेयुषः शृङ्गाररस्यैव महिमा प्रतिपादितो भवति। तस्य विशेषणत्वेन करुणपदोपन्यासोऽपि सङ्गतिं भजते। यतो हि करुणविप्रलम्भः करुणशृङ्गारो वा तस्य भेदत्वेन समाकलितः प्रायः सर्वत्र। एवमभिमततरवस्तुनो व्यङ्ग्यत्वमप्यायाति, समस्तदोषाणां च परिहारोऽपि सुतरां सम्भवति। नैकनाट्याचार्यसमर्थिततत्त्वताऽपि पद्यार्थे प्राप्यते।

प्रसङ्गेऽपि 'अहो संविधानकम्'[६] इत्येतावत्युक्ते सति तमसया तत्र पद्यस्यास्य पदार्थाभिनयो वाक्यार्थाभिनयश्च प्रस्तूयेते। तस्मात्

---

१. ध्व., पृ. ३९७;
२. तत्रैव, पृ. ४९८।
३. ध्व.लो., पृ. २०५;
४. शृ.प्र., ख. २, पृ. ४३०।
५. तत्रैव, ख. २, पृ. ४३६;
६. उत्तर., पृ. २०६।

सीतादर्शनवञ्चितरामभद्रस्य प्राणाधिकप्रियतमाविषयको पतिदेवतासपर्यावञ्चित-सीतायाश्च परमदैवतभूतप्रियतमविषयको राग एवात्र स्तूयते। तृतीयाङ्कगतसंविधानकविशेषे स एवोभयानुरागः पराङ्कोटिमुपनीतः। स चालम्बनसान्निध्येऽपि वियोगात्मक इति विस्मयकारित्वादेवात्र 'अहो'-पूर्विकोक्तिः। अथ च भोजराजप्रतिपादितदिशा स एव शृङ्गारः समस्तभावप्रभवत्वम्भजते। तथा हि—

(क) 'तत्र केचिदाचक्षते—'रतिप्रभवः शृङ्गार' इति। वयं तु मन्यामहे रत्यादीनामयमेव प्रभव इति। शृङ्गारिणो हि रत्यादयो जायन्ते नाशृङ्गारिणः'[१]।

(ख) 'तन्त्वात्मनोऽहङ्कारगुणविशेषम्ब्रूमः। स शृङ्गारः सोऽभिमानः स रसः। तत एते रत्यादयो जायन्ते'[२]।

एतादृशी हि व्यवस्था रागरूपवाच्यार्थतो ध्वन्यमानस्य शृङ्गाररसस्य। रागस्यापि विषये शृङ्गारप्रकाशे द्वाविंशतितमे प्रकाशे द्वादशसहस्राणि शतद्वयमष्टाशीतिश्च (१२,२८८) मुख्या विकृतिभेदाः परिगणिता लक्षिताश्च। तेषु सर्वेषु प्रमुखविकारेषु एक एव रागः समुल्लसति। उक्तञ्च—

'द्वादशैवं सहस्राणि साष्टाशीतिशतद्वयी।
भवन्ति कामशृङ्गारे मूलप्रकृतयः पृथक्॥

व्यतिषङ्गादमूषान्तु साम्याधिक्याल्पताकृतः।
न पर्यन्तो विकल्पानामेकद्वित्र्यादियोगतः॥

चतुःषष्टिं पश्यन् प्रथममभिलाषप्रभृतिका-
नथाष्टौ नित्यादीन् पृथगपि चतुर्विंशतिविधान्।
मिथो मिथ्या-सम्यक्-समधिक-समत्वानि विमृशन्
कविः कुर्यात् स्रोतोऽनुगुणमनुरागव्यतिकरम्'[३]॥

एतेषामनुरागभेदानां व्यतिषङ्गभेदजन्यविकल्पानां पर्यन्तस्तावत्सङ्ख्या-मतिवर्तते। तेष्वेक एव रागः, प्रकर्षगामी सर्वत्र व्यापी च। ते तु विकारा आवर्तादिवद् असङ्ख्याः। समस्तेषु च तेषु सलिलवद् राग एक एव नाम लभते।

तस्मात् पद्यस्यास्येयमेव व्याख्यासरणिः शास्त्रानुमोदिता सकलाचार्यपरम्परामनुहरति। एषैव चानुसर्तव्या। अन्यथा नाटकलक्षणविरोधः

---

१. शृ.प्र., ख. २, पृ. ४३०; २. तत्रैव, ख. २, पृ. ४३१।
३. तत्रैव, प्र. २२, पृ. ५१।

स्यात्, सकलकविपरम्पराबाह्यत्वमापतेत्, स्वशब्दनिवेदितत्वन्नाम दोषः समुद्भवेत्, समस्तनाट्याचार्यपरम्परा भज्येत, अभिधानियन्त्रणनियमनिरासः समापतेत्, पदार्थेषु पौर्वापर्यविरोधात् तात्पर्यव्यत्यास उदियात्, सर्वदर्शनसम्मतमतवैमत्यमागच्छेत्, सहृदयहृदयानुभवप्रमाणप्रामाण्यं खण्ड्येत, निखिलरसलक्षणप्रणाली विपरीयात्, सचेतोनिवहवक्षःकौस्तुभायमानध्वनि-सिद्धान्तशय्या च विशकलिता भवेत्।

तृतीये पद्ये नियतमिति पदमेव सकलविवादमूलम्। अत्रत्या वीरराघवव्याख्यैव प्राश्निकशङ्काशङ्कुमुत्पाटयति—'नियतमिति सम्भावनायाम्'[१] इति तस्यामध्यवसायबीजारोपसमर्थकवाक्यं जागर्त्तितराम्। अनेनैव पदेनात्रोत्प्रेक्षासमर्थकाध्यवसायसाध्यमानतामात्रं समुद्भवति। तस्मादत्र न भूतार्थपरता, अपि तु कल्पितार्थसम्भावनपरतैव तात्पर्यविषयत्वमेति। तस्मादनुत्थानोपहत एवात्र पूर्वपक्षः।

एवमस्त्यत्र सहृदयहृदयसन्दोहवशीकरणमहामन्त्रायमाणः करुणशृङ्गार एवाङ्गिभूतो रसः। स एव सकलविश्वप्रपञ्चवासनाप्राणभूतः कमनीयतमः सचेतश्चमत्कारात्मानुभवो भवभूतेरौत्तरकालिककाव्यप्रणयनपाटवस्य परमाराध्यतामगमत्। मालतीमाधवप्रकरणे तेन कामशृङ्गारः प्रधानतयोपन्यस्तः। अर्थशृङ्गारस्य तद्विदासु जघन्यतां पर्यालोचयता नाट्यकृन्मौलिमणिनाऽत्र धर्मशृङ्गारः समुपनिबद्धः। परन्तु सूक्ष्मेक्षिकावन्तश्चक्षुष्मन्तोऽत्र तस्य धर्मशृङ्गारस्यापि पर्यवसानं मोक्षशृङ्गारस्य सत्यलोकात्मिकासु भूमिकासु नयनचुलुकनीयतां नयन्ति। चित्रदर्शनाङ्के शृङ्गारः पूर्णतया सुमानुषधर्ममयतां भजते। परित्यागानन्तरं वियुक्तनायकगतराजर्षिसंस्कारानुस्यूतः सन् पावकपावकत्वतिरस्कारकपावित्र्यप्रकर्षपरिपूर्णनायिकापुण्यमनोऽरण्यनिवासेन दिव्यतामादधानो धर्मशृङ्गारो रसातलगताया नायिकाया दिव्याङ्गनावर्ष्मलाभाद् भगवतीभागीरथीदेवयजनासमुल्लासिततया च यादृक्षीमपार्थिवतामुपस्थापयति तथा च राज्याश्रमनिवासस्यापि प्राप्तकष्टमुनिव्रतस्य लोकोत्तरसत्त्ववतो जगत्पतेर्नायकस्य यादृशीं देवात्मतामुपपादयति सा स्वर्गादपि महीयसी। तयोर्नायकयोः सङ्गमः समस्तस्वर्ग्यदेवताभिरभ्यर्थ्यते, वेदमन्त्र-साक्षात्कर्तृभिर्ऋषिभिरभिष्टूयते, सकललोकपालैः कृत्स्नभूतग्रामैश्च समभिवाद्यते। सोऽयमपार्थिवोऽलौकिको दिव्यातिशायी च शृङ्गार आध्यात्मिक-परमनिर्वृतिमानन्दैकमयीं मोक्षैकदशागतकैवल्यस्वातन्त्र्यपूर्णतामातनोति। एवञ्च

---

१. उत्तर., पृ. १७६।

मर्त्यधर्ममतिवर्तते जीवन्मुक्तानन्दधामताञ्च गाहते। महाकविभवभूति-प्रतिभातिरेकादयं शृङ्गारः। एतादृक्षी शृङ्गाराभिव्यक्तिर्न केवलं संस्कृतवाङ्मये वैश्वजनीनेऽपि वाङ्मये कुत्रचिदपि स्वप्रतिमानं नैव प्राप्नोति।

अत्र करुणशृङ्गारस्य महाराजभोजविवेचिता द्वादशापि भेदाः समुपलभ्यन्ते। तथा हि (१) दैवाश्रयः करुणशृङ्गारः—

'हा हा देवि! स्फुटति हृदयं ध्वंसते देहबन्धः
शून्यम्मन्ये जगदविरलज्वालमन्तर्ज्वलामि।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथम्मन्दभाग्यः करोमि'।। (३.३८)

स हि चरमांशे स्फुटो भवति। (२) पौरुषाश्रयश्च करुणशृङ्गारः—

'उपायानां भावादविरतविनोदव्यतिकरै-
र्विमर्दैर्वीराणां जनितजगदत्यद्भुतरसः।
वियोगो मुग्धाक्ष्याः स खलु रिपुघातावधिरभूत्
कटुस्तूष्णीं सह्यो निरवधिरयन्तु प्रविलयः'।। (३.४४)

स हि 'तूष्णीं सह्यः' इत्यनेन प्रकाश्यते। (३) देशाश्रयश्च करुणशृङ्गारः—

'यस्यां ते दिवसास्तया सह मया नीता यथा स्वे गृहे
यत्सम्बन्धकथाभिरेव सततं दीर्घाभिरास्थीयते।
एकः सम्प्रति नाशितप्रियतमस्तामेव रामः कथं
पापः पञ्चवटीं विलोकयतु वा गच्छत्वसम्भाव्य वा'।। (२.२८)

अत्र स पञ्चवटीसमाश्रयत्वेन व्यक्तिविषयीकृतः। (४) कालाश्रयश्च करुणशृङ्गारः—

'श्रमाम्बुशिशिरीभवत्प्रसृतमन्दमन्दाकिनी-
मरुत्तरलितालकाकुलललाटचन्द्रद्युति।
अकुङ्कुमकलङ्कितोज्ज्वलकपोलमुत्प्रेक्ष्यते
निराभरणसुन्दरश्रवणपाशमुग्धम्मुखम्'।। (६.३७)

अत्र 'स्मरसि वा तस्य तत्समयविस्रम्भातिप्रसङ्गस्य' इत्यतः स व्यज्यते। (५) सम्भोगाश्रयश्च—

'यदा किञ्चित् किञ्चित् कृतपदमहोभिः कतिपयै-
स्तदीषद्विस्तारि स्तनमुकुलमासीन्मृगदृशः।
वयःस्नेहाकूतव्यतिकरघनो यत्र मदनः
प्रगल्भव्यापारः स्फुरति हृदि मुग्धश्च वपुषि'॥ (६.३५)

अत्र 'प्रगल्भव्यापारो मदनः' इत्यतः सम्भोगाश्रयत्वं करुणशृङ्गारस्य व्यज्यते। (६) स्वरूपाश्रयः करुणशृङ्गारः—

'अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यद्
विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः।
कालेनावरणात्ययात् परिणते यत् स्नेहसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्रार्थ्यते'॥ (१.३९)

अत्रात्मरूपमेवाश्रयते करुणशृङ्गारः। प्राप्तोऽपि सन् स एव प्रार्थ्यते समुन्मीलितस्वरूपश्च क्रियते। (७) परिमाणाश्रयः करुणशृङ्गारः—

'पराङ्कोटिं स्नेहे परिचयविकासादधिगते
रहो विस्रब्धाया अपि सहजलज्जाजडदृशः।
मयैवादौ ज्ञातः करतलपरामर्शकलया
द्विधा गर्भग्रन्थिस्तदनु दिवसैः कैरपि तया'॥ (६.२८)

अत्र 'परिचयविकासात् पराङ्कोटिमधिगते स्नेहे' इत्यतः परिमाणाश्रयता। (८) प्रमाणाश्रयः करुणशृङ्गारः—

'स्पर्शः पुरा परिचितो नियतं स एव सञ्जीवनश्च मनसः परितोषणश्च।
सन्तापजां सपदि यः परिहृत्य मूर्च्छामानन्दनेन जडतां पुनरातनोति'॥ (३.१२)

अत्र मूर्च्छापरिहारेणानन्दनेन जडताजननेन च प्रमाणतः करुणशृङ्गारो व्यज़्यते। (९) अनुरागाश्रयः करुणशृङ्गारः—

'क्व तावानानन्दो निरतिशयविस्रम्भबहुलः
क्व वाऽन्योन्यप्रेम क्व च नु गहनाः कौतुकरसाः।
सुखे वा दुःखे वा क्व नु खलु तदैक्यं हृदययो-
स्तथाप्येष प्राणः स्फुरति न तु पापो विरमति'॥ (६.३३)

अत्र 'अन्योन्यप्रेम' 'हृदययोरैक्यं' च करुणशृङ्गारस्यानुरागाश्रयत्वं व्यङ्क्तः। (१०) नायकाश्रयः करुणशृङ्गारः—

'इदं विश्वम्पाल्यं विधिवदभियुक्तेन मनसा
प्रियाशोको जीवं कुसुममिव घर्मो ग्लपयति।
स्वयं कृत्वा त्यागं विलपनविनोदोऽप्यसुलभ-
स्तदद्याप्युच्छ्वासो भवति ननु लाभो हि रुदितम्'।। (३.३०)

अत्र 'स्वयं त्यागं कृत्वा' इत्यतो नायकाश्रयता करुणशृङ्गारस्य व्यज्यते।
(११) नायिकाश्रयः करुणशृङ्गारः—

'परिपाण्डुदुर्बलकपोलसुन्दरं दधती विलोलकबरीकमाननम्।
करुणस्य मूर्तिरथवा शरीरिणी विरहव्यथेव वनमेति जानकी'।। (३.४)

अत्र वैदेहीं समाश्रित्य करुणशृङ्गारोऽनन्यालम्बनो व्यज्यते।
(१२) विप्रलम्भाश्रयश्च करुणशृङ्गारः—

'वेलोल्लोलक्षुभितकरुणोज्जृम्भणस्तम्भनार्थं
यो यो यत्नः कथमपि समाधीयते तं तमन्तः।
भित्त्वा भित्त्वा प्रसरति बलात् कोऽपि चेतोविकार-
स्तोयस्येवाप्रतिहतरयः सैकतं सेतुमोघः'।। (३.३७)

अत्र विप्रलब्धनायकस्य रत्याख्यचेतोविकारमाश्रित्य करुणशृङ्गारः समुदेति।

परन्तु महाकविभवभूतिः सम्भोगशृङ्गाराभिव्यञ्जने न तथाविधं साफल्यमधिगतवान्। 'अलसललितमुग्धानी'त्यादिपद्ये (१.२४) 'किमपि किमपि मन्दमि'त्यादिपद्ये च कविस्त्वनौचित्यमेव समातनोति स्म। 'अक्रमेणे'त्यादिपदानाम्मर्यादितत्वव्यपाश्रयिणो व्यङ्ग्यार्थाः स्फुटीकृता वाधूलवीरराघवेण। एतादृशवर्णनमेव कटाक्षितमानन्दवर्द्धनेन—

'तस्मादभिनेयार्थेऽनभिनेयार्थे वा काव्ये यदुत्तमप्रकृतेः राजादेरुत्तमप्रकृतिभिर्नायिकाभिः सह ग्राम्यसम्भोगवर्णनं तत्पित्रोः सम्भोगवर्णनमिव सुतरामसभ्यम्'[१]।।

करुणविप्रलम्भाभिव्यक्तौ भवभूतिर्भवभूतिरिव स्वप्रकर्षे सर्वातिशायितामुपभुनक्तीति।

●

१. ध्व., पृ. ३३२।

# निजानन्दविलासे अवस्थात्रयनिरूपणम्

**रामेश्वरि-विल्ला-एस.**
प्राध्यापिका (वेदान्तविभागे)
श्रीशङ्कराचार्यसंस्कृतविश्वविद्यालये
क्षेत्रीयकेन्द्रम्, पन्मना, कोल्लम्, केरलप्रदेशः



अध्यात्मानुभवप्रपञ्चनपरः कश्चन वेदान्तग्रन्थो भवति निजानन्दविलासः। विद्याधिराजचट्टम्पिस्वामिवर्योऽस्य कर्ता। स महात्मा तत्कालीनकेरलीयाध्यात्मिकसंस्कारिकवृत्तिमण्डले भृशं व्यापृतोऽभवत्। तस्य जन्म ईशवीयाष्टशतोत्तरसहस्रतमे वर्षे 'आगस्त'मासस्य पञ्चविंशतिदिनाङ्के स्यानन्दूरपुरस्य कण्णम्मूलादेशे 'उल्लूर्कोट्'नामके गृहे आसीत्। वासुदेवशर्मानङ्ङेमा चास्तां तस्य पितरौ। सङ्गीतादिकलासु निपुणोऽयं महामुनिः जन्तुस्नेहे अतीवोत्सुकोऽभवत्। चतुर्विंशत्यधिकनवशतसहस्रतमे क्रिस्त्वब्दे 'मेय्'मासस्य त्रयोविंशतिदिनाङ्के अयं महासमाधिं प्राप। तेन अद्वैतचिन्तापद्धतिः, वेदाधिकारनिरूपणम्, प्राचीनमलयालम्, निजानन्दविलासः, जीवकारुण्यनिरूपणम्, श्रीचक्रपूजाकल्पम्, प्रपञ्चे स्त्रीपुरुषयोः स्थानम्, प्रणवः सांख्यदर्शनञ्च, केरलीयदेशनामानि इत्यादयो ग्रन्थाः केरलीभाषायां प्रणीताः।

व्यासतुल्येनानेन ऋषिणा साक्षात्कृतस्य अपरोक्षतत्त्वस्य आविष्कारो भवति निजानन्दविलासः। केरलीभाषायां निबद्धेऽस्मिन् ग्रन्थे नव प्रकरणानि सन्ति—

१. अवस्थात्रयशोधनसम्प्रदायप्रकरणम्।

२. गुणाधिक्यजन्यारोपसूक्ष्मनिरूपणप्रकरणम्।

३. ब्रह्मेशजीवजगद्विशेषनिरूपणप्रकरणम्।

४. मायालक्षणनिरूपणप्रकरणम्।

५. सदनुभवनिरूपणप्रकरणम्।

६. चिदनुभवनिरूपणप्रकरणम्।

७. आनन्दानुभवनिरूपणप्रकरणम्।

८. मनोनाशमार्गनिरूपणप्रकरणम्।

९. आवरणविक्षेपनिवृत्तिप्रकरणञ्चेति।

दर्शनग्रन्थाः प्रायोऽपि आशयानां सूक्ष्माविष्कारे तथा प्रकरणग्रन्थाः तत्त्वानां क्रमानुगमनिर्धारणे च बद्धश्रद्धाः। किन्तु निजानन्दविलासे प्रायोगिकरीत्या समग्रस्याद्वैतवेदान्तसिद्धान्तस्यावतरणं क्रियते। अस्मिन् ग्रन्थे आदौ उक्तम् अवस्थात्रयशोधनसम्प्रदायप्रकरणमेवात्र विविच्यते। अत्र शिष्याचार्यसंवादरूपेण जाग्रत्स्वप्नषुप्त्यवस्थानां विचारः क्रियते। प्रश्नमाण्डूक्यछान्दोग्योपनिषत्सु उपवर्णिता जाग्रदवस्था एव सर्वजन-साधारणबोधाय अत्यन्तसरलसुगमशैलीमनुसरता मलयालमभाषायां वर्ण्यन्ते स्वामिवर्येण। तथापि—उपनिषत्प्रतिपादितम् अवस्थात्रयं स्वेन साक्षात्कृतं तत्त्व-मनुसरन् लौकिकालौकिकरीत्या सोदाहरणं प्रतिपादयितुमनितरसाधारणी नैपुणी प्रशंसनीया एव। वेदान्तानामनुभवात्मकप्रपञ्चनपरत्वाद् एतां नूतनसरणीं लोकसमक्षं प्रदर्शयितुमयमेव ग्रन्थ इति स्वीकृत्य तत्रत्यप्रकरणमादाय लघुप्रबन्धलेखने प्रवृत्ताऽस्मि।

**जाग्रदवस्थानिरूपणम्**

निजानन्दविलासे आदौ शिष्यः आचार्यं पृच्छति—'परमगतिप्राप्तये को मार्गः' इति। तस्य प्रश्नस्योत्तररूपेणाचार्योऽवस्थात्रयशोधनसम्प्रदायं विवृणोति। देहेन्द्रियान्तःकरणेषु जाग्रत्स्वप्नसुषुप्त्यादिभावाभावजडात्मकतया प्रतीयमानं जगत्, जगदधिष्ठानभूतं तत्प्रकाशकं चिज्जडादन्यं चैतन्यं चेत्येतेषां बोधाय जाग्रदवस्था प्रथमतयाऽत्र प्रस्तूयते।

शुद्धस्फटिके जपाकुसुमसान्निध्याद् यथा—'रक्तः स्फटिकः' इति प्रतीतिः, तथा 'अहं', 'मम' इत्याद्याविद्यकभेदचिन्तामपनीय सद्रूपस्यात्मनः साक्षात्कार एव परमगतिः। तद्विवेकः कथं जायत इत्युच्यते—देहेन्द्रियादयः, जाग्रदवस्थाविषयो जगच्च सर्वं जडम्। तद्भासकं चैतन्यं चिदाभासरूपं, तस्याप्यधिष्ठानं कूटस्थनित्यबोधं चैतन्यं परमात्मेति च तत्त्वविवेक एव विवेकानुभूतिः। अत्र ग्रन्थकारो लौकिकोदाहरणपूर्वकं स्वानुभवानुसारेण माण्डुक्याद्युपनिषत्सु अदृष्टवचनैरतिसुलभमार्गेण जाग्रदवस्थाया वर्णनं करोति। शुष्के भस्मराशौ जलसम्बन्धेन जलव्यापकप्रतीतिवद् दशेन्द्रियान्वितस्थूलदेहो जाग्रति घटपटादिभिन्नविषयतया प्रत्यक्षीभवति। निर्वातदीपवद् इन्द्रियाणि

निगृह्य परमगुरुप्रसादलब्धेन विवेकेन निरीक्ष्यते चेद् देहेन्द्रियादयो जगच्च भिन्नभिन्नतयोपलब्धुं शक्यते। तेन विषयाणां बाह्यान्तर्भागेषु व्याप्य प्रकाशमानः 'आत्मा' इति दृश्यं सर्वम् 'अनात्मा' इति चानुभूयते। जलेन व्याप्तो भस्मराशिर्यदा जलनिर्मुक्तो भवति तदा तत्र जलस्य भेदो ग्रहीतुं शक्यते। एवमेव स्थूलदेहं विहाय आत्मचैतन्यस्य स्वप्नदेहप्रवेशनावसरे 'अयं स्थूलदेहः', 'एतानि इन्द्रियाणि', 'इदं जगत्' इति भेदानुभवेन आत्मानं विविच्य ज्ञातुं शक्यतेति चदृम्पिस्वामिनो मतम्।

जाग्रदवस्थां वेदान्तपरिभाषाकार एवं निर्वक्ति—इन्द्रियजन्य-विषयगोचरापरोक्षान्तःकरणवृत्त्यवस्था जाग्रदिति। माण्डूक्योपनिषत्तु—'मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः' इत्यादिश्रुतिवचनैः सप्ताङ्ग-दशेन्द्रियवायुपञ्चकान्तः करणचतुष्टयेति एकोनविंशतिमुखः, स्थूलविषयभुक्, जाग्रदवस्थाभिमानी आत्मा वैश्वानर इत्येवं जाग्रदवस्थाविशिष्टमात्मानं निरूपयति। एवं स्थूलदेहाभिमानी आत्मा यदा जाग्रदवस्थायाः, स्वप्नावस्थां प्राप्नोति तदा स्थूलदेहस्य इन्द्रियाणां, मनसश्च भेदानुभवं, सर्वसाक्षिस्वरूपस्यात्मनः प्रेक्षकवदवस्थितिं चात्र उपदिशति स्वामिवर्यः।

**स्वप्नावस्थानिरूपणम्**

स्वप्नावस्थायां स्थूलशरीरं प्रायशः प्रवृत्तिशून्यमपि कल्पितशरीरमस्तीति मन्यते। तेन शरीरेण सरूपान् विषयान् पश्यति, शृणोति इत्यादिविविधं ज्ञायते। स्वप्नावस्थायां सूक्ष्मशरीरे स्थित्वा आत्मा प्रकाशते। आकाशे छिन्नभिन्नतया लिप्तमेघमध्यतो यदि चन्द्रः प्रकाशते तर्हि मेघस्य चलनेन चन्द्रो नभसि धावतीव प्रतीयते। किन्तु सुसूक्ष्मं, चन्द्रस्य वृत्ताकारे लक्षीकृत्य निरीक्ष्यते चेत् मेघा एव चलन्ति ते निष्प्रभा इति चावगन्तुं शक्यते। एवं स्वप्नदृष्टसकलप्रपञ्चः स्वात्मचैतन्यव्यापकतया दृश्यमानत्वाद् अनात्मेति निश्चीयते। अतोऽनात्मभ्यो विलक्षणः, स्वप्नद्रष्टा आत्मा इति विवेकानुभूतिः स्यात्। स्वप्नशरीरात् कारणशरीरं प्रविष्टम् आत्मचैतन्यम् पूर्ववत् सूक्ष्मशरीरव्यवहृतस्वप्नप्रपञ्चं, जडाकारतया पश्यन् ततो भिन्न आत्मा, प्रकाशस्वरूप इति विवेकोत्पत्तिः जायत इति चदृम्पिस्वामिः अभिप्रैति। अत्रापि स्वप्नदृष्टवस्तुन अनात्मत्वं, तदन्यस्य प्रेक्षकवत् स्थितस्यात्मनः सत्यत्वं च सिद्धम्। स्वप्ने इन्द्रियाजन्यविषयगोचरापरोक्षान्तःकरणवृत्तिरेव सम्भवति। स आत्मा स्वप्नावस्थाभिमानी सूक्ष्मविषयभुक् अन्तःप्रज्ञश्चेति माण्डूक्योपनिषदि उक्तम्। अन्यथाग्रहणरूपे स्वप्ने मनःसंस्कारेण पटे चित्रमिव बाह्यसाधनानपेक्षया

स्वप्नवस्तून्यवभासयति। देशान्तरैः प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति अविद्यया अस्मिन् जन्मनि, जन्मान्तरे च दृष्टं स्वप्नविषयाः भवन्तीति यावत्।

**सुषुप्त्यवस्थानिरूपणम्**

सुषुप्तौ अविद्यारूपकारणशरीरे आत्मचैतन्यं व्याप्नोति। किन्तु तत्कालं कारणशरीरः अथवा अविद्या अस्तीति, तस्मिन् भासमानम् आत्मचैतन्यम् अस्तीति वा अवगन्तुं न शक्यते। अतस्तदभेदानुभवं प्रमेयतया कर्तुमशक्यत्वाद् अयमनुभवः शून्यमिव भवति। तस्मात् सुषुप्त्यवस्थायामपि आत्मनो विलक्षणता द्रष्टव्या। अत्रेयम् आशङ्का जाग्रति स्वप्ने च स्थूलसूक्ष्मशरीराभ्यां सकलदृष्टप्रपञ्चः येनानुभूतः स आत्मवस्तु, दृश्यप्रपञ्चः अनात्मेति च विवेचयितुं समर्थः, किन्तु सुषुप्त्यवस्थायां दृश्यद्रष्टृदर्शनभेदानुभवाभावाद् आत्मानात्मविवेकानुभूतिः कथं घटत इति। तदा आचार्येण तस्य समाधानमुच्यते—पुरोदृश्यमानायां रज्जौ 'इदम्' इति सामान्यज्ञानस्य, भ्रान्त्या कल्पितबुद्ध्या दृष्टस्य सर्पज्ञानस्य चैक्यात् तयोः भेदाग्रहाद् भीतिरुत्पद्यते। यदा द्रष्टा भीतिमुक्तो भवति, तदा 'अयं रज्जुरेव न सर्पः' इति यथार्थज्ञानं जायते। तत्रेदम् इति ज्ञानं वस्तुतन्त्रम् आरोपितविषयाविवेकज्ञानमिति विवेकानुभूतिः। एवम्प्रकारेण सुषुप्तौ कारणशरीरैक्याद् भेदकल्पनां विना शून्यमिव दृष्टः ज्ञानस्वरूपात्मव्यापको यदा जागर्ति तदा 'सुखमहमस्वाप्सं न किञ्चिदवेदिषम्' इत्यनुभवो जायते। सुषुप्त्यवस्थायां जागरणस्वभावं च विशिनष्टि—बाह्यरूपरसादिविषयशून्यः सन् आत्मा चक्षुरादिकरणतत्सम्बन्धरहितः, अहङ्कारवृत्तिसम्बन्धं च विना 'अहम्' इत्याकारेण प्रकाशते। अवस्थाद्वयसाक्षी शून्यतायाम् असदिव दृश्यमानं ज्ञानं, शून्यताया भिन्नकल्पनोपेतं ज्ञानं च मिथः तुलनेन आत्मज्ञानाद् अनात्मज्ञानं कथं भिद्यत इति विवेचयितुं शक्यते। तदेव भेदज्ञानानुभूतिरिति स्वामिनो मतम्। एकस्मिन् वस्तुनि अपरवस्तुनः अभावनिश्चयः, एकस्मिन् तस्यैव भावनिश्चयः च सामान्यविशेषवृत्तीनां परस्परपूरकतया सम्भवति। अस्य प्रमेयस्य स्वरूपविचारो विवेकबुद्ध्या क्रियमाणे सति शून्यबोधः, सामान्यबोधः, विशेषबोधश्च केवलं कल्पना एवेति सम्बुध्यते। मनोविषयाणां तेषां प्रामाण्यं विवेकज्ञानेन बाध्यते। एकस्य सत्ताया भिन्नविषयत्वकल्पनं न समीचीनमिति अन्तर्बोध एव विवेकः। अनेन विवेकेन ज्ञानस्वरूपस्यात्मनः सत्ता एकैव, शून्यसामान्यविशेषाः, स्वप्नजाग्रती, स्थूलप्रपञ्चः चेत्येते सर्वे केवलमध्यारोपा इति विज्ञायते। सर्प इव रज्जौ एतेषामात्मन्यध्यासे करणानि भवन्ति चित्तेन्द्रियाणि। आत्मा एतत्सर्वं सूक्ष्मरूपेण विलीय स्मृतिरूपेण अन्तर्निक्षिप्य

तां स्मृतिम् अम्बुधिगतबुद्बुदतरङ्गादिवत् नानासङ्कल्पान् तत्तत्काले प्रकाश्य प्रपञ्चसृष्टिं करोति। निर्वाते यथा तरङ्गादय: पुनरम्भसि विलीय निश्चलसमुद्ररूपतया दृश्यन्ते तथा अनेकविचित्रप्रपञ्चदृश्यानि स्थूलभेदभावनासहितानि सन् ब्रह्माण्डमण्डलतया स्थूलसूक्ष्मकारणरूपा: जडप्रपञ्चा वासनोपशमेन सम्यक् नश्यन्ति। तदा आधारवृत्तिज्ञानेन जलं सत्यं, वीच्यादिप्रतीति: मनसिजा इति निश्चयो जायते। तेन आद्यन्तरहितस्य स्थूलसूक्ष्मकारणभेदभिन्नस्य ज्ञानानन्दघनस्य परमार्थतत्त्वस्य अवबोध: स्यात्। तदा अन्त:करणवृत्तेरपि निषेधाद् अधिष्ठानस्वरूपभानवृत्तिरपि तिरोभवति। बहिरिन्द्रियेषु व्यापृत इन्द्रियबोध: अन्तरिन्द्रियेषु व्याप्य प्रकाशते। तदेव सूक्ष्मप्रपञ्च:। तदाधार: सूक्ष्मग्रहणोपयोगी अखण्डवृत्ति:। तत्र कारणप्रपञ्चस्य स्थिति:। भावाभावा: स्वस्मादभिन्ना इति अखण्डपरिपूर्णं ज्ञानवृत्त्या विज्ञायते। तदनुभवेन त्रिपुटीनाशे—वृत्तिसम्बन्धं विना स्वस्वरूपम् अन्तर्बहिर्व्याप्य प्रकाशते। तत्समये 'जानामि' 'अनुभवामि' इति वा वक्तुम् उपयुक्ताया वृत्तेरपि त्रिकालासत्त्वज्ञानेन भावाभावात्मकवृत्तिहीनस्वप्रकाशरूपनिजस्वरूपसाक्षात्कारेण स्वात्मानन्दसमुद्रे विलीय वासनात्रयरहित: सन् वर्तते।

तदेवमुक्तं माण्डूक्योपनिषदि—'यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम्। सुषुप्तस्थान एकीभूत: प्रज्ञानघन एवानन्दमयोह्यानन्दभुक्चेतोमुख: प्राज्ञ:' इति।

अविद्यागोचराविद्यावृत्त्यवस्था सुषुप्तिरिति वेदान्तपरिभाषाकार:। करणै: सह मनोरश्मयो हृदि उपसंहृता भवन्ति। अतस्तडाकादिषु सूर्यप्रतिबिम्बवत् सुषुप्तौ जीवात्मा द्रष्टा श्रोता मन्ता च भवति। किन्तु जलसूर्यादिप्रतिबिम्बो यथा बिम्बे सूर्ये सम्प्रतिष्ठते तथा जीवात्मा परेऽक्षरात्मनि सम्प्रतिष्ठत इति उपनिषत्सिद्धान्त:।

एवमुपनिषत्सु सैद्धान्तिकरीत्या उपपादितं तत्त्वमेव आचार्यवर्य: श्रीचद्म्पिस्वामी स्वयुक्तिभि: प्रायोगिकरीत्यात्र प्रतिपादयति। अत्र सृष्टिसृष्टपरामर्शं विनैव जीवव्यष्टिभेदज्ञाने जाग्रत्स्वप्नसुषुप्तिवृत्तिभेदा: कथं प्रतीयन्ते इति, पूर्वपूर्वावस्थाभ्य उत्तरोत्तरावस्थाप्राप्तौ पूर्वावस्थाया: सम्यक्दर्शनेन अथवा समग्रदर्शनेन विवेकानुभूतिर्जायत इति स्वामिना सुसूक्ष्मम् उपपादितम्। अतो विवेकानन्द इव प्रायोगिकवेदान्तप्रवक्ता अयं महामुनि: स्वस्य मौलिकतत्त्वान् श्रुत्यादिप्रमाणावलम्बं विना स्वेन साक्षात्कृतरीत्या स्वातन्त्र्येण प्रतिपादयति। तस्मात् 'निजानन्दविलास'-नाम ग्रन्थ: सर्वोपनिषद्रहस्यानां

प्रयोगाविष्कारकरूप इति वक्तुं शक्यते। अत एव ग्रन्थेऽस्मिन् अद्वैतसिद्धान्तानां सम्यगाविष्कारायोपयुक्तासत्त्यसाक्षात्कारानुभवविशेषः आचार्यः अत्रैवं प्रस्तौति— 'दृक्', 'दृश्यम्' इति वस्तु द्विविधम्। दृश्यं जडम्, दृक् चित् च। जडं दृश्यं, दृग्दृश्ययोः उपाधितया आत्मानात्मरूपेण प्रवर्तते। दृक् उपाधिः कर्ता, भोक्ता ज्ञाता सुखीत्यादिरूपेण जीवोपाधितया, असङ्गोदासीनसाक्षिकूटस्थब्रह्मोपाधितया च प्रवर्तते। घटपटादिविषयकल्पनाबुद्धिः चिदाभासवृत्तिः। निर्विकारवृत्तिः साक्षिवृत्तिः। कल्पनावृत्तौ प्रकाशमानः चिदाभासः फलवृत्तौ विषयरूपेण प्रतिफलति। निराकारसाक्षिवृत्तौ प्रतिफलितं चैतन्यं अन्तर्यामी ईश्वरः परोक्षः अपि स एव 'अहं ब्रह्मास्मि' इति स्वानुभवे अपरोक्षब्रह्मस्वरूपेण निरन्तरानुभवे सिद्ध्यति। अनेनानुभवेन बन्धमोक्षादिव्यवहाराधारो द्वैताद्वैतभेदभावनाः सर्वेऽपि पूर्वोक्तवृत्तिभेदाद् भिन्नतया दृष्टुमशक्यत्वाद् वृत्तिरपि कल्पिता एवेति निश्चीयते। एवं घटपटादिपरिणामहेतुः फलवृत्तिः तदाधारे चिदाभासवृत्तौ, चिदाभासवृत्तिः साक्षिवृत्तौ च लीयते। तदा सर्वे दृश्या दृग्रूपतया भासन्ते। सोऽपि दृक् विवेकोदये निरुपाधिकं भवति। तस्मिन्काले सर्वं स्वात्मरूपेण भासते। तदेव सर्ववेदान्तैरुद्घोषितं निजात्मज्ञानम् अथवा निजानन्दविलासः। तदा 'अहं', 'त्वं', 'तत्', 'इदं', 'जगत्', 'ईशः', 'जीवः', 'गुरुः', 'शिष्यः', 'बन्धः', 'मोक्षः' इत्यादिसर्वा भेदकल्पना नाशं यान्ति। सर्वं स्वस्मादभिन्नं भवतीति त्रिविधपरिच्छेदरहितः सन् प्रकाशते। एवम्प्रकारेण जीवन्मुक्तावस्थाप्राप्तिसमये तदधिकारिणः, तत्कालीनानुभवस्य सूक्ष्मस्य समग्रावतरणं स्वामिनात्र कृतं दृश्यते। अतो वेदान्ततत्त्वग्रहणापटूनां साधारणजनानां, जाग्रत्स्वप्न-सुषुप्त्यवस्थात्रयस्य सम्यक्दर्शनेनैव आत्मानात्मविवेकानुभूतिः सिद्ध्यतीति स्वामिवर्यस्य सिद्धान्तः सुसङ्गतं भवति।



# रसप्रतीतेर्न स्मृतिगुणवृत्त्यनुमितिगतार्थता

**डॉ. प्रभुसिंहयादवः**
व्याख्याता, साहित्यविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणस्याम्



लोके समस्तमपि कार्यजातं जनस्य किमपि समीहितं साधयत्येव। काव्यमपि तथैव। यद्यपि केचन काव्यरसास्वादविधुरा भवन्ति कुड्याश्मप्रायास्तथापि जन्मान्तरार्जितपुण्यराशयः सहृदयपदाभिधेयतां गताः केचन काव्यस्य विलक्षणं प्रभावं प्रमाणीकुर्वन्ति प्रमदभरनिर्भरान्तराः। तदेवं निश्चीयत एवाचिरात् काव्याद् रससम्पत्तिः समुदेतीति। काऽसौ सम्पत्तिः? कथमसौ निष्पद्यत इति विचारणीयं भवति। तत्र प्रथमं महामुनिर्भरतः स्वीयनाट्यशास्त्रे निगदति—

'विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः'।। इति।

आनन्दवर्धनाचार्या अपि ध्वन्यालोकाख्ये निजप्रबन्धे 'चित्तवृत्तिविशेषा एव रसः' इति व्याहरन्तश्चित्तवृत्तिविशेषं रसं स्वीकुर्वन्ति। वाच्यभूतः काव्यस्य रसो न भवतीति तैरेवान्वयव्यतिरेकाभ्यां प्रत्यपादि। अत एवासौ लक्ष्यभूत इति केचिद् निजगदुः। तेषामयमभिप्रायः—

'अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते' इति हि लक्षणास्वरूपम्। इह विभावानुभावव्यभिचारिणोऽभिधेयभूता एव। तेषामेवाविनाभूता रसा इति लक्ष्यभूता एव ते। विभावः कारणरूपोऽनुभावः कार्यरूपस्तथा व्यभिचारिणस्तत्सहकारिरूपा एवेति तेऽभिधेया एव। तेषामविनाभूता रसा इति महामुनिर्भरतोऽपि लक्ष्यकोटावेव रसं निवेशयति।

मतमेतदधरीकुर्वन्ति सहृदयतल्लजाः। मुख्यार्थबाध एव लक्षणाया जीवितमिति सर्वैरङ्गीकर्तव्यम्। न हि विभावादिबाधपुरःसरा रसप्रतीतिरिति कथं रसः काव्यस्य लक्ष्यभूतोऽर्थः? लक्षणाजीवितत्वेन मुख्यार्थस्याभिधेयस्य बाधोऽवश्यमेव स्वीकरणीयः। यदि न स्वीक्रियेत तर्हि धूमशब्दाद् धूमे ज्ञाते अग्निस्मृतिरपि लक्षणाकृतैव स्यात्। न चेष्टापत्तिः। अग्नेः शीतापसारणस्मृतिरपि

तथैव स्यादिति पर्यवसानविरहितोऽर्थः शब्दस्य स्यात्। अतो मुख्यार्थबाध एव लक्षणाबीजमिति। एवं सति प्रतीयमाने काव्यात्मभूते रसे शब्दव्यापारविरह एवेति शङ्कोदेति तथैव यथा धूमज्ञानानन्तरजायमाने वह्निस्मरणे। अस्याः समाधानमिदमेव यत् परचित्तवृत्तिप्रतिपत्तिरेव न रसप्रतिपत्तिः। तथा सति लोकस्य चित्तवृत्त्यनुमानमेव सहृदयहृदये भवेत्। अनुमाने च रसतास्वीकारः परिणतवयसि सुरतोद्भावनमिव नौचितीमावहति। यद्यपि ब्रह्मसृष्टौ नैयायिकजातिरेवानुमाने रसिका भवति। तद्व्यतिरिक्तस्य जनस्यानुमाने नैव रसप्रतीतिः। न हि धूमदर्शनेन वह्न्यनुमाने कुचदर्शनेन वराङ्गनानुमाने वा रसप्रतीतिर्भवति सहृदयानाम्। रसविषये सहृदया एव प्रमाणमिति काव्यतत्त्वज्ञाः कथयन्ति। रसोऽपि भवत्यलौकिकोऽतोऽनुमानविलक्षण एव स्वीकरणीयो भवेत्। कथयन्त्येवाचार्या अभिनवगुप्तपादाः—'यस्त्वलौकिकचमत्कारात्मा रसास्वादः काव्यगतविभावादिचर्वणाप्राणो नासौ स्मरणानुमानादिना खलीकारपात्रीकर्तव्य'[1] इति।

अयमभिप्रायः—चमत्काररूपो रसास्वाद इत्यत्र नास्ति विप्रतिपत्तिः। वनिताधरपानादौ लोके तथैवानुभवात्। काव्याज्जायमानो रसस्यास्वादस्त्वलौकिक एव। करुणबीभत्सादावप्यास्वादस्य जायमानत्वात्। न हि लोके करुणादावास्वादो जायते। तत्र दुःखसमुत्पादस्यैव सन्दर्शनात्। यद्यपि सुरतादौ सुखानुभूतिर्भवति। सा च लौकिक्येव। ब्रह्मादिस्तम्बपर्यन्तस्य लोकस्य सा भवति। काव्यरसस्तु सहृदयजनस्यैव। अतोऽसौ लोकविलक्षण एव। कथम्? सामग्रीवैलक्षण्यात्। काव्यगतविभावादिचर्वणाप्राणत्वात् सामग्रीवैलक्षण्यमवगन्तव्यम्। अत एवानुमानस्मरणादौ तस्य न गतार्थतेति। तथाविधरससम्पदमुपलभ्यैव व्याख्यातारो व्याख्यान्ति यथामति यथाशास्त्रञ्च। तत्र भट्टलोल्लटमते रामाद्यनुकार्यगतत्वेन रसस्य लौकिकताकलङ्कपात एव दूषणमिति पूर्वप्रदर्शितयुक्तिभिरेव निरस्तप्रायम्। लोचनकारैरपि[2] 'किन्तु लौकिकेन कार्यकारणानुमानादिना संस्कृतहृदयो विभावादिकं प्रतिपद्यमान एव न ताटस्थ्येन प्रतिपद्यत' इत्यनेन निराकृतमेव। कथन्तर्हि प्रतिपद्यते रसं सामाजिक इत्यपेक्षायां लोचनकाराणामुक्तिराविष्कृततथ्यैव प्रतिभाति—'अपि तु[3] हृदयसंवादापरपर्यायसहृदयत्वपरवशीकृततया पूर्णीभविष्यद्रसाङ्कुरीभावेनानुमानस्मरणादिसरणिमनारुह्यैव तन्मयीभवनोचितचर्वणाप्राणतया' इति।

---

१. ध्वन्यालोकलोचने प्रथमोद्योते।

२. ध्वन्यालोकलोचने प्रथमोद्योते; ३. तत्रैव लोचने।

अस्या एवोक्तेरभिप्रायं पण्डितराजो जगन्नाथ एवमभिव्यनक्ति[१]— 'विभावादिचर्वणामहिम्ना सहृदयस्य निजसहृदयतावशोन्मिषितेन तत्तत्स्थाय्युपहितस्वरूपानन्दाकारा समाधाविव योगिनश्चित्तवृत्तिरुपजायते। तन्मयीभवनमिति यावत्। आनन्दो ह्ययं न लौकिकसुखान्तरसाधारण:। अनन्त:करणवृत्तिरूपत्वात्' इति।

अत्र रसप्रतीतौ व्यक्त्यपरपर्यायचर्वणा विराजते। सा च काव्यतत्त्वज्ञरूपस्य सहृदयस्यैव सम्भवति नान्यस्य। अत एव स्मृत्यनुमानविलक्षणता रसस्यास्ति। सा चेयं तन्मयीभवनोचिता चर्वणा स्मृतिरूपापि भवेद् यदि प्रमाणान्तराज्जायेत। कथन्न सा प्रमाणान्तरात् न जाता? रसस्यालौकिकत्वादेव। लौकिके तावत् प्रत्यक्षादिव्यापारो न त्वलौकिकेऽपि। अत एवालौकिक एव विभावादिव्यवहार इत्याचार्याणामुक्ति: सङ्गच्छते।

लोके तेषां कारणकार्यसहकारिरूपतयैव व्यवहारो भवति। कारणकार्यसहकारिण एव स्थायिन: काव्यसमर्पिता सहृदयभावनोन्मिषिता लोकोत्तरा एव विभावानुभावव्यभिचारिशब्दव्यपदेश्यतां प्राप्नुवन्ति। तथा हि— वासनारूपतया स्थितान् रत्यादीन् स्थायिनो विभावयन्ति रसास्वादाङ्कुरयोग्यतां प्रापयन्तीति विभावा:। अनुभावयन्ति तानित्यनुभावा:। पोषकतया विशेषेणाभित: काव्ये स्थायिनश्चारयन्ति, विशेषेणाभिमुख्येन चरन्ति वा ते व्यभिचारिण:। विभावयन्त्यभिव्यञ्जयन्तीत्यर्थ:।

नन्वेवं सति विभावमात्रेणैव रसाभिव्यक्तिरङ्गीकार्या। तथा सति महामुनिसूत्रविरोध इति चेत्? सत्यम्। स्यादयं दोषो यदि स्थायिनं रसतां प्रापयन्तीति ब्रूयाम्। रसास्वादाङ्कुरयोग्यतां प्रापयन्तीति ब्रवीमि। रसास्वादाङ्कुरस्तावदीषद्रसाभिव्यक्ति:। नायिकादय: साधारणतया काव्यादवगता: सहृदयचेतसि वासनारूपेण स्थितं रत्यादिभावमीषदभिव्यञ्जयन्ति। इयमीषदभिव्यक्तिरेव रसादिव्यक्तेरङ्कुर इव कथ्यते। न हीषदभिव्यक्तिरेव रसाव्यभिव्यक्तिरित्युच्यते। तस्मादयमेव निर्गलितोऽर्थ:—विभावैरीषदभिव्यक्तिरनुभावै: स्फुटा व्यभिचारिभि: स्फुटतरेति समुदायजन्याभिव्यक्तिरेव रसत्वापादिकेति। न चैतन्निर्मूलम्। लोचन उक्तत्वात्। तथा हि तत्रोक्तम्—[२]'तच्चित्तवृत्तितन्मयीभवनमेवानुभवनम्। लोके तु

---

१. रसगङ्गाधरे प्रथमानने रसचन्द्रिकायुते, पृ. ७३-७४।

२. ध्वन्यालोकलोचने निर्णयसागरतो मुद्रिते, पृ. ६८।

कार्यमेवोच्यते नानुभावः’ इति। यदि परकीया चित्तवृत्तिरेवावगम्येत तर्हि स्मृत्यनुमानगतार्थतापि भवेत्। न च तथा। अत एव रससूत्रे महामुनिना स्थायिग्रहणं न कृतम्। स्थायिग्रहणाभावेऽपि व्याख्यायां स्थायिनो रसतापत्तिरिति ग्रन्थकारैर्यदुच्यते तत्रौचित्यमेव मूलम्। यतो हि या चर्वणा समुदेति सा तत्तत्स्थायिसम्बन्धिविभावानुभावोचितचित्तवृत्तिसंस्कारादेव। अत्र स्फुटप्रतिपत्तयेऽधोलिखिता उक्तयो विभावनीयाः—

‘चर्वणा[1] चात्राभिव्यञ्जनमेव, न तु ज्ञापनम्। प्रमाणव्यापारवत्। नाप्युत्पादनम्। हेतुव्यापारवत्।..... ननु क्वैतद् दृष्टमन्यत्र? यत एव न दृष्टं तत एवालौकिकमित्युक्तम्’। इति।

इत्थं स्वसंवेदनसिद्धत्वादेव तावदप्रामाण्यमस्य न सम्भावनीयम्। एतेनातिसूक्ष्मबुद्धिशालिभिरप्यनुन्मीलितपूर्वस्य परमसारभूतस्य ध्वन्यर्थरूपस्य रसस्यानुमानेऽन्तर्भाव इति महिमभट्टानां प्रयासः खण्डितप्रायः। श्रीशङ्कुकस्तु तत्रभवानवशिष्टो योऽनुमीयमानो रस इति स्वीकरोति। यद्यपि रसनिष्पादन-प्रक्रियायां वस्तुसौन्दर्यबलादन्यानुमीयमानविलक्षण एव रस इति निगदन्नसौ प्रसिद्धानुमितिपक्षं निराकुर्वन् प्रतिभाति तथापि तदीयमतपरीक्षणं विधातव्यमेव वस्तुतत्त्वयाथार्थ्यप्रतिपत्तये। तथा हि—तन्मते विभावादिभिर्लिङ्गभूतैरनुमीयमानो रसो भवति। कथं रसानुमितिर्भवतीत्यपेक्षायामुच्यते—चतुष्प्रकारकप्रतीति-विलक्षणया प्रतीत्या चित्रतुरगन्यायेन रामोऽयमिति बुद्ध्या पक्षभूतो नटः प्रथमं विषयीक्रियते। तत्पश्चात् तत्र विभावादित्रितयं लिङ्गं ज्ञायते। पक्षे लिङ्गज्ञानमेव पक्षधर्मताज्ञानं यथा धूमेन वह्नावनुमीयमाने पर्वतो धूमवानिति ज्ञानम्। कथं नटे विभावादिज्ञानं सम्भवति, सन्निकर्षलिङ्गयोरभावात् कथञ्चित् शाब्दबोधेऽपि रोमाञ्चादेरनुभावस्य सन्निकर्षं विनाऽदर्शनात् तथा उत्कण्ठादिव्यभिचारिणां व्यञ्जकाभावादिति न शङ्क्यम्। पूर्वमेव गुरुशिक्षया काव्याभ्यासेन वा आलम्बनोद्दीपनयोरभिव्यक्तौ सत्यां सर्वस्यैव रोमाञ्चादेरुत्कण्ठादेश्च प्रकाशनात्।

नन्वेवं सति तेषां कृत्रिमतया तल्लिङ्गत्वाभावात् कथं रत्यादिः स्थायी अनुमीयेतेति चेत्? न। तेषां कृत्रिमत्वेऽपि तथात्वेन ज्ञानाभावाद् अनुमाने क्षतिविरहात्। अत्र चर्वणाऽप्यनुमितिरूपैव। सा च चमत्कारावच्छिन्ना। एतस्याश्चर्वणाया अनुमितिधारारूपायाः सामाजिकनिष्ठत्वात् तत्रैव

---

१. तत्रैव लोचने, पृ. ६९।

रसव्यवहारः। अत्र काव्यजन्यभावनाविषयत्वं विभावादीनां मूलमस्ति। अत एव लोके प्रत्यक्षतोऽनुमानतो वा गृहीतैस्तैर्विभावादिभिर्लिङ्गैरुत्पन्नाया अनुमितेर्न चमत्कृतिजनकत्वापत्तिः। सचमत्कारतया चानुमितेरिच्छाविषयत्वात्तदुत्पत्तौ पक्षतायाः क्षतिरपि न। सर्वञ्चैतद् वस्तुसौन्दर्यबलादन्यानुमानवैलक्षण्यादेव सम्पद्यते। अनुमानाकारोऽप्येवम्—

रामोऽयं सीताविषयकरतिमान्। सीताद्यालम्बनविभाववर्षर्तुरूपोद्दीपन-विभावरोमाञ्चाद्यनुभावौत्सुक्यादिसञ्चारिभावसम्बन्धित्वात्। यो यदात्मकविभावत्वे सत्यनुभावसञ्चारिभाववान् स तद्रतिमानिति यत्तद्भ्यां सामान्यतो व्याप्तिः। अथवा यो नैवं स नैवमिति व्यतिरेकव्याप्तिरपि। अत्र स्थायिनां नटेऽविद्यमानत्वाद् बाधे सति कथमनुमितिरिति शङ्कायां अपनोदनमपि प्रदीपग्रन्थादवगम्यते—

'अभावनिश्चयाभावात् स्थायितया सम्भाव्यमानत्वात्।'[१] इति।

आपातरमणीयं मतमेतदङ्गीकृत्यापि न हृदये निदधति विपश्चितः। यतो हि प्रत्यक्षस्येव ज्ञानस्य चमत्कारविधायित्वं नानुमित्यादेरिति लोकप्रसिद्धिः। अत्र नास्मद्मतैक्यता। प्रत्यक्षस्यापि ज्ञानस्य तथाविधचमत्काराविधायित्वात्। ननु ब्रह्मणः प्रत्यक्षे भवति तथा। अत एव रसस्य ब्रह्मज्ञानसहोदरतोच्यते? नेति ब्रवीमि। ब्रह्मण आत्मरूपत्वे सर्वदा प्रत्यक्षत्वात्। प्रत्यक्षस्यैव ज्ञानस्य सचमत्कारित्वं नानुमित्यादेरिति नायं नियमः। अनुमित्यादेरपि रसज्ञस्य चमत्कारविधायित्वात्। अरसज्ञस्य तु प्रत्यक्षेऽपि तद्विरहः। भवन्ति च केचित् सुरतविशेषेऽरसज्ञाः। अनुमित्यादावपि केचिद् रसविशेषमुपलभन्ते। कथमन्यथा गोष्ठीषु रसिकवार्ताः प्रवर्तेरन्। काव्याल्लोकोत्तरचमत्कार इत्यविवादम्। तदुपलब्धये रसनिष्पादनप्रक्रियाया लोकोत्तरताऽप्यवश्यमभ्युपेया। अभ्युपेता च श्रीशङ्कुकेन चित्रतुरगादिन्यायेनानुमितिपक्षं समर्थयता। अनुमितिस्तत्र स्थायिनो भवति न वेति विचारणीयम्। यद्यनुमितिर्भवेत्तदा तदीयं व्याख्यानं समीचीनमेवेति मन्तव्यम्। अनुमितिरेव न सम्भवतीति वक्तव्यम्। कुतः? आभासे तदसम्भवात्। रामादिर्नायकः पक्षः, न तु नटः। तद्विभावादिलिङ्गम्। न च तन्नटे सम्भवति। अनुमीयमानं रत्याद्यपि नास्ति नट इति न सम्भवत्यनुमितिः। अतल्लिङ्गत्वेऽपि तथात्वेनाज्ञानादनुमितिर्भवतीति वक्तव्ये

१. काव्यप्रदीपे चतुर्थोल्लासे।

कुज्झटिकाजातेनापि खे वह्न्यनुमितिः स्यात्। एवं सति भट्टनायकमतमायाति यत्र साधारणीकरणे काव्यव्यापार इति विशेषः। भोगो व्यक्तिरेव। अभिधा लक्षणा वा स्वीक्रियत एव। सहृदयतावशात् साधारण्यमिति लोकदृष्ट्या स्वीक्रियते। न तत्र काव्यव्यापारः। इत्थमभिनवगुप्तपादाचार्याणां मतमेव लोकोत्तररसनिष्पादनप्रक्रियानुकूलमिति निश्चीयते। कुतः? तत्र दोषस्यादर्शनात्। अन्ये च पक्षा विपक्षभूता इति सहृदया एव प्रमाणम्। इत्थं सिद्धं भवति न रसप्रतीतेर्गुणवृत्तिस्मृत्यनुमितिगतार्थतेति।



# सार्वजनीनशाश्वतमूल्यानां रत्नाकरो रामायणं महाकाव्यम्

**डॉ. धनञ्जयवासुदेवद्विवेदी**
व्याख्याता, राँची-महाविद्यालये
राँची, झारखण्ड-प्रदेशः



'कामार्थगुणसंयुक्तं धर्मार्थगुणविस्तरम्।
समुद्रमिव रत्नाढ्यं सर्वश्रुतिमनोहरम्।।
रघुवंशस्य चरितं चकार भगवान् मुनिः'[१]।।

सम्पूर्णजगतो दिव्यातिदिव्यं वैरिञ्चप्रपञ्चतो विलक्षणं सुलक्षणं परिहृतनियतिनियन्त्रणमनन्यपरतन्त्रं सर्वजनकल्याणकरमानन्दनिष्यन्दनं परमकमनीयं चरित्रपरिशोधकं पुरुषार्थचतुष्टयसाधकं रामायणमस्माकमादिकाव्यमास्ते। अस्य प्रणेताऽस्ति तपःपावितनिर्मलमतिर्महर्षिकुलपतिस्त्रिकालदर्शी क्रान्तद्रष्टा लोकोत्तरवर्णनानिपुणो वाल्मीकिः। महाकाव्यमिदं वस्तुतः सार्वजनीनां शाश्वतमानवमूल्यानां महार्णवः। 'चारित्रेण च को युक्तः सर्वभूतेषु को हितः'[२] इति महर्षेः सर्वप्रधाना जिज्ञासाऽऽसीत्। अस्यां जिज्ञासायां ध्वनिना सर्वाणि अभ्युदयनिःश्रेयसकराणि अमरमूल्यानि सन्निविष्टानि विराजन्ते। एतानि अतिदुर्लभमूल्यानि 'नरे' अन्वेष्टव्यानि सन्ति। पृच्छति च तपस्वी कविस्तपःस्वाध्यायनिरतं वाग्विदां वरं त्रिलोकज्ञं मुनिं नारदम्—

'एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे।
महर्षे त्वं समर्थोऽसि ज्ञातुमेवंविधं नरम्[३]।।'

एतत्प्रसङ्गे परमप्रहृष्टो भूत्वा नारदो रघुकुलनन्दनस्य लोकाभिरामस्य रामस्य चरितं महर्षिं वाल्मीकिं श्लोकशतेन श्रावयामास। परमकारुणिकः ऋषिः

---

१. वाल्मीकिरामायणम्, १/३/८-९।
२. तत्रैव, १/१/२-५।
३. तत्रैव, १/१/५।

स्वयं सकलमानवीयचेतनानिधानमासीत्। अथ च मूल्यस्वरूपं तु तदैव परिज्ञातं यदा 'क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः'[१]।

महर्षेर्वाल्मीकेः समक्षमेव एकः पापी निषादः क्रौञ्चपक्षिमिथुनादेकं पुमांसं पक्षिणं जघान। तद् भार्याया हृदयविदारकं रोदनं श्रुत्वा शोकाभिभूतस्य धर्मात्मनो महर्षेर्मुखात् क्रौञ्चीसमक्षमेव वचनमिदं निःसृतम्—

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्[२]।।

एतत्प्रसङ्ग एव ब्रह्मणा निर्दिष्टो महर्षिः सप्तकाण्डान्वितं चतुर्विंशसहस्रश्लोकात्मकममर्त्यं महाकाव्यं रामायणं रचयामास। अस्य पवित्रतमस्य एकैकमक्षरं पुंसां महापातकनाशनमिति सर्वैः काव्यमर्मज्ञैः प्रतिपादितम्। स्वयं नारदेन उद्घोषितम्—

इदं पवित्रं पापघ्नं पुण्यं वेदैश्च सम्मितम्।
यः पठेद् रामचरितं सर्वपापैः प्रमुच्यते[३]।।

महाकाव्येऽस्मिन् नराणां वानराणां मुनीनां तपस्विनां रक्षसां वनेचराणां निषादप्रभृतीनां च सभ्यतासंस्कृतीनां सुभव्यं चित्रणं सचेतसां हृदयमाह्लादयति। अङ्गविदेहकोसलकेकयप्रभृतिजनपदानां तत्रत्यजनानां चाचारा व्यवहाराश्चाराश्चावगम्यन्ते। रामादिचरितचित्रणव्याजेन यो हि निःश्रेयससाधको मानवीयमूल्यसङ्घातः सरसं समुपस्थापितस्तत्र विशेषरूपेणोल्लेखनीयाः सन्ति कतिपयसद्गुणाः।

## सत्यम्

रामायणे सत्यस्य भूयिष्ठं महत्त्वम्। सत्यं जीवनस्य प्रधानतत्त्वमस्ति। सर्वे वेदा ऋषयो मुनयो महात्मानोऽन्यान्यजनाश्चाप्यभ्यर्हितं मन्यन्ते। सत्यवादी सत्यपराक्रमो रामः सत्यस्य महत्त्वं प्रतिपादयन् कथयति। संसारे सत्यमेव ईश्वरः, इदमेव धर्मस्यापि सार्वकालिक आधारः। एतद्धि सर्वेषां मूलम्। सत्यात्परं किमपि अभिलषणीयं वस्तु नास्ति। सत्यवादी नरः लोकेऽस्मिन् परमक्षयं पदं प्राप्नोति। इदमेव हि दानस्य, यज्ञानुष्ठानस्य,

---

१. ध्वन्यालोके, १/५।

२. रामायणे, १/२/१५।

३. तत्रैव, १/१/९८।

यज्ञाग्नौ प्रदत्तहवनस्य सर्वविधतपसां, वेदानां चापि प्रतिष्ठानमास्ते। तस्मात् मनुष्यः सर्वदा सत्यपरो भवेत्। जगति भूमिः कीर्तिर्यशो लक्ष्मीः सर्वदा सत्यवादिनं पुरुषमभिलषन्ति। श्रेयस्कामः सत्यमेव सेवते। लोभात्, मोहात्, अज्ञानाद्वा सत्यं न त्याज्यम्[१]।

कतिपयपदानि तत्र—

सत्यमेवेश्वरो लोके सत्ये धर्मः सदाश्रितः।
सत्यमूलानि सर्वाणि सत्यान्नास्ति परं पदम्॥
दत्तमिष्टं हुतं चैव तप्तानि च तपांसि च।
वेदाः सत्यप्रतिष्ठानास्तस्मात् सत्यपरो भवेत्॥
भूमिः कीर्तिर्यशो लक्ष्मीः पुरुषं प्रार्थयन्ति हि।
सत्यं समनुवर्तन्ते सत्यमेव भजेत् ततः॥

निजप्रार्थितवरप्राप्त्यर्थं कैकेयी अपि सत्यवादिनं राजानं दशरथं सत्यस्यैव माहात्म्यं स्मारयति।

सत्यमेकपदं ब्रह्म सत्ये धर्मः प्रतिष्ठितः।
सत्यमेवाक्षया वेदाः सत्येनावाप्यते परम्॥
सत्यं समनुवर्तस्व यदि धर्मे धृता मतिः[२]॥

सत्यवादी राजा सत्यस्य रक्षणार्थं स्वप्रेष्ठं पुत्रं विवासयामास—

स सत्यवचनाद् राजा धर्मपाशेन संयतः।
विवासयामास सुतं रामं दशरथः प्रियम्[३]॥

भगवती सीता तथ्यमिदं हनुमन्तमुद्घाटयति—

दद्यान्न प्रतिगृह्णीयात् सत्यं ब्रूयान्न चानृतम्।
अपि जीवितहेतोर्हि रामः सत्यपराक्रमः[४]॥

---

१. वाल्मीकिरामायणे, २/१०९/११-२२।
२. तत्रैव, २/१४/३-८।
३. तत्रैव, १/१/२३।
४. तत्रैव, ५/३३/२५।

सत्यमेव सनातनं राजवृत्तं मन्यते। तस्मात् प्रशासका राजानश्च सदा सत्यपरा भवेयुः। यतो हि—यद्वृत्ताः सन्ति राजानस्तद्वृत्ताः सन्ति हि प्रजाः[१]। रामः सत्यस्य रक्षणार्थमुद्यतो दरीदृश्यते। एतत्कारणादेव स प्राज्यं राज्यं तृणवत् परित्यज्य पितुरव्यक्तादेशादपि सहर्षं वनं जगाम यत्र तेनागणितानि असह्यदुःखानि अनुभूतानि। परन्तु सत्यस्य परिपालनादेव तस्य कीर्तिः सर्वेषु लोकेषु प्रथिता। ततः प्रभृत्येव स सर्वत्र मर्यादापुरुषोत्तमः कथ्यते सादरम्।

**धर्मः**

रामायणे धर्मस्यातिविशदं निरूपणं प्राप्यते। वस्तुतो रामादत्र धर्मावतारो मन्यते। कथितञ्च—

धर्मकामार्थतत्त्वज्ञः स्मृतिमान् प्रतिभानवान्।
लौकिके समयाचारे कृतकल्पो विशारदः[२]॥
दीनानुकम्पी धर्मज्ञो नित्यं प्रग्रहवान् शुचिः[३]॥

धर्मकण्टकमधर्ममुन्मूलयितुं स सततं कटिबद्धो दरीदृश्यते। अत्र अभ्युदयनिःश्रेयससाधको धर्मः। अस्य प्रमुखा अवयवाः सन्ति—धैर्यं, क्षमा, दमः, अस्तेयं, शुचिता, इन्द्रियनिग्रहः, विद्या, विवेकः, सत्यं, क्रोधजयश्च। धर्माचरणेन सर्वमभिलषणीयं पदमवाप्यते—

धर्मादर्थः प्रभवति धर्मात् प्रभवते सुखम्।
धर्मेण लभते सर्वं धर्मसारमिदं जगत्[४]॥

सामान्यतया शास्त्रविहितानामर्थकामानां प्राप्तिर्धर्मपुष्ट्यर्थं मन्यते। यत्र च धर्मार्थकामाः त्रयोऽपि विराजन्ते तत्र नूनं धर्मफलोदयः। यथा वशवर्तिनी सपुत्रा भार्या अस्मिन् लोके लोकान्तरे चापि निःश्रेयससाधिका भवति तथैव धर्मार्थकामाः धर्मफलोदये सहायका भवन्ति। यत्र त्रयाणां स्थितिर्न स्यात् तत्र तदेव कर्म करणीयं यद् धर्मवृद्धये भवेत्। केवलमर्थपरायणो नरो लोके गर्हितो भवति। अनियन्त्रितकामात्मताऽपि प्रशस्या न भवतीति रामस्याभिमतम्[५]।

---

१. वाल्मीकिरामायणे, २/१०९/९-१०।
२. तत्रैव, २/१/३२;
३. तत्रैव, २/१/१५।
४. तत्रैव, ३/९/३०;
५. तत्रैव, २/२१/५७-५८।

मातुः पितुश्चादेशस्य अक्षरशः परिपालनं पुत्रस्य धर्मः, पत्युः शुश्रूषा पातिव्रत्यं च नारीणां परमो धर्मः, भ्रातृभक्तिः अनुजानां श्लाघ्यो धर्मः। वस्तुतो धर्मस्य क्षेत्रमतिव्यापकम्। स्वकर्त्तव्यपालनं धर्मः। महाकाव्येऽस्मिन् रामादयः सर्वे सत्पात्राः स्वधर्मस्य परिपालनार्थं सर्वविधक्लेशं सहर्षं सहन्ते। रामस्तु—

रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता।
रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता[१]॥

**क्षमा**—क्षमा नराणां नारीणां वा महान् गुणः। राजर्षिः कुशनाभः स्वकन्याशतस्य क्षमाशीलतायाः प्रशंसां कुर्वन् कथयति—क्षमा सर्वेषा-मलङ्कारः। बहवो गुणा अस्यां सन्निविष्टाः सन्ति। कृत्स्नं हि जगत् क्षमायां स्थितमास्ते[२]।

क्षमा दानं क्षमा सत्यं क्षमा यज्ञाश्च पुत्रिकाः।
क्षमा यशः क्षमा धर्मः क्षमायां विष्ठितं जगत्॥

**प्रतिज्ञापरिपालनम्**

मर्यादापुरुषोत्तमो रामः स्वपितुः आज्ञापरिपालनार्थं स्वकृतप्रतिज्ञारक्षणार्थं सन्ततं सहर्षं समुद्यतो दृश्यते। पूर्वं दत्तवरा कैकेयी पतिं दशरथं वरद्वयम् अयाचत्—रामस्य चतुर्दशवर्षपर्यन्तं वनवासं स्वपुत्रस्य भरतस्य च राज्याभिषेकम्। एतच्छ्रुत्वा राजा परमदुःखितो भूत्वा मूर्च्छितः सञ्जातः। रामं द्रष्टुं तं चाभिभाषितुं समर्थो नाभवत्। ततः कैकेयी तं सर्वमकथयत्। रामोऽत्र स्फुटं कथयति—

अहं हि वचनाद् राज्ञः पतेयमपि पावके।
भक्षयेयं विषं तीक्ष्णं पतेयमपि चार्णवे॥
नियुक्तो गुरुणा पित्रा नृपेण च हितेन च।
करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते[३]॥

स सहर्षं सर्वं परित्यज्य वनगमनार्थमुद्यतः सञ्जातः। स पूर्ववद् देदीप्यमान आसीत्। रञ्चमात्रमपि चित्तविक्रिया नावलोकिता तस्य गात्रे—

---

१. वाल्मीकिरामायणे, १/१/१४।
२. तत्रैव, १/३३/७-९।
३. तत्रैव, २/१८/२८-३०।

न चास्य महतीं लक्ष्मीं राज्यनाशोपकर्षति।
लोककान्तस्य कान्तत्वाच्छीतरश्मेरिव क्षय:।।
न वनं गन्तुकामस्य त्यजतश्च वसुन्धराम्।
सर्वलोकातिगस्येव लक्ष्यते चित्तविक्रिया[१]।।

परमभ्रातृभक्तो भरतो रामं राज्यस्वीकारार्थं भूयिष्ठं प्रार्थयामास; परन्तु विस्तृतवार्तावसाने रामेण स्फुटमुक्तम्—

लक्ष्मीश्चन्द्रादपेयाद्वा हिमवान् वा हिमं त्यजेत्।
अतीयात् सागरो वेलां न प्रतिज्ञामहं पितु:[२]।।

स प्रतिज्ञापालनसम्बन्धे अरण्यकाण्डे सीतां नि:सङ्कोचं भणति—

अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम्।
न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषत:[३]।।

लक्ष्मणस्तु रामस्य प्रतिज्ञापालनार्थं तद्द्वारा स्वहननमपि श्रेयस्करं मन्यते। उत्तरकाण्डे यथाकालं पितामहेन प्रेषित: कालो रामस्य पार्श्वे आगत:। 'य: शृणोति निरीक्षेद् वा स वध्यो भविता तव' इति रामं कथयित्वा रहसि वार्तालापं कृतवान् रामेण सह। दुर्वासाशापभयाद् उभयोवार्ताकाल एव मुनेरागमनं निवेदयामास लक्ष्मणो रामम्। प्रतिज्ञानुसारं लक्ष्मण: वध्य: सञ्जात:। परन्तु राम: स्वानुगामिनो लक्ष्मणस्य वधं कर्तुं कथमपि नेच्छति। अतो लक्ष्मण: स्वयं रामं निवेदयति—

जहि मां सौम्य विस्रब्धं प्रतिज्ञां परिपालय।
हीनप्रतिज्ञा: काकुत्स्थ प्रयान्ति नरकं नरा:।।
यदि प्रीतिर्महाराज यद्यनुग्राह्यता मयि।
जहि मां निर्विशङ्कस्त्वं धर्मं वर्धय राघव[४]।।

एतत्सम्बन्धे कृत्याकृत्यनिर्णयार्थं विदुषां सभा आहूता। तत्र सम्यग् विचारानन्तरं एक: प्रस्ताव: स्वीकृत:, यन्नष्टायां प्रतिज्ञायां धर्मो हि विलयं

१. वाल्मीकिरामायणे, २/१९/३२-३३।
२. तत्रैव, २/११२/१८।
३. तत्रैव, ३/१०/१९।
४. तत्रैव, ७/१०६।

याति। विनष्टे धर्मे तु सदेवर्षिगणं सर्वं सचराचरं त्रैलोक्यमाशु एव प्रणश्यति। अथ च 'त्यागो वधो वा समानः'। एतन्निर्णयानुसारं रामेण परित्यक्तो लक्ष्मणः—'विसर्जये त्वां सौमित्रे मा भूद् धर्मविपर्ययः'। लक्ष्मणस्तत्क्षणमेव ततोऽपक्रान्तो रामायणस्यैतादृशं विधानं निदिध्यासितव्यं श्रेयस्कामैः सत्पुरुषैः सर्वदा।

**भ्रातृभक्तिः**—लक्ष्मणस्य भरतस्य च भ्रातृभक्तिः अलोकसामान्या वर्तते। रामायणादन्यत्र कुत्रापि नैव लभ्यते सा। लक्ष्मणोरामवनगमनकाले राममातरं कौसल्यां कथयति—हे देवि! अहं रामं तत्त्वतो भावेनानुरक्तोऽस्मि। अहं सत्येन धनुषा दत्तेनेष्टेन च शपे यत्—दीप्तमग्निमरण्यं वा यदि रामः प्रवेक्ष्यति, प्रविष्टं तत्र मां देवि पूर्वमवधारय[१]। वस्तुतस्तेन सर्वदा सर्वासु अवस्थासु रामस्य सर्वात्मना सेवा कृता। तस्य सङ्केतानुसारं सर्वं निर्दिष्टकार्यजातमह्नाय सम्पादयामास। भरतस्य भ्रातृभक्तिः सर्वलोकेषु सर्वकालेषु चादर्शतमा अवधार्यते सर्वैः। अनायासेनैव समुपलब्धं विशालसाम्राज्यं तेन तृणवत् परित्यक्तम्। रामवनवासस्य कारणभूतां स्वमातरं कैकेयीं भृशं विगर्हयामास। स वनाद् राममानेतुं झटित्येव वनं जगाम। सर्वतोभावेन च तं राज्यग्रहणार्थं प्रार्थितवान् परन्तु रामस्तस्यानुनयं न स्वीकृतवान्। तदा भरतः तस्य प्रतिनिधिरूपेण तस्य पादुकाद्वयं सप्रणामं गृहीत्वा रामं सुव्यक्तमिदं जगाद—हे रघुनन्दन, अहं तवाज्ञानुसारमयोध्याराज्यस्य संरक्षणं फलमूलाशनो जटाचीरधरश्च भूत्वा चतुर्दशवर्षाणि नगराद् बहिः स्थित्वा करिष्यामि। इदञ्च मम वचनं कृपया सम्यक् स्मर्तव्यम्—

> चतुर्दशे हि सम्पूर्णे वर्षेऽहनि रघूत्तम।
> न द्रक्ष्यामि यदि त्वां तु प्रवक्ष्यामि हुताशनम्[२]।।

**पातिव्रत्यम्**—आदिकाव्ये पातिव्रत्यस्य आदर्शतमं स्वरूपं सम्यग् उद्घाटितं विद्यते। जगतः पतिव्रतानारीषु सीतायाः स्थानमन्यतमं वर्तते। भारतीयसंस्कृतौ स्त्रीणां कृते सीताया जीवनं पथप्रदर्शकमास्ते। स्वयं महर्षिणा वाल्मीकिना उद्घोषितम्—'काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत्'[३]। पत्यू रामस्य वनगमननिश्चयं निशम्य सीता सद्यः सोपपत्तिं सर्वदा सर्वास्ववस्थासु

---

१. वाल्मीकिरामायणे, २/२१/१६-१७।

२. तत्रैव, २/११२/२५-२६।

३. तत्रैव, १/४/७।

च पत्यनुसरणार्थं विविधमाग्रहं विवृणोति। सा कथयति—हे आर्यपुत्र! जगत्यस्मिन् पिता माता भ्राता पुत्रः स्नुषा च स्वप्रारब्धानुसारं स्वकर्मफलानि भुञ्जानाः स्वं स्वं भाग्यमुपासते। केवलमेका नारी एव एतादृशी भवति या स्वभर्तुर्भाग्यभागिनी वर्तते। किञ्च—नारीणां कृते पत्युः ऋते लोके न कोऽपि शरणम्—भवन्तु पिता माता पुत्रः सखीजनः स्वात्मा वा! 'इह प्रेत्य च नारीणां पतिरेको गतिः सदा'[१]। पतिं विना स्वर्गसुखमपि न काम्यते। अतः सीता रामं याचते—

अनन्यभावामनुरक्तचेतसं त्वया वियुक्तां मरणाय निश्चिता।
नयस्व मां साधु कुरुष्व याचनां नातो मया ते गुरुता भविष्यति[२]॥

वनगमनयात्रायां रामोऽत्रेराश्रमं जगाम। तत्र तस्य पत्नी अनुसूया सीतायै सुविशदं पातिव्रतधर्मस्योपदेशं दत्तवती। सीता सादरं तत्समर्थनं कुर्वती अकथयत्—यदि भवेन्मम पतिरनार्यो: जीविकारहितश्च तथापि अद्वैधं स मया सुसेव्यः स्यात्। अयं तु निसर्गतः सर्वैः गुणवान् दयालुः जितेन्द्रियः धर्मात्मा स्थिरानुरागी च निगद्यते। यत्कृतेऽयं मातृवत् पितृवत् प्रियोऽस्ति। अयं परदारान् मातृवद् मन्यते। अतोऽयं मया सुसेव्यः। वस्तुतः 'पतिशुश्रूषणान्नार्यास्तपो नान्यद् विधीयते'[३]। रावणेन भृशं प्रलोभिता सन्तर्जिता च सीता कथयति—

चरणेनापि सव्येन न स्पृशेयं निशाचरम्।
रावणं किं पुनरहं काममेयं विगर्हितम्[४]॥

एवमेव रावणादेशाद् राक्षसीभिर्विविधं सन्त्रासिता सीता निर्भयं कथयति—

कामं खादत मां सर्वा न करिष्यामि वो वचः।
दीनो वा राजहीनो वा यो मे भर्ता स मे गुरुः[५]॥
छिन्ना भिन्ना प्रभिन्ना वा दीप्ता वाग्नौ प्रदीपिता।
रावणं नोपतिष्ठेयं किं प्रलापेन वश्चिरम्[६]॥

---

१. वाल्मीकिरामायणे, २/२७/६।
२. तत्रैव, २/२७/२३।
३. तत्रैव, २/११८/९;
४. तत्रैव, ५/२६/८।
५. तत्रैव, ५/२४/८-९;
६. तत्रैव, ५/२६/१०।

अथ च यदा भक्तप्रवरो हनुमान् शोकसागरे निमग्नां सीतामकथयत् यत् त्वं मम पृष्ठमारुह्य अद्यैव रामदर्शनं कुरु शोकार्णवं च तर। तदा तया उक्तम्—

भर्तुर्भक्तिं पुरस्कृत्य रामादन्यस्य वानर।
नाहं स्प्रष्टुं स्वतो गात्रमिच्छेयं वानरोत्तम॥
यदहं गात्रसंस्पर्शं रावणस्य गता बलात्।
अनीशा किं करिष्यामि विनाथा विवशा सती[१]॥

लङ्काविजयानन्तरं स्वसतीत्वं प्रति रामस्य प्रश्नचिह्नं श्रुत्वा सर्वेषां समक्षं सीता स्वसतीत्वपरीक्षार्थमग्नौ प्रविष्टा। अग्निदेवेन तस्या अद्वितीयं सतीत्वं प्रमाणीकृतम्, रामश्चादिष्टः सीताप्रतिग्रहार्थम्—

विशुद्धभावां निष्पापां प्रतिगृह्णीष्व मैथिलीम्।
न किञ्चिदभिधातव्या अहमाज्ञापयामि ते[२]॥

एवमेव उत्तरकाण्डे पृथ्वीदेव्या सीताया लोकोत्तरमनुपमं च सतीत्वमभिप्रमाणितम्[३]।

**भ्रातृप्रेम**—भीषणयुद्धकाले एकदा लक्ष्मणो मूर्च्छितः सञ्जातः। तस्य सञ्जीवनार्थं बलिष्ठो मनोजवो वायुसूनुः हनुमान् औषधिपादपानि आनेतुं हिमालयपर्वतं गतवान्। अर्धरात्रिः गता। तावत्कालं पवनात्मजो नागतः। शोकाभिभूतो रामो भ्रातृप्रवरं लक्ष्मणं स्वाङ्के निधाय भृशं रोदनं करोति। तस्य परममार्मिकोऽयमुद्गारो विश्वस्य कं सहृदयं भावविह्वलं न करोति—

देशे देशे कलत्राणि देशे देशे च बान्धवाः।
तं तु देशं न पश्यामि यत्र भ्राता सहोदरः[४]॥

एतस्मिन्नेव काले वायुसूनुः सपर्वतमौषधिपादपानि आनीतवान्। विश्वविख्यातो वैद्यराजः सुषेणः अह्नाय लक्ष्मणस्य उपचारं कृतवान्। स झटित्येव मूर्च्छां परित्यज्य स्वस्थो भूत्वा महीतलाद् उदतिष्ठत्। ततः स लक्ष्मणं गाढमालिङ्ग्य वचनमिदमब्रवीत्—

---

१. वाल्मीकिरामायणे, ५/३७/६२-६३।

२. तत्रैव, ६/११८/१०।

३. तत्रैव, ७/९७/१४-२६।

४. तत्रैव, ६/१०१/१५।

दिष्ट्या त्वां वीर पश्यामि मरणात् पुनरागतम्।
न हि मे जीवितेनार्थः सीतया च जयेन वा।
को हि मे जीवितेनार्थस्त्वयि पञ्चत्वमागते।।

स वदति—इदानीमहं महाप्रसन्नोऽस्मि। तव कीर्तिः चिरस्थायि भविष्यति।

**विनयो धैर्यः शौर्यं वैदुष्यं स्वामिभक्तिश्च**—हनुमच्चरित्रवर्णनव्याजेन महाकाव्ये विनयधैर्यशौर्यवैदुष्यस्वामिभक्त्यादीनां सर्वैरनुकरणीयानां विश्वजनीनां शाश्वतमूल्यानामभिव्यक्तिः सम्यग् विहिता। वायुसूनुर्हनुमान् एतेषां सर्वेषां गुणानां विग्रहोऽस्ति। हनुमतः प्रथमदर्शनेनैव रामस्तस्य वाक्पटुतया अपूर्ववैदुष्येण च भृशं प्रभावितो जातः। सः लक्ष्मणमकथयत्—हे भ्रातः! अहमस्य विदुषो हृदयहर्षिणीं कल्याणकारिणीं प्रसन्नगम्भीरपदान्वितां वाणीं श्रुत्वा परमाह्लादितोऽस्मि। अयं हि वेदवेदाङ्गमर्मज्ञो व्याकरणशास्त्रस्य च विशेषज्ञो व्युत्पन्नो जनः। अस्य हृद्यामनवद्यां च वाणीं श्रुत्वा उद्यतासिः शत्रुरपि शत्रुतां परित्यज्य मित्रभावं गमिष्यति। अनेन विदुषा सह सावधानेन वार्तालापो विधेयः[१]।

यथाकालमपहृतायाः सीताया अन्वेषणार्थं बुद्धिमतां वरिष्ठो वीर्यवतां श्रेष्ठः प्लवतामपि उत्तमः स्वच्छन्दं नानाविधरूपधारी वेगवान् स शतयोजनविस्तीर्णमनाधृष्यं महार्णवं लीलयैवातिक्रम्य लङ्कां जगाम। स तत्र यथाकालं विविधरूपं धृत्वा सीतान्वेषणे तत्परोऽभूत्। इतस्ततो गतागतं कुर्वन् स रावणान्तःपुरं प्रविश्य सर्वत्र सीतान्वेषणं कृतवान्। परन्तु सा न दृष्टा। ततोऽन्येषां रक्षसां गृहेषु तस्या अनुसन्धानं कृतम्। परं तद्दर्शनं नाभवत्। नगर्याः प्रायः सर्वाणि स्थानानि विचितानि। सीतां कुत्रापि नावलोक्य हनुमान् भृशं दुःखितः सञ्जातः। तेन विचारितम्—यदि सीतामदृष्ट्वाहं वानरेन्द्रपुरीमितो गमिष्यामि, ततः को मे पुरुषार्थो भविष्यति[२]। अत उत्साहमाश्रित्य लंका भूयो भूयः आलोडिता। अन्ते चाशोकवनिकां प्रविश्य सीताया अनुसन्धानमारब्धम्। अन्ततस्तस्या दर्शनं जातम्। तत्र सीतां नानाविधमनुनेतुं स्वस्त्रीभिः परिवृतः लोकरावणो रावण आगतवान्। तां च बहुशः प्रलोभितवान् सीतया च गर्हितः स मासद्वयाभ्यन्तरे तस्या वधं सङ्कल्प्य स्वान्तःपुरं गतः। ततः शोकसन्तप्ता

---

१. वाल्मीकिरामायणे, ४/३/२८-३३।

२. तत्रैव-५/१३/२०।

सीता बहुधा विलापं कृतवती। राक्षस्यश्च तां पुनः पुनः सन्तर्जयामासुः। एकस्मिन् वृक्षे गुप्तरूपेण स्थितो हनुमान् सीतां रामवृत्तान्तं मधुरं श्रावयामास। शनैः शनैः सविनयं सीतासमक्षं गतः सः, तां चाश्वासयामास भूयिष्ठम्। सीतायाः प्रत्ययार्थं स तां सविनयं निवेदयति—

मद्विशिष्टाश्च तुल्याश्च सन्ति तत्र वनौकसः।
मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसन्निधौ।।
अहं तावदिह प्राप्तः किं पुनस्ते महाबलाः।
नहि प्रकृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीतरे जनाः।।
तदलं परितापेन देवि शोको व्यपैतु ते।
एकोत्पातेन ते लङ्कामेष्यन्ति हरियूथपाः[१]।।

किञ्च—

रामाद् विशिष्टः कोऽन्योऽस्ति कश्चित् सौमित्रिणा समः।
अग्निमारुतकल्पौ तौ भ्रातरौ तव संश्रयौ।।

रावणस्य सैन्यशक्तिज्ञानार्थं स्वपराक्रमप्रदर्शनार्थं च प्रमदावनं विध्वंसयामास रावणप्रेषितसहस्राधिकान् सैनिकान् हत्वा उच्चैः स्वरेण उद्घोषः कृतः—

दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः।
हनूमान् शत्रुसैन्यानां निहन्ता मारुतात्मजः।।
न रावणसहस्रं मे युद्धे प्रतिबलं भवेत्।
शिलाभिश्च प्रहरतः पादपैश्च सहस्रशः।।
अर्दयित्वा पुरीं लङ्कामभिवाद्य च मैथिलीम्।
समृद्धार्थो गमिष्यामि मिषतां सर्वरक्षसाम्[२]।।

एवं क्रमेण रावणप्रेषितानां पञ्चसेनापतीनामशीतिसहस्रसैनिकानां तत्पुत्रस्याक्षयकुमारस्य च हेलयैव वधं कृत्वा तत्पुत्रेण इन्द्रजितेन मेघनादेन सह रावणसमक्षं गतः। तत्र रावणस्य प्रबोधनं कृत्वा रामस्य अप्रतिहतशक्तिमेवम्—

---

१. वाल्मीकिरामायणे, ५/३९/३८-४०; २. तत्रैव, ५/४२/३४-३६।

ब्रह्मा स्वयम्भूश्चतुराननो वा रुद्रस्त्रिनेत्रस्त्रिपुरान्तको वा।
इन्द्रो महेन्द्रः सुरनायको वा स्थातुं न शक्ता युधि राघवस्य[१]।।

विश्राव्य लङ्कां च भस्मसात् कृत्वा पुनः सीतायाः सादरं सविनयं दर्शनं कृत्वा रामस्य समीपं गतः। शाश्वतमूल्यनिधानस्य हनुमतः समासेनैव सङ्केतो विहितः। रामायणस्य परायणं कृत्वैव सहृदयातृप्ता भविष्यन्ति। अतः 'रामायणमहामालारत्नं वन्देऽनिलात्मजम्'।

**शरणागतरक्षा**—काव्येऽस्मिन् शरणागतस्य रक्षा साधु प्रदर्शिता अस्ति। शरणागतस्य विभीषणस्य रामेण रक्षा कृता। तत्प्रसङ्गे रामेण स्वसिद्धान्तोऽपि प्रकाशितः—

सकृदेव प्रपन्नाय तवास्मीति च याचते।
अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम।।
आनयैनं हरिश्रेष्ठ दत्तमस्याभयं मया।
विभीषणो वा सुग्रीवो यदि वा रावणः स्वयम्[२]।।

**कृतज्ञता**—मनुष्यस्य महद् भूषणमास्ते कृतज्ञता। हनुमता सीतायाः वृत्तान्तं श्रुत्वा रामो भृशं प्रहृष्टो जातः। स हनुमन्तं प्रति स्वकृतज्ञतां ज्ञापयति कथयति च यद् वस्तुतो हनुमतः प्रत्युपकारः कर्तुं न शक्यते। यतो हि—

अहं च रघुवंशश्च लक्ष्मणश्च महाबलः।
वैदेह्या दर्शनेनाद्य धर्मतः परिरक्षिताः[३]।।

इत्युक्त्वा तेन सस्नेहं हनुमतः परिष्वङ्गः कृतः। राज्याभिषेकानन्तरं हनुमन्तं प्रति स्वाभारं निवेदयन् मर्यादापुरुषोत्तमो भणति—

एकैकस्योपकारस्य प्राणान् दास्यामि ते कपे।
शेषस्येहोपकाराणां भवाम ऋणिनो वयम्।।
मदङ्गे जीर्णतां यातु यत् त्वयोपकृतं कपे।
नरः प्रत्युपकाराणामापत्स्वायाति पात्रताम्[४]।।

---

१. वाल्मीकिरामायणे, ५/५१/४४।
२. तत्रैव, ६/१८/३३-३४।
३. तत्रैव, ७/१/११।
४. तत्रैव, ७/४०/२३-२४।

**चारित्रिकी शुद्धिः**—महर्षेर्वाल्मीकेर्दृष्टौ सच्चरित्रमेव मानवताया निकषोपलः, तद्युक्तस्य नरस्यान्वेषणं तस्य विशदवर्णनमेव रामायणस्य सर्वप्रधानं लक्ष्यम्। निर्मलचरित्रेणैव मनुष्यो देवत्वं भजते। एतादृशस्य चरित्रस्य परिपूर्णविकासो मर्यादापुरुषोत्तमे रामचन्द्र एव दृष्टिगोचरो भवति, तस्य चरित्रमेव आर्यचरित्रस्य परमादर्शोऽस्ति, विद्यते च मानवतायाः चरमाभिव्यक्तिः। रामः स्वयमेव चरित्रस्य महत्त्वं प्रतिपादयन् कथयति—

निर्मर्यादस्तु पुरुषः पापाचारसमन्वितः।
मानं न लभते सत्सु भिन्नचारित्रदर्शनम्॥
कुलीनमकुलीनं वा वीरं पुरुषमानिनम्।
चारित्र्यमेव व्याख्याति शुचिं वा यदि वाऽशुचिम्[१]॥

रामस्य चरितमनन्तमास्ते—'चरितं रघुनाथस्य शतकोटिप्रविस्तरम्'। स हि सर्वशास्त्रार्थतत्त्वज्ञः धर्मज्ञः कृतज्ञः सत्यवाक्यो दृढव्रतो बुद्धिमान् नीतिमान् आत्मवान् जितक्रोधो जितेन्द्रियः सर्वलोकप्रियः सज्जनोपासितः सर्वसमर्थश्चास्ते। कौसल्यानन्दवर्धनः स हि गाम्भीर्ये समुद्र इव, धैर्ये हिमालय इव, पराक्रमे विष्णुतुल्यः, चन्द्रवत् प्रियदर्शनः, क्रोधे कालाग्निसदृशः, क्षमायां पृथ्वीतुल्यः, त्यागे कुबेर इव, सत्यरक्षणे साक्षाद् धर्म इव विराजते[२]। रावणं प्रतिबोधयन् हनुमान् सत्यं भणति—हे रावण! त्रिषु लोकेषु कश्चिदपि नास्ति यो रामस्य व्यलीकं कृत्वा सुखी स्यात्। तस्मात् त्वं मम धर्म्यमर्थानुयायि त्रिकालहितं वाक्यं सम्यग् विमृश्य नरदेवाय रघुनाथाय सीता प्रदीयताम्। रामः परमसमर्थोऽस्ति। तस्य शक्तिसमो नास्ति देवो दानवो मनुष्यो वा—

सर्वान् लोकान् सुसंहृत्य सभूतान् सचराचरान्।
पुनरेव तथा स्रष्टुं शक्तो रामो महायशाः[३]॥

लक्ष्मणस्य जननी सुमित्राऽपि कौसल्यां प्रति रहस्यस्योद्घाटनं कुर्वती व्याहरति यद् रामो हि—

सूर्यस्यापि भवेत्सूर्यो ह्यग्नेरग्निः प्रभोः प्रभुः।
श्रियाः श्रीश्च भवेदग्र्या कीर्त्याः कीर्तिः क्षमा क्षमा[४]॥

---

१. वाल्मीकिरामायणे, २/१०९/३-४।
२. तत्रैव, १/१/८-१८।
३. तत्रैव, ५/५१/३९।
४. तत्रैव, २/४४/१५-१६।

एतादृशस्य सर्वसमर्थस्य मर्यादापुरुषोत्तमस्य चरित्रं परमपावनम्। अन्येषां का कथा देवानामपि पावयति तच्चरित्रात्मकं रामायणम्। 'श्रीमद्रामायणी गङ्गा पुनाति भुवनत्रयम्'। अत एवोद्घोषितं सर्वहितचिन्तनपरायणैराचार्यैः— 'रामादिवद् वर्तितव्यं न रावणादिवत्'। एतत्प्रसङ्गे इमान्यपि आदर्शवाक्यानि स्मर्तव्यान्यनुकरणीयानि च। सुमित्रा स्वसुतं लक्ष्मणमुपदिशति—

रामं दशरथं विद्धि मां विद्धि जनकात्मजाम्।
अयोध्यामटवीं विद्धि गच्छ सौम्य यथासुखम्[1]॥

यतो हि—एष लोके सतां धर्मो यज्ज्येष्ठवशगो भवेत्[2]।

किष्किन्धाकाण्डे लक्ष्मणस्य एषोऽवितथोद्गारपरं विश्वजनीनः सर्वैर्नरैश्चानुकरणीयः—

नाहं जानामि केयूरे नाहं जानामि कुण्डले।
नूपुरे त्वभिजानामि नित्यं पादाभिवन्दनात्[3]॥

वस्तुतो निःश्रेयससिद्धये रामायणस्य सादरं परिशीलनं पुनः पुनः करणीयं सहृदयैः। नान्यः पन्था विद्यतेऽयनाय। अतः सत्यमेवोच्यते—

वाल्मीकिगिरिसम्भूता रामसागरगामिनी।
श्रीमद्रामायणी गङ्गा पुनाति भुवनत्रयम्॥

श्रीमद्रामायणी कथेयम्—

सदूषणापि निर्दोषा सखरापि सुकोमला।
नमस्तस्मै कृता येन रम्या रामायणी कथा॥ इति।



१. वाल्मीकिरामायणे, २/४०/९।
२. तत्रैव, २/४०/६।
३. तत्रैव, ४/६/२२-२३।

# योगशास्त्रे चित्तम्

**श्रीशशिमौलिनाथपाण्डेयः**
अनुसन्धाता, साहित्यविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणस्याम्



योगशास्त्रे चित्तशब्देनान्तःकरणं बुद्धिरुच्यत इति योगः समाधिरिति भाष्यव्याख्यानावसरे प्रथमसूत्रे वाचस्पतिमिश्राः स्वीकुर्वन्ति। एतच्च योगसूत्रं सांख्यकारिकाभ्यां प्रमीयते। चित्तरूपस्यान्तःकरणस्य स्वरूपं द्वितीयसूत्रे भाष्ये उक्तम्—प्रख्यारूपं हि चित्तसत्त्वं रजस्तमोभ्यां संसृष्टमैश्वर्यविषयप्रियं भवति। तदेव तमसानुविद्धमधर्माज्ञानावैराग्यानैश्वर्योपगं भवति। तदेव प्रक्षीणमोहावरणं सर्वतः प्रद्योतमानमनुविद्धं रजोमात्रया धर्मज्ञानवैराग्यैश्वर्योपगं भवति। सांख्यकारिकायां महत्पदवाच्याया बुद्धेर्लक्षणमेवमुक्तमस्ति—

अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम्।
सात्त्विकमेतद्रूपं तामसमस्माद् विपर्यस्तम्।। इति। (का. २३)

अत्र च धर्मज्ञानवैराग्यैश्वर्याणां योगसूत्रव्यासभाष्योक्तक्रमेणैव बुद्धिधर्मत्वं श्रूयते। अतः चित्तशब्देन बुद्धेः कथनं सङ्गतं भवति।

इदं चित्तं पुरुषस्य भोगापवर्गार्थं सृष्टम्, प्रयोजनद्वयसम्पत्त्यनन्तरं स्वकारणे प्रधाने लीयते[1]। तदुक्तं वाचस्पतिमिश्रैः—पुरुषार्थजनकं हि चित्तं साधिकारं शब्दाद्युपभोगविवेकख्याती च तथा पुरुषार्थौ। संस्कारशेषतायान्तु न बुद्धेः प्रतिसंवेदी पुरुष इति नासौ पुरुषार्थ इति।

अत्र जिज्ञासाद्वयम् उदेति—बुद्धेः प्रतिसंवेदनं नाम किम्? संस्कारशेषतारूपा अपुरुषार्थावस्था चित्तस्य कदा? तत्र बुद्धेः प्रतिसंवेदनं नाम

---

१. तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः। (१।५१ योगसूत्रस्य व्याख्याने)

बुद्धिदर्पणे पुरुषप्रतिबिम्बसंक्रमणम्[१]। तच्च बुद्धेः स्वच्छत्वाद् भवति। बुद्धिर्हि क्लेशकर्मवासनादिभिर्विषयेन्द्रियादिभिश्च संहत्य पुरुषार्थमभिनिर्वर्तयति। यथा जले चन्द्रस्य प्रतिबिम्बसंक्रमणं भवति तथैव पुरुषस्य बुद्धिवृत्तौ प्रतिबिम्बनं भवति। पुरुषस्यासङ्गतया बुद्धौ प्रतिबिम्बनं विना भोगो न सम्भवति, अत एव—

एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः।
कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति।। (सां.का. ३६)

इत्यस्य गौडपादभाष्ये—यानि करणान्युक्तानि एते गुणविशेषाः। प्रदीपकल्पाः प्रदीपवत् प्रकाशकाः, परस्परविलक्षणा असदृशा भिन्नविषया इत्यर्थः। गुणविशेषा इति गुणेभ्यो जाताः। कृत्स्नं पुरुषार्थं बुद्धीन्द्रियाणि कर्मेन्द्रियाण्यहङ्कारो मनश्चैतानि स्वं स्वमर्थं पुरुषस्य प्रकाश्य बुद्धौ प्रयच्छन्ति बुद्धिस्थं कुर्वन्तीत्यर्थः यतो बुद्धिस्थं सर्वं विषयसुखादिकं पुरुष उपलभते।

एवं भोगरूपं पुरुषार्थं चित्तं साधयति। अपवर्गस्तु लिङ्गविनिवृत्तौ भवतीति निरूपितं सांख्यकारिकायां योगशास्त्रस्याप्यभिमतम्—

तत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः।
लिङ्गस्याविनिवृत्तेस्तस्माद् दुःखं स्वभावेन।।५५।।

अत्र गौडपादभाष्यम्—लिङ्गनिवृत्तौ मोक्षो मोक्षप्राप्तौ नास्ति दुःखमिति। लीयते यत्तल्लिङ्गमिति व्युत्पत्त्या लिङ्गं बुद्धिः। बुद्धेर्निवृत्तिश्च संस्कारशेषावस्थाया अनन्तरं भवतीति श्रूयते।

अत इदानीं चित्तस्य संस्कारशेषता विचार्यते—'विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः' (१।१८) इति सूत्रेण विरामप्रत्ययाभ्यासेन संस्कारः शिष्यते यस्मिन् तादृशः असम्प्रज्ञातः समाधिः प्राप्यत इति सूच्यते। इतरनिवृत्तिपूर्वकमवस्थानं हि शेषशब्दार्थः। अतः कस्य चित्तान्निवृत्तौ संस्कारमात्रं

१. द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः। (यो.सू. २।२० इत्यस्य व्याख्यायाम्) एतदुक्तं भवति—यथा निर्मले जलेऽसङ्क्रान्तोऽपि चन्द्रमाः सङ्क्रान्तप्रतिबिम्बतया सङ्क्रान्त इव। एवमत्राऽप्यसङ्क्रान्ताऽपि सङ्क्रान्तप्रतिबिम्बा चितिशक्तिः सङ्क्रान्तेव तेन बुद्ध्यात्मत्वमापन्ना बुद्धिवृत्तिमनुपतति।

शिष्यत इति विचार्यते चेत् वृत्तीनां निवृत्तिः प्राथम्येनाऽऽयाति, समाधेः प्राक् चित्तस्य सर्वदा वृत्तिमत्त्वात्। प्रमाणविपर्ययविकल्पनिद्रास्मृतिरूपाः पञ्च वृत्तयः सन्ति, तासु च काऽपि एका वृत्तिः सर्वदा भवति चित्तस्य। निद्रायामपि चित्तस्य अभावप्रत्ययालम्बना वृत्तिर्भवति। जाग्रत्स्वप्नयोस्तु जायमाना वृत्तयः सर्वैरनुभूयन्त एव। अत एव अभावप्रत्ययालम्बना वृत्तिर्निद्रेति योगसूत्रभाष्ये उच्यते—तस्मात् प्रत्ययविशेषो निद्रा सा च समाधावितरप्रत्ययवन्निरोद्धव्येति। एवं सर्ववृत्तिनिरोधे असम्प्रज्ञातः समाधिर्भवति चित्तस्य। अयं निरोधश्चित्तस्य धर्मः। निरोधसहिताश्चित्तस्य सप्तधर्मा उक्ता योगसूत्रे—

निरोधधर्मसंस्काराः परिणामोऽथ जीवनम्।
चेष्टाशक्तिश्च चित्तस्य धर्मा दर्शनवर्जिताः[१]॥

इति। अस्य व्याख्यायां वाचस्पतिमिश्रैरुक्तम्—निरोधो वृत्तीनाम् असम्प्रज्ञातावस्था। अग्रे च उक्तम्—चित्तस्यागमतोऽनुमानतश्च संस्कारशेष-भावः समधिगम्यते। धर्मशब्दः पुण्यापुण्ययोरुपलक्षणत्वेन प्रयुक्तस्तेन च पुण्यापुण्ययोश्चित्तेऽवस्थानं सूच्यते। पुण्यापुण्ययोरवस्थानञ्च आगमतः सुखदुः-खोपभोगदर्शनादनुमानतो वा गम्यते। स्मृतिरूपकार्येण संस्काराणां चित्तधर्मत्वं गम्यते। यतः संस्कारजन्यं ज्ञानं स्मृतिर्भवति। चित्तस्य त्रिगुणत्वात् प्रतिक्षणं परिणामोऽनुमीयते। तदुक्तं २।१५-सूत्रभाष्ये महर्षिणा व्यासेन—चलं च गुणवृत्तमिति क्षिप्रपरिणामि चित्तमुक्तम्। जीवनं प्राणधारणम् असंविदितश्चित्तस्य धर्मः श्वासगत्यानुमीयते। चेष्टा चित्तस्य क्रिया सा च तत्तच्छरीरप्रदेशे चित्तस्य संयोगेनानुमीयते। शक्तिरपि चित्तस्य धर्मः। सा च उद्भूतानां कार्याणां सूक्ष्मावस्था।

'संस्कारसाक्षात्करणात् पूर्वजातिर्ज्ञानम्' (३।१८) इति सूत्रभाष्येऽ-प्युक्तम्—द्वये खलु अमी संस्काराः स्मृतिक्लेशहेतवो वासनारूपा विपाकहेतवो धर्माधर्मरूपा इति। तत्र ज्ञानजन्याः संस्काराः स्मृतिहेतवः। अविद्यादिसंस्कारा अविद्यादीनां क्लेशानां हेतवः। विपाको जात्यायुर्भोगरूपस्तस्य हेतवो धर्माधर्मरूपाः। एते पूर्वजन्मसु निष्पादिता यथाकालं स्वकार्यं भोगादिकं ददति।

---

१. 'क्रमान्यत्वे परिणामान्यत्वं हेतुः' (३।१५) इति सूत्रे व्यासभाष्ये उक्तम्।

अत एव जीवन्मुक्तस्य मुनेः चित्ते संस्काराणां शिष्टत्वाद् भोगा भवन्ति। आयुषो नियतकालं यावत् स जीवति भोगाँश्च प्राप्नोति भोगशेषञ्च काव्यव्यूहेन क्षपयति। एतच्च 'निर्माणचित्तान्यस्मितामात्रात्' इत्यस्योपक्रमे उक्तं योगभाष्ये[1]।

एतावदेतं निर्णीतं चित्तवृत्तिनिरोधे संस्कारशेषे च समाधिर्भवति। स च सार्वभौमश्चित्तस्य धर्म इत्युच्यते भाष्ये। अस्यायमभिप्रायः—सर्वासु भूमिषु मधुमत्यादिषु चित्तस्य समाधिरूपो धर्मो भवति, कासाञ्चिद् वृत्तीनां निरोधात्। किन्तु सर्ववृत्तिनिरोधे सति संस्कारशेषो निर्बीजः समाधिर्भवति असम्प्रज्ञातः। चित्तस्य भूमयोऽवस्थाः चतस्रः मधुमती, मधुप्रतीका, विशोका, संस्कारशेषा च सन्ति (३।४८, ३।५१)। विक्षिप्ते चित्तेऽपि समाधिरस्ति' किन्तु स न योगपक्षे स्वीक्रियते। समाधिशब्देनाभिधीयमानः प्रथमः समाधिः सम्प्रज्ञातः सम्प्रज्ञातपूर्वकत्वादसम्प्रज्ञातस्य प्रथमस्य समाधेः सत्त्वात् तस्य विचारः क्रियते। चित्तभूमीनां स्फुटप्रतिपत्त्यर्थम्। चित्तचेष्टितस्य च सर्वथा ज्ञानाय। एतस्य च लक्षणमुक्तं योगभाष्ये—यस्त्वेकाग्रे चेतसि सद्भूतमर्थं प्रद्योतयति क्षिणोति च क्लेशान् कर्मबन्धनानि श्लथयति निरोधमभिमुखीकरोति स सम्प्रज्ञातो योग इत्याख्यायते। अत्र भाष्यव्याख्याने निरोधमभिमुखीकरोतीति कथनात् नास्त्यत्र सर्वथा निरोधः, कासाञ्चिद् वृत्तीनामवस्थानाच्च न संस्कारमात्रशेषता चित्तस्येति ज्ञायते। सर्ववृत्तिनिरोधे संस्कारमात्रशेषता आयाति।

अत्र सद्भूतमर्थं प्रद्योतयति इति कथनेन प्रशब्दबलात् तत्त्वज्ञानस्य साक्षात्काररूपता आयाति, अत्र तत्त्वं सद्भूतोऽर्थ आत्मा। सांख्ययोगदृष्ट्या पुरुषो वा। अतोऽसाक्षात्काररूपमागमादनुमानतो वा जातं ज्ञानमात्मविषयकमपि न कल्याणकारि भवति। आत्मनः साक्षात्करणे क्लेशाः क्षीणा भवन्ति, कर्मबन्धनानि च शिथिलानि भवन्ति। आत्मसाक्षात्कारे क्लेशानां क्षीणता कथमिति नाशङ्कनीयम्, विद्याविद्ययोर्विरोधात्। विद्योदये ह्यविद्या नश्यति। क्लेशानाञ्च मूलमविद्या। तस्यां नष्टायाम् अस्मितादीनामवस्थानं न सम्भवति, अविद्यामूलत्वात् सर्वेषाम्। कर्मबन्धनानि कर्मफलजनकान्यपूर्वरूपाणि स्वकार्यादवसादयति सम्प्रज्ञातः समाधिः, असम्प्रज्ञातसमाधिरूपं निरोधं

१. यदा तु योगी बहून् कायान् निर्मिमीते तदा किमेकमनस्कास्ते भवन्त्यथानेकमनस्का इति तत्रत्यं भाष्यं वर्तते।

चाभिमुखीकरोति। अयमत्र विवेकः—रजस्तमोमयी प्रमाणादिवृत्तिः सात्त्विकीं वृत्तिमुपादाय सम्प्रज्ञाते निरुद्धा, असम्प्रज्ञाते तु सर्वासामेव निरोधः। अतोऽत्र न सम्प्रज्ञायते किञ्चित्। असम्प्रज्ञाते संस्काराः शिष्यन्ते। तदिह सम्प्रज्ञात-समाध्यसम्प्रज्ञातसमाधिरूपावस्थाद्वये चित्तस्य चतस्रो भूमयो मधुमती-मधुप्रतीका-विशोका-संस्कारशेषाः समाप्तास्ता विचार्यन्ते।

'स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात्' (यो.सू. ३।५१) इत्यत्र भाष्ये चत्वारो योगिनो वर्णिताः—प्राथमकल्पिको मधुभूमिकः प्रज्ञाज्योतिरतिक्रान्तभावनीयश्चेति। प्राथमकल्पिको योगी प्रवृत्तमात्र-ज्योतिर्भवति। ज्योतिः परचित्तादिविषयं ज्ञानं प्रवृत्तमात्रं भवति न वशीकृतम्। मधुभूमिको योगी प्राप्तऋतम्भरप्रज्ञो भवति स च भतेन्द्रियाणि जेतुं वाञ्छति। चित्तस्येयमवस्था मधुमती भूमिरुच्यते। मधुप्रतीकावस्थाया दिग्दर्शनं 'ततो मनोजवित्वं विकरणभावः प्रधानजयश्चेति' सूत्रे (यो.सू. ३।४८) मिलति। एताः तिस्रः सिद्धयो मधुप्रतीका उच्यन्त इति हि तत्रत्यं भाष्यम्। अत्र मनोजवित्वं मनसोऽनुत्तमो गतिलाभः। विकरणभावो विदेहानामिन्द्रियाणां करणभावः। अस्माकमिन्द्रियाणि देहसंस्थानि करणभावं प्रतिपद्यन्ते। एतादृशस्य योगिनस्तु दूरदेशे सूक्ष्मविषयेऽपि करणभावं प्रतिपद्यन्ते। प्रधानजयो नाम सर्वप्रकृतिविकारवशित्वम्। चित्तस्य तृतीया विशोकावस्था विचार्यते, अन्यत्र 'सत्त्वपुरुषान्यथाख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वञ्च' (३।४९) इति सूत्रे भाष्य उक्तम्—'एषा विशोका नाम सिद्धिर्यां प्राप्य योगी सर्वज्ञः क्षीणक्लेशबन्धनो वशी विहरति'[1] सत्त्वपुरुषान्यथाख्याति मात्रे चित्ते विशोका नाम सिद्धिरुच्यते। तादृशमेव चित्तं धर्ममेघध्यानोपगं भवतीत्यप्युच्यते (१।२ सूत्रभाष्यम्)। किन्तु वर्तते तत्र किमपि वैशिष्ट्यं यद् विशोकावस्थायां सर्वभावाधिष्ठातृत्वं भवति। यदा तु प्रसंख्यानान्न किञ्चित् सर्वभावाधिष्ठातृत्वादि प्रार्थयते प्रत्युत तत्रापि विरक्तस्तदा धर्ममेघः समाधिर्भवति। अयं समाधिः सवासनक्लेशकर्माशयप्रशमहेतुर्भवति। धर्ममेघध्यानमेव परमं प्रसंख्यानमुच्यते। एतादृशो योगी प्रज्ञाज्योतिर्वक्तुं शक्यते। अस्य च भूतेन्द्रियजयः परचित्तादि-ज्ञानादिकञ्च भवति। एषु कृतरक्षाबन्धश्चायं योगी ततो न च्यवते।

---

१. योगसूत्रे १।१८ भाष्ये।

एतादृशस्यैकं विशेषणवाक्यम्। सर्वेषु भावितेषु भावनीयेषु कृतरक्षाबन्धः कृतकर्तव्यसाधनादिमान् इति प्रयुज्यते। यस्यायमभिप्रायः—एतादृशो योगी निष्पादितेषु भूतेन्द्रियजयात् परचित्तादिज्ञानादिषु कृतरक्षाबन्धो भवति यतस्तेभ्यो न च्यवते। निष्पादयितुं योग्येषु विशोकादिषु परवैराग्य-पर्यन्तेषु कर्तव्य-साधनवान् भवति। अर्थाद् विशोकादिसिद्धीः प्राप्तुं तेन साधनमनुष्ठेयं भवति। विशोकावस्थातो धर्ममेघध्यानान्तरभाविपरवैराग्यपर्यन्तं तेन साधनान्यनुष्ठेयानि वर्तन्ते, पुरुषप्रयत्नस्य साधनविषयस्यैव साध्यनिष्पादकत्वस्य दृष्टत्वात्।

अस्य धर्ममेघस्य पराकाष्ठा परं वैराग्यं भवति। परवैराग्याच्च निर्बीजः समाधिर्भवति। 'तस्य परं वैराग्यमुपाय' इति भाष्ये[१] उच्यते। इदानीं 'चित्ते संस्कारमात्रं शिष्यते' इत्यपि तत्रैवोच्यते। अस्यामवस्थायां योगी अतिक्रान्तभावनीय उच्यते। एतादृशस्य योगिनो किमपि निष्पादनीयं न भवति। अत एवोच्यते वाचस्पति[१]मिश्रैः—'अस्य हि भगवतो जीवन्मुक्तस्य चरमदेहस्य चित्तप्रतिसर्ग एकोऽर्थः' इति। धर्ममेघसमाधिरेव निर्बीजस्य समाधेः कारणं भवतीत्युच्यते तत्त्ववैशारद्याम्[२]—धर्ममेघसमाधिरेव हि नितान्तविगलित-रजस्तमोमलाद् बुद्धिसत्त्वादुपजातस्तद्विषयातिक्रमेण प्रवर्तमानोऽनन्तो विषयाद्यवदर्शी समस्तविषयपरित्यागाच्च स्वरूपप्रतिष्ठः सन्निरालम्बनः संस्कारमात्रशेषस्य निरालम्बनस्य समाधेः कारणमुपपद्यते सारूप्यादिति। धर्ममेघसमाधिः सम्प्रज्ञातसमाध्यनन्तरं भवति। धर्ममेघज्ञानमेव तारकं ज्ञानम्। एतच्च परिपूर्णं ज्ञानम्, अत एव योगसूत्र-(३।५१) भाष्ये उच्यते—अस्यैवांशो योगप्रदीपो मधुमतीं भूमिमुपादाय यावदस्य परिसमाप्तिरिति। अयं भावः—प्राप्तऋतम्भरप्रज्ञस्य योगिनश्चित्तावस्था मधुमती भूमिरुच्यते। एतस्यैव 'योगप्रदीपः' इति नाम वर्तते। इतः परं तारकज्ञानपर्यन्तं चित्तस्य विभिन्ना अवस्था भवन्ति। या मधुप्रतीका विशोका संस्कारशेषेति रूपेण वर्णिताः।

इयं संस्कारशेषावस्था चित्तप्रतिसर्गं सूचयति। यतोऽवसिताधिकारं चित्तं प्रलीयते। तदुक्तं ४।३२-सूत्रभाष्ये योगसूत्रे तस्य धर्ममेघस्योदयात् कृतार्थानां गुणानां परिणामक्रमः परिसमाप्यते। न हि कृतभोगापवर्गाः परिसमाप्तक्रमाः क्षणमप्यवस्थातुमुत्सहन्ते इति। अत्र ज्ञानसंस्काराः परवैराग्यसंस्कारा उच्यन्ते' ते

---

१. तत्त्ववैशारदी-३।५१; २. १।१८ योगसूत्रे।

चित्ते विद्यमानाः चित्ताधिकारसमाप्त्यनन्तरमपि चित्ते शेरते। चित्तप्रतिसर्गे च चित्तेन सहैव चित्तप्रकृतौ प्रधाने लीयन्ते। अयं चित्तप्रतिसर्गः 'पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति' ४।३४-सूत्रे उक्तम्। इदानीं चित्तप्रतिसर्गे जायमाने चित्ते विद्यमानाः संस्कारा अपि लीयन्त इति। चित्तलयक्रमे १।५० सूत्रे वाचस्पतिमिश्रैः चित्तचेष्टितम् इत्थं विचारितम्— चित्ते हि कार्यद्वयं शब्दाद्युपभोगो विवेकख्यातिश्चेति तत्र क्लेशकर्माशयसहितं शब्दाद्युपभोगे प्रवर्तते प्रज्ञाप्रभवसंस्कारोन्मूलितनिखिलक्लेशकर्माशयस्य तु चेतसोऽवसितप्रायाधिकारभावस्य विवेकख्यातिमात्रमवशिष्यते कार्यम्। तस्मात् समाधिसंस्काराश्चित्तस्य न भोगाधिकारहेतवः, प्रत्युत तत्परिपन्थिन इति स्वकार्याद्भोगलक्षणादवसादयन्ति (चित्तम्) असमर्थं कुर्वन्ति यस्मात् ख्याति-पर्यवसानं हि चित्तचेष्टितम्। एवं भोगाधिकारसमाप्तिः प्रयोजनं समाधिप्रज्ञाप्रभवसंस्काराणामुक्तम्। तस्यापि निरोधे 'सर्वनिरोधान्निर्बीजः समाधिः' इति सूत्रे च प्रज्ञाकृतानां संस्काराणां निरोधप्रकार इत्थमुक्तः।

परेण वैराग्येण ज्ञानप्रसादमात्रलक्षणेन संस्कारोपजननद्वारा तस्याऽपि प्रज्ञाकृतस्य संस्कारस्यापि निरोधो, न केवलं प्रज्ञाया एव निरोधः। सर्वस्योत्पद्यमानस्य संस्कारप्रज्ञाप्रवाहस्य निरोधात् कारणाभावेन कार्यानुत्पादात् निर्बीजः समाधिर्भवति। निरोधजः संस्कारः समाधिजान् संस्कारान् बाधते।

निरोधस्थितिकालक्रमानुभवेन निरोधचित्तकृतसंस्कारास्तित्वमनुमेयं भवति। व्युत्थाननिरोधसमाधि(सम्प्रज्ञातसमाधि-)प्रभवैः संस्कारैः कैवल्यभागीयैः (सम्प्रज्ञातसमाधिप्रभवाः संस्काराः कैवल्यभागीया भवन्ति, कैवल्यप्रापकत्वात्) चित्तं स्वस्यां प्रकृतौ अवस्थितायां प्रविलीयते। तस्मादेतादृशः संस्कारश्चित्तस्याधिकारश्च चित्तेन सह कैवल्यभागीयैः संस्कारैर्विनिवर्तते। एतस्यामवस्थायां पुरुषः स्वरूपमात्रप्रतिष्ठः केवलः शुद्धो भवति।

इत्थं चित्तस्य संस्कारशेषावस्था लयश्च विचारितः, एतद्वर्णनव्याजेन च योगस्य माहात्म्यमपि सूचितम्। योगस्य माहात्म्यन्तु योगियाज्ञवल्क्य एवं वदति याज्ञवल्क्यस्मृतौ—

> इज्याचारदमाऽहिंसादानस्वाध्यायकर्मणाम्।
>
> अयं हि परमो धर्मो यद्योगेनात्मदर्शनम्।। (उपोद्घातप्रकरणे-९)

मनुष्यशरीरप्राप्ते: परमो लाभ: परमो धर्मो योगशास्त्रीयोपायैरात्मसाक्षात्कारो वर्तत इति तस्य हार्दम्।

न केवलं महर्षिर्याज्ञवल्क्य एव 'एतेन योग: प्रयुक्त:' (ब्र.सू. २।१।३) इति सूत्रव्याख्यानावसरे भामतीकारोऽपि योगस्य महत्त्वं स्वीकरोति। तथा च भामतीवाक्यम्—नानेन योगशास्त्रस्य हिरण्यगर्भपातञ्जलादे: सर्वथा प्रामाण्यं निराक्रियते, किन्तु जगदुपादानं स्वतन्त्रप्रधानं तद्विकारं महदहङ्कारपञ्चतन्मात्रगोचरं प्रामाण्यं नास्तीत्युच्यते। न चैतावतैषामप्रामाण्यं भवितुमर्हति यत्पराणि हि तानि तत्राऽप्रामाण्येऽप्रामाण्यमश्नुवीरन्। न चैतानि प्रधानादिसद्भावपराणि, किन्तु योगस्वरूपतत्साधनतदवान्तरफलविभूतितत्परमफलकैवल्यव्युत्पादनपराणीति। योगशास्त्रस्येदं प्रामाण्यमात्मदर्शनं प्रति कारणत्वात् स्वीक्रियते। योगशास्त्रे च—'सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि' (२।४१) इति सूत्रे व्यासभाष्ये उक्तम्—शुचे: सत्त्वशुद्धिस्तत: सौमनस्यं (स्वच्छता) तत ऐकाग्र्यं तत इन्द्रियजयस्ततश्चात्मदर्शनयोग्यत्वं बुद्धिसत्त्वस्य भवति। अत्र हि भाष्ये मनस एकाग्रतायां मनस्तन्त्राणामिन्द्रियाणां जय उच्यते। मनस एकाग्रता च चित्तमलानां क्षालनेन चित्तवृत्तीनां निरोधे भवति। एकाग्रतायां सत्यां सम्प्रज्ञात: समाधिर्भवति, अनन्तरञ्चासम्प्रज्ञात: समाधिर्भवति। इदं सर्वं चित्तस्य चेष्टितम्। चित्तवृत्तिनिरोधो हि योग:, स च यमनियमाद्यष्टाङ्गोपेत एव आत्मसाक्षात्कारद्वारा परमपुरुषार्थोपयोगीति योगस्य सारमुक्त्वा विरम्यते।



# महायानसूत्रेष्वनात्मवादः

डॉ. केदारनाथशर्मा
उपाचार्यः, संस्कृतविभागस्य
जम्मू-विश्वविद्यालये, जम्मू



खिष्टाब्दस्य पञ्चम-षष्ठशताब्दीपूर्वं वैदिककर्मकाण्डस्य विरोधे भगवतो बुद्धेन यद्दार्शनिकक्रान्तेः सूत्रपातो विहितः, सोऽपूर्व एव। बुद्धप्रतिष्ठापितस्य दर्शनस्यैतस्य भारतीयनास्तिकदर्शनेष्वद्वितीयं स्थानमस्ति। आस्तिकदर्शनानां नैकानां सिद्धान्तानां प्रादुर्भावोऽपि बौद्धदर्शनसिद्धान्तानां खण्डनक्रम एव जातः। एवमास्तिकदर्शनानां कतिपयानां सिद्धान्तानां विकासेऽपि बौद्धदर्शनस्य महद्योगदानमस्ति। वस्तुतो भारतीयचिन्तनपरम्परां सम्यगधिगन्तुं बौद्धदर्शनस्य सिद्धान्तानामनुशीलनमपि अनिवार्यम्। भगवतो बुद्धस्य मुख्यं प्रयोजनं उपनिषत्प्रतिपादितस्य आत्मतत्त्वस्य खण्डनमेव प्रतीयते। सकलानां दुष्कर्मणां दुष्प्रवृत्तीनाञ्च मूले आत्मवादं प्रमुखं कारणं समनुभूय सपृथक् पदार्थत्वेन आत्मतत्त्वमेव प्रतिसिषेध (दीर्घनिकाय, पृ. १३-११५)[१]। बुद्धो मानसिकान् अनुभवान्, विविधाः प्रवृत्तीश्च स्वीकरोति, परन्तु आत्मानमेतेषां सङ्घातभिन्नं किमपि न मन्यते। तन्मते प्रत्यक्षगोचराणां मानसप्रवृत्तीनां पुञ्जमेवास्ति आत्मा। प्रवृत्तीनामेतासां सङ्घातातिरिक्तं कुतोऽस्ति अन्यत्र आत्मनः सत्ता? बुद्धस्यायं सिद्धान्त आधुनिकवैज्ञानिकानां सिद्धान्तस्यास्य समकक्षतां भजते, यत्र मानसिकदशास्तु स्वीकृता भवन्ति, परन्तु तदेकीकरणात्मकस्य आत्मपदार्थस्य सत्ता निराकृता विद्यते[२]। बौद्धदर्शनानुसारं जगतो निखिलमपि पदार्थजातं सङ्घातात्मकमस्ति। यत्रावयवास्तु स्वीकृताः, परन्तु अवयवी निराकृतः। बौद्धमतानुसारं, लोकेऽन्यदर्शनेषु च योऽवयवी कथ्यते, स तु वस्तुतोऽवयवानां सङ्घातातिरिक्तो न कोऽपि वर्तते। उदाहरणार्थं—शरीरं तावत् हस्तपाद-नासिकादिबाह्याङ्गानाम् एवञ्च मनोबुद्धिसदृशाणामान्तरिकेन्द्रियाणां सङ्घातरूप एवास्ति, न तैर्भिन्नमन्यं किमपि पदार्थजातम्। हस्ताद्यवयवैरिन्द्रियैश्च पृथग्भूतस्य न कस्यापि अवयविनोऽस्तित्वं सन्दृश्यते। तर्कमिदमनुसृत्य बुद्ध

१. भारतीयदर्शन (बलदेव उपाध्याय), पृ. १२६।
२. तदेव, पृ. १२६।

आत्मानं (अवयविनम्) न मन्यते। आत्मवादिनां मते इच्छा-द्वेष-प्रयत्नसुख-दुःखादयो आत्मनो धर्माः स्वीकृताः, आत्मा चैतेषां धर्मी। परन्तु बुद्धमते स (आत्मा) एतेषां सङ्घात एव। वस्तुत आत्मवादिभिरिच्छाद्यनुभूतीनां प्रत्यभिज्ञानादिज्ञानविशेषाणाञ्च आधाररूपेणैव आत्मनः आवश्यकता सिद्ध्यते, परन्तु सङ्घातवादिना बुद्धेन कथम् एतादृश आत्मा स्वीकर्तुं शक्यते। फलत आत्मन आधारे मान्यानां ज्ञानानामनुभूतीनाञ्च गहनं चिन्तनं मननं च विधाय बुद्धः पञ्चस्कन्धसिद्धान्तं प्रतिष्ठापितवान् यस्य विश्वदार्शनिकसिद्धान्तेषु अपूर्वं स्थानमस्ति[१]। रूप-वेदना-संज्ञा-संस्कार-विज्ञानानीति पञ्च स्कन्धाः।

१. पृथ्वी-जल-तेजो-वायु-आकाशसंज्ञकानि चत्वारि भूतानि तज्जन्यं शरीरं च रूपस्कन्धः।

२. वस्तुसाक्षात्करणमिति संज्ञास्कन्धः।

३. तज्जन्या दुःख-सुख-ताटस्थ्यादिभावा एव वेदनास्कन्धः।

४. अतीतानुभवैः उत्पाद्या, स्मृतेश्च कारणभूता सूक्ष्मा मानसिकी प्रवृत्तिश्च 'संस्कारस्कन्धः'।

५. तथा चैतन्यं विज्ञानं स्कन्ध इत्येते पञ्चस्कन्धाः[२]। 'आत्मा' एतेषामेव पञ्च स्कन्धानां 'पञ्जः' अस्ति। चैतन्यस्य आधारोऽपि एत एव पञ्च। लघुपत्रस्यैतस्य अग्रिमपंक्तिषु महायानसूत्रेषु विशेषतो लङ्कावतारसूत्रे, प्रतिपादितमनात्मवादं विचार्यते।

अनात्मत्वमनित्यत्वञ्च बौद्धदर्शनस्य मौलिकसिद्धान्तेषु प्रमुखस्थानं भजतः। निखिलस्य बौद्धदर्शनस्य भवनमनात्मत्वानित्यत्वयोराधारशिलायां प्रतिष्ठितं वर्तते। तृष्णाया आत्यन्तिकोच्छेदाय बुद्धोऽनात्मवादमुपदिदेश। बुद्धत्वावाप्तये मार्गदर्शनं महायानसूत्राणां प्रमुखो विषयः। महायानसूत्राणि प्राधान्येन भगवतो बुद्धस्य जीवनं, महिमानं, करुणाञ्च विविधैः स्तुतिकथनैः प्रकटयन्ति। परन्तु यत्र तत्र स्तुतिकथनप्रसङ्गेषु बुद्धस्यानुगामिभिरात्मनोऽस्तित्वेऽनस्तित्वविषयेऽपि विचारः प्रकटितः। अस्तित्वहीनस्याज्ञातस्य, अवास्तवस्यात्मनः पारलौकिकसुखोत्पादनेच्छया वैदिककर्मकाण्डप्रपञ्चे संलग्नान् जनान् बुद्धोऽनात्मवादमुपदिष्टवान्। तृष्णायाः समग्रोच्छेदाय आत्मतत्त्वस्य निषेधः सर्वप्रमुखः। प्रज्ञापारमितावर्णने बौधिसत्त्वः कथयति यत् तथागतो न उत्पन्नो भवति, न चाप्यनुत्पन्नः। स न कुत्रचिद् गच्छति न वागच्छति[१]। तत्र

---

१. भारतीय दर्शन (श्रीकान्त पाण्डेय), पृ. १२८।
२. भारतीय दर्शन (आचार्य बलदेव उपाध्याय) पृ. १२६।

उपमासाहाय्येन वर्णितं विद्यते यत्—'यथा पिपासाकुलो जनः मृगमरीचिकायां जलं पश्यति, परञ्च तस्य ज्ञानं भ्रमात्मकमेव तथैव तथागतस्य गमनागमनविचारोऽपि भ्रमात्मकोऽस्ति'[२]।

अपरञ्च यथा द्रोणी-चर्म-तन्त्रपुरुषसहकारेण वीणा नदति शब्दश्चोत्पद्यते, परन्तु न स शब्दः कुतोऽप्यागच्छति, न च कुत्रचिद् गच्छति। बीणाशब्दो नैकहेतुप्रत्ययेनोत्पद्यते न चानेकहेतुप्रत्ययैरुत्पद्यते न चानेकहेतुः स शब्द एकेन हेतुप्रत्ययेनोत्पन्नो भवत्यनेकैर्हेतुप्रत्ययैरुत्पन्नो भवति। एवमेव तथागतस्य प्रादुर्भावोऽन्तर्धानञ्चाप्यवलोकनीयम्[३]। तत्र प्रतिपादितञ्च—'एवं त्वया कुलपुत्र तेषां तथागतानामागमनं च गमनं च द्रष्टव्यम्[४]।' हरिभद्रः कथयति यथा खराणां शृङ्गाणि न भवन्ति तथैव आत्मनोऽस्तित्वमपि नास्ति[५]।

बौद्धदर्शने रूप-वेदना-संज्ञा-संस्कार-विज्ञानानि इति पञ्चस्कन्धा एव चेतनाधाराः। केचन एषामनुभूतिमेव 'आत्मा' इति मन्यन्ते। बौद्धा नैतत्स्वीकुर्वन्ति। महायानसूत्राणि पञ्चस्कन्धेषु आत्मव्यवहारं निषेधयन् प्रतिपादयन्ति यद् रूपादयः पञ्चस्कन्धा अनित्यस्वभावाः, शून्यस्वभावाश्च सन्ति। इमे स्कन्धा जडभूता निरीहतां भजन्ते। अतो नैतेषु स्कन्धेषु आत्मा जीवो वा कल्पनीयः[६]। बौद्धानां मते न कश्चिदपि पदार्थो नित्यः। पञ्चस्कन्धानां सङ्घातरूप आत्मा चापि अनित्योऽस्ति, न चास्ति अस्य अवयविरूपेण पृथक् सत्ता[७]।

महायानसूत्रेषु प्रतीत्यसमुत्पादसिद्धान्तमनुसृत्य आत्मविचारप्रसङ्गे वर्णितमस्ति यत् चाविद्यातः संस्काराः, संस्कारेभ्यो विज्ञानानि, विज्ञानेभ्यो नामरूपादीनि जायन्ते। क्रमेणानेन दुःखस्यैवोत्पत्तिर्भवति। विपर्यये चास्मिन् सिद्धान्तेऽविद्यानिरुद्धे संस्कारा निरुन्धन्ति, संस्कारेषु निरुद्धेषु विज्ञानानि

---

१. न खलु कुलपुत्र तथागताः कुतश्चिदागच्छन्ति वा गच्छन्ति वा।
—अष्टसाहस्रिका प्रज्ञापारमिता (हरिभद्रकृता), पृ. २५३।

२. एवमेव कुलपुत्र ये केचित्तथागतरूपेण घोषेण वा अभिनिविष्टाः, ते तथागतस्यागमनं च गमनं च कल्पयन्ति, सर्वे ते बालजातीया दुष्टप्रज्ञजातीया इति वक्तव्याः, तद्यथापि नाम स एव पुरुषो योऽनुदके उदकसंज्ञामुत्पादयति। —तदेव, पृ. २५३।

३. बौद्धदर्शनेषु अनित्यतानात्मवादयोर्विकासो विमर्शरूपः, पृ. ६९।

४. अष्टसाहस्रिका प्रज्ञापारमिता (हरिभद्रकृता) पृ. २५४-२५५।

५. अर्थक्रियासमर्थत्वात् खरविषाणवत्तथ्यसु वृत्त्यापि अनभिनिर्वृत्तत्वेन अत्यन्तं नास्त्यात्मा। अथ चात्मेति व्यपदेशः। —तदेव, पृ. ३२३।

६. चक्षुरनित्यमध्रुवं तथा श्रोत्रघ्राणं जिह्वापि कायमनदुःखा अनात्मशून्याः। जडाः स्वभावे तृणकुड्म इव निरीहा नैवात्र आत्मा न नरो न च जीवमस्ति॥
—ललितविस्तर (डॉ. पी.एल.वैद्य), पृ. ४१९-४२०।

७. भारतीय दर्शन (डॉ. श्रीकान्त पाण्डेय), पृ. १३०।

निरुद्धानि भवन्ति। अनया रीत्या दु:खस्कन्धस्यैव निरोधो भवति। अविद्यया निरूपिता दृष्टितृष्णया जगदिदं सद्भूतं पश्यति। स्कन्धेषु चैतेषु अविद्ययैवात्मव्यवहारो भवति। इदमेव तत्र सुप्रतिष्ठितं यद् दु:खमेवात्रोत्पद्यते, दु:खमेव च निरुध्यते। आत्मा पुद्गल-जीवव्यवहारस्तु न सत्प्रतीति:। इयं प्रतीतिस्तु व्यवहारश्चायं भ्रमात्मको मिथ्यात्मकश्चास्ति[1]। स्कन्धानां भावशून्यतां ज्ञात्वैव क्लेशेभ्यो विनिर्मुक्तिर्जायते। जगदपि लोकव्यवहारायैव व्यवहृतं भवति। इदं ज्ञानमेव लोकादसङ्गतिर्जनयति[2]।

समाधिसूत्रे आत्मजीवसत्त्वादीनां सत्तां निषेधयन् लिखितमस्ति—'यदत्र लोके न कोऽपि मृत्युं प्राप्नोति, न च कोऽप्युत्पत्तिं गृह्णाति। लोके च यदवलोक्यते यस्मिंश्चात्मजीविसत्त्वव्यवहारो भवति सोऽपि व्यवहारोऽसद्भूत:, एतेषां शून्यस्वभावात्। ये जना: शून्यस्वभावे स्कन्धसमूहे जीव-आत्म-सत्त्वव्यवहारं सद्व्यवहारभूतं पश्यन्ति, तेषां दृष्टिर्भ्रमपूर्णा एव[3]।

बौद्धदर्शनानुसारं 'आत्मा चेन्नास्ति, जीवोऽपि च नास्ति, सत्त्वस्य वापि कलना न करणीया'—यदा सिद्धान्तोऽयमुपस्थापितो भवति, तदा प्रश्ना उपस्थिता भवन्ति यत् कोऽत्रास्ति यो जगति निर्माणं विद्यते, कोऽस्ति योऽत्र कर्मणामकर्मणाञ्च फलाफलयोर्निर्णयं करोति, कश्च क्रियासम्पादक:, कश्च क्रियायास्तस्या: फलभोक्ता, कोऽस्ति यो जन्म गृह्णाति, कोऽस्ति यो मरणानन्तरं गच्छति, कोऽस्ति सुकृतस्य दुष्कृतस्य च प्रेरक:? प्रश्नानामेतेषां समाधानप्रसङ्गेषु महायानसूत्रेषु प्रतिपादितं वर्तते यन्न कोऽपि अत्र कर्ता, न कोऽप्यस्ति कर्मफलानां भोक्ता, एतादृश: कोऽपि जीव आत्मा वा कल्पितो न भवति य: कृतकर्मण: फलं निर्धारयति। न चैतादृश: कोऽपि वर्तते योऽकृतस्य कर्मण: फलं निर्धारयति। न चैतादृश: कोऽपि वर्तते योऽकृतस्य कर्मण: फलं निर्धारयति, न चास्ति कोऽपि यो मरणान्तेऽन्यत्र गच्छति, न चास्ति कोऽपि यो जन्म गृह्णाति। न हि कोऽपि सुकृतदुष्कृतकर्मभेदेऽपि कारक:[4]।

---

१. सद्धर्म पुण्डरीक (डॉ. राममनोहरदास), पृ. १८७-१८८, ललितविस्तर, पृ. ४१९-४२०।

२. ज्ञानेन जानाम्यहं स्कन्धशून्यकं ज्ञात्वा च क्लेशे हि न संवसामि।
व्यवहारमात्रेण च व्याहरामि परिनिर्वृत्तो लोकमिमं चरामि।।
—समाधिराजसूत्र (डॉ. पी.एल. वैद्य, पृ. ३२)।

३. न ह्यत्र जातो न मृतो न कश्चिदुत्पन्नसत्त्वो मनुजो नरो वा।
—समाधिराजसूत्र (डॉ. पी.एल. वैद्य सम्पादित), पृ. ३२।

४. नास्ति सत्त्वमनुजो च लभ्यते कालु कृत्व परलोकि गच्छियो।
नो च कर्म कृतु विप्रणश्यते कृष्णशुक्लफलदेति तादृशम्।। —तदेव, पृ. १३६।

लङ्कावतारसूत्रे धर्मेष्वात्मनिषेधं पुद्गलनैरात्म्यमपि वर्णितमस्ति। पुद्गल-नैरात्म्यस्थापनप्रसङ्गे तत्र कथितं वर्तते यत् स्कन्ध-धातु-आयतनसमूहे तृष्णया विद्यया वाविर्भूतो विज्ञानं चित्तं कल्पयति, तथा च नदी-वीणा-दीपकवत् प्रवाहेषु आत्मकल्पनां करोति। अस्मिन् लक्षणकोशलज्ञानमेव हि पुद्गलनैरात्म्यज्ञानं वर्तते[१]। एवमेव धर्मनैरात्म्यविषये तत्र कथितं यत् स्कन्ध-धातु-आयंतनसमूहा हेतुना कर्मणा तृष्णया चान्योन्याश्रिताः सन्ति। इमे समूहाः स्वतन्त्ररूपेण न किमपि कर्तुं पारयन्ति। पराश्रितेषु एतेषु धर्मसमूहेषु यदि च कोऽपि आत्मव्यवहारं करोति तदा तस्य व्यवहारोऽयं बालजनानां विकल्पनैवास्ति[२]।

बौद्धदर्शने पञ्चस्कन्धरूपेण रूप-वेदना-संज्ञा-संस्कार-विज्ञानानि स्वीकृतानि। एष्वेव स्कन्धेष्वात्मव्यवहारोऽपि भवति। एतेभ्यो भिन्नोऽभिन्नो वा न कश्चिदात्मा स्वीकरणीयः। महायानसूत्राण्यपि पदार्थानां सत्तां न स्वीकुर्वन्ति। अतः स्कन्धेषु स्कन्धभिन्नेषु वा आत्मा न स्वीकृताऽस्ति। एवं सति तेषां मतं वर्तते यत् स्कन्धैर्नात्मप्रज्ञप्तिर्भवति, न चात्मना स्कन्धप्रज्ञप्तिर्भवति[३]। लङ्कावतारसूत्रे स्पष्टं वर्णितमस्ति यत् नास्ति कोऽपि सर्वेषां ज्ञाता, न चास्ति कोऽपि सर्वैर्ज्ञेयः, सर्वेषु च यो वर्तमानो भवतु सोऽपि न वर्तते[४]।

एवं स्कन्धेषु आत्मा, पुद्गलो जीवो वा नोपलभ्यते। विज्ञानमेव केवल-मुत्पद्यते प्रवर्तते च[५]।

तथा च जगति विद्यमानेषु पदार्थेषु, पुद्गलेषु, स्कन्धसमूहेषु च ये आत्मभावं पश्यन्ति ते विवेकमूढा एव। पदार्थेषु, पुद्गलेषु, स्कन्धसमूहेषु च अज्ञानिनस्तथैवात्मानं पश्यन्ति यथा कोऽपि वीणायां स्वरं माधुर्यञ्च द्रष्टुमिच्छति, यथा च कोऽपि शङ्खनादे स्वरं द्रष्टुमभिवाञ्छति, यथा च कोऽपि इन्धनेनाग्निसत्तामनुभवितुमभिवाञ्छति। यथा वीणाया भग्नौ शङ्खनादे च शब्द-

---

१. लङ्कावतारसूत्र, पृ. २९—'पुनरपरं महामते बोधिसत्त्वेन महासत्त्वेन नैरात्म्यद्वयलक्षण-प्रविचयकुशलेन भवितव्यम्।'

२. '......तथा स्कन्धा अपि महामते स्वसामान्यलक्षणविरहिता अभूतपरिकल्पलक्षणविचित्र-प्रभाविता बालैर्विकल्प्यन्ते न त्वार्यैः। —तदेव, पृ. २९।

३. न ह्यात्मा विद्यते स्कन्धैः स्कन्धाश्चैव हि नात्मनि।
न ते यथा विकल्प्यन्ते न च ते वै न सन्ति च॥—तदेव, पृ. ६४ एवं ३.३५-३७।

४. सर्वस्य वेत्ता न च सर्ववेत्ता, सर्वस्य मध्ये न च सर्वमस्ति। बाला विकल्पन्ति बुधश्च लोको न चापि बुध्यामि न च बोधयामि॥ —तदेव, पृ.-१०८।

५. नास्ति स्कन्धेष्वात्मा न सत्त्वो न च पुद्गलः।
उत्पद्यते च विज्ञानं विज्ञानं च निरुध्यते॥ —तदेव, पृ. ११.१।

रूप-माधुर्याणाञ्च सत्ता न पृथग्भूता तथैव स्कन्धपुद्गलपदार्थेषु आत्मसत्ता पृथग्भूता नास्ति। ये हि सन्ति अज्ञानसंयुतास्त एव तथात्मानमन्वेषयन्ति, यथा नान्वेषणीयः[१]।

शरीरस्य[२] निस्सारत्वं, नश्वरत्वं, क्षणभङ्गुरत्वञ्चोपवर्णयन् महायान-सूत्राणि प्रतिपादयन्ति यत्—'श्लेष्म-मूत्र-अस्थि-मांस-मज्जा-पुरीषपूर्णमिदं शरीरं श्मशाने काष्ठवत्परित्याज्यं भवति। अतः शरीरेऽस्मिन् जीवस्यात्मनः पुद्गलस्य च दृष्टिर्भ्रान्तिपूर्णा[३]।

महायानसूत्रेषु सर्वं शून्यमयं प्रतिपादयन् सर्वशून्यताया आख्यानं कृतं वर्तते। श्रावकस्यापि कायः शून्यस्वभावस्तत्र स्वीकृतः। सर्वे धर्माः, सर्वे पदार्थाः पुद्गलाश्च येषु जीवात्मव्यवहारो भवति तत्सर्वं शून्यमयमाख्यातम्। सत्त्वो जीव आत्मा वा शून्यभावेनोपलब्ध इति[४]।

'एवञ्च महायानसूत्राणां दृष्टौ धर्माणां सत्ता एव न स्वीकृता, यतो हि शून्यस्वभावा धर्माः सन्ति। पञ्चस्कन्धानामपि महायाने शून्यत्वं स्वीकृतम्। स्कन्धसमूहे पुद्गलस्य च या परिकल्पना सापि परिकल्पनैव। सदात्मकत्वेन पुद्गलस्य सत्ता न वर्तते। एषु धर्मेषु पुद्गलेषु च य आत्मव्यवहारो भवति सोऽपि व्यवहारोऽसद्भूत एव, यतो हि शून्यस्वभावस्य जीवस्य आत्मनश्च सत्ता अत्र स्वीकृतैव न भवति[५]।'

---

१. वीणाशङ्खोऽथ भेर्या च माधुर्यस्वरसम्पदा।
मृगयेद्ध्यकोविदः कश्चित्तथा स्कन्धेषु पुद्गलम्।।
औषधीनां यथा सारमग्निं वा इन्धनैर्यथा।
न पश्यन्ति अयुक्तिज्ञास्तथा स्कन्धेषु पुद्गलम्।। —तदेव, पृ.-१५७।

२. बौद्धदर्शनेषु अनित्यतानात्मवादयोर्विकासो विमर्शश्च (डॉ. गदाधरत्रिपाठी)।
पृ. ७४ उद्धृतम्।

३. श्लेष्माविलपित्तक्षयान्तप्रान्तः कायः शकृन्मूत्रपुरीषपूर्णः।
निरभिरामः कृमिक्षुद्रपूर्णः क्षिप्तः श्मशानेऽथवा काष्ठभूतः।।
पश्याहि त्वं दैवत एभिरेवं कस्त्वत्र सत्त्वस्तथा पुद्गलो वा।
शून्या हि एते खलु सर्वधर्मा अविद्यतः प्रत्ययसम्भवाश्च।।
—सुवर्णप्रभासूत्रम् (डॉ. एस. वागची), पृ. ३२-३४।

४. शून्याश्च कायास्तथा श्रावकाणां विहारशून्या द्विपदोत्तमानाम्।
ते सर्वधर्माः प्रकृत्या च शून्याः सत्त्वापि शून्यात्म न जातु विद्यते।।
—तदेव, पृ.-१२६।

५. बौद्धदर्शनेषु अनित्यतानात्मवादयोर्विकासो विमर्शश्च (डॉ. गदाधरत्रिपाठी), पृ. ७५ त. उद्धृतम्।

# जैनदर्शने जीवस्वरूपम्

**डॉ. वीरसागरो जैनः**
अध्यक्षः, जैनदर्शनविभागस्य
नवदेहलीस्थ-श्रीलालबहादुरशास्त्रिराष्ट्रिय-संस्कृतविद्यापीठे



'भवबीजाङ्कुरजनना रागाद्या क्षयमुपगताः यस्य।
ब्रह्मा वा विष्णुर्वा हरो जिनो वा नमस्तस्मै[१]।।'

## १. उत्थानिका

दर्शनशास्त्रस्य उद्गमो जिज्ञासायामन्तर्निहितः। जिज्ञासापि मूलतो जीवस्वरूपस्यैव विद्यते सर्वेषां मनसि, अत एव सर्वेषु दर्शनेषु जीवस्वरूप-विवेचनंप्राधान्येन प्राप्यते। अत्र जैनदर्शनानुसारेण जीवस्वरूपमवलम्ब्य किमपि लिख्यते।

## २. जीवस्वरूपपरिज्ञानस्यावश्यकता

सर्वप्रथमं तु एकं महत्त्वपूर्णं तथ्यमिदमवगन्तव्यं यत् जैनदर्शनानुसारं जीवस्वरूपपरिज्ञानमतीवावश्यकं वर्तते, यतो हि तेन विना कथमपि दुःखपरिहारः सुखप्राप्तिश्च न भवितुमर्हति। जैनाचार्यैः पुनः पुनः प्रतिपादितं यत् सर्वे जीवाः स्वरूपज्ञानाभावादेव अनन्तदुःखं सहमानाः संसारे परिभ्रमन्ति। तेषां सर्वदुःखानां कारणं परमार्थेन स्वरूपभ्रान्तिरेव, न तु अन्यत् किमपि। अतः संसारदुःखभयभीतेन सुखाभिलाषिणा वा सर्वप्रथमं महत्प्रयत्नमपि कृत्वा आत्मस्वरूपपरिज्ञानं कर्तव्यम्। आचार्यामृतचन्द्रास्तु 'अयि कथमपि मृत्वा' इति लिखन्ति आत्मख्यातौ[२]। यावत्कालपर्यन्तमयं जीव आत्मस्वरूपं न जानाति तावत्कालपर्यन्तं परमपि न ज्ञातुं शक्नोति। स्वपरज्ञानाभावाच्च कथमपि रागद्वेषादीन् न विजहति मोक्षमार्गे च चलितुं नार्हति। यदा चायम् आत्मस्वरूपं

---

१. हेमचन्द्रसूरि, स्याद्वादमञ्जरी, प्रस्तावना, पृष्ठ-७।

२. आचार्यामृतचन्द्रः, समयसारव्याख्या, आत्मख्यातिः, श्लोक-२३।

जानाति तदैव परपरिहारो भवति, रागद्वेषादीन् च सहजतया विजहति, मोक्षमार्गे च पदं स्थापयित्वा मोक्षलाभं करोति। यथा—

'जीवाजीवं द्वयं त्यक्त्वा नापरं विद्यते यतः।
तल्लक्षणं ततो ज्ञेयं स्वस्वभावबुभुत्सया॥
यो जीवाजीवयोर्वेत्ति स्वरूपं परमार्थतः।
सोऽजीवपरिहारेण जीवतत्त्वे निलीयते॥
जीवतत्त्वनिलीनस्य रागद्वेषपरिक्षयः।
ततः कर्माश्रयच्छेदस्ततो निर्वाणसङ्गमः॥
परद्रव्यबहिर्भूतं स्वस्वभावमवैति यः।
परद्रव्ये स कुत्रापि न च द्वेष्टि न रज्यति[१]॥'

जैनाचार्यैर्जीवोऽयं स्वरूपपरिज्ञानार्थं भूरिशः प्रेरितः। तदर्थञ्च इदमपि तैरुक्तं यत् स्वरूपपरिज्ञानं विना यदि कोऽपि जीवो बहुविद्याभ्यासं करोति, असंख्यान् पदार्थान् जानाति, शास्त्राणि अहर्निशं पठति, तपश्चरणादिकमपि करोति, तर्हि तस्य तत्सर्वमपि निरर्थकमेव, यतो हि तेन दुःखनिवारणं पारमार्थिकसुखस्य च लाभो न भवितुमर्हति। तस्मादादावेव आत्मज्ञानं करणीयम्। आत्मज्ञानरहितं शास्त्राभ्यासिनं प्रति कथयन्त्याचार्यमितगतिदेवाः—

'आत्मध्यानरतिर्ज्ञेयं विद्वत्तायाः परं फलम्।
अशेषशास्त्रशास्तृत्वं संसारोऽभाषि धीधनैः[२]॥'

अथवा योगीन्दुदेवा अपि कथयन्ति—

'सत्थ पढंतहँ ते वि जड अप्पा जे ण मुणंति।
तहिं कारण ए जीव फुडु ण हु णिव्वाणु लहंति[३]॥'

अत्र यदि निमिषमात्रं विरम्य तुलनात्मकमध्ययनं क्रियते तर्हि ज्ञातं भवति यदात्मस्वरूपपरिज्ञानस्य एतादृशी महती आवश्यकता न केवलं जैनशास्त्रेष्वेव प्रतिपादिता, अपि तु वैदिकदर्शनेष्वपि भूरिशो वर्णिता। उदाहरणार्थं कानिचिदुद्धरणवाक्यानि अत्र प्रस्तूयन्ते—

---

१. आचार्यमितगतिः, योगसारप्राभृतम्, १/२ तः ५।

२. आचार्यमितगतिः, योगसारप्राभृतम्, ७/४३।

३. योगीन्दुकृतयोगसारः, ५३।

(१) 'नानाशास्त्रं पठेल्लोक नानादेवञ्च पूजयेत्।
आत्मज्ञानं विना पार्थ! मुक्तिर्नास्ति न संशयः'[१]॥ (गीता)

(२) 'सुखदुःखप्रदो नान्यः पुरुषस्यात्मविभ्रमः[२]।' (श्रीमद्भागवत)

(३) 'आत्मज्ञानविहीना मूढास्ते पच्यन्ते नरकनिगूढाः'[३]॥ (मोहमुद्गर)

(४) 'यस्मिन् विज्ञाते सर्वं विज्ञातं भवति[४]।' (छान्दोग्योपनिषद्)

(५) 'आत्मा वा अरे द्रष्टव्यो श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या वा विज्ञानेनेदं सर्वं विदितम्[५]।' (बृहदारण्यकोपनिषद्-४/४/५)

(६) 'आत्मानं नैव जानाति दर्वी पाकरसं यथा[६]।' (उपनिषद्)

इत्थमिदं सुस्पष्टं यत् जीवस्वरूपपरिज्ञानं न केवलमावश्यकमपि तु अनिवार्यमेव। अस्माकं देशेऽध्यात्मविद्याया उद्‌गमो विकासो महत्त्वञ्च आत्मज्ञानार्थमेवाङ्गीकृतमिति मे मतिः। अत एव च विषयोऽयमद्य मयाऽत्र परिचर्चार्थं गृहीतः। सर्वे दार्शनिका विद्वांसः सावधानतया निष्पक्षरीत्या च विचारयन्तु। विस्तारभयादहमत्र सर्वेषां सामान्यज्ञानार्थं संक्षेपेण बिन्दुशश्च किमपि वक्ष्यामि। यद्यस्ति विशेषजिज्ञासा तर्हि इमे जैनग्रन्थाः प्रामुख्येन पठनीयाः—समयसारः, पञ्चास्तिकायः, द्रव्यसङ्ग्रहः, योगसारः, तत्त्वार्थसूत्रम्, जैनेन्द्रसिद्धान्तकोशश्चेत्यादयः, आधुनिककृतिषु च पण्डितकैलाशचन्द्रस्य जैनधर्मः, पण्डितचैनसुखदासस्य च अर्हत्प्रवचनं विशेषरूपेण पठनीये। ग्रन्थलाभे सहयोगायाहं तत्परोऽस्मि।

अधुना तावत् जैनदर्शनानुसारं जीवस्वरूपं विचार्यते।

### ३. जीवस्यास्तित्वसिद्धिः

जैनदर्शनं जीवस्य सत्तायां विश्वसिति। सः शून्यवादी अभाववादी वा नास्ति। ये जना जीवस्य सत्तामेव न स्वीकुर्वन्ति तेषां निराकरणार्थं जीवस्य सत्तायाः सिद्ध्यर्थञ्च जैनाचार्यैरनेका युक्तयः प्रस्तुताः। यथा—

---

१. गीता;
२. श्रीमद्भागवते-११/२३/६०।
३. शङ्कराचार्यः, मोहमुद्गरः, २६;
४. छान्दोग्योपनिषद्।
५. बृहदारण्यकोपनिषद्, ४/४/५;
६. उपनिषद्।

'योऽयमस्माकम् 'आत्माऽस्ति' इति प्रत्ययः स संशयानध्यवसाय-विपर्ययसम्यक्प्रत्ययेषु यः कश्चित् स्यात्, सर्वेषु च विकल्पेष्विष्टं सिद्ध्यति। न तावत् संशयः, निर्णयात्मकत्वात्। सत्यपि संशये तदालम्बनात्मसिद्धिः। न हि अवस्तुविषयः संशयो भवति। नाप्यनध्यवसायो जात्यन्धबधिररूपशब्दवद् अनादिसम्प्रतिपत्तेः। स्याद्विपर्ययः, एवमप्यात्मास्तित्वसिद्धिः, पुरुषे स्थाणुप्रतिपत्तौ स्थाणुसिद्धिवत्। स्यात्सम्यक् प्रत्ययः, अविवादमेतत्'[१]।

एवमन्यैरप्यनेकैरकाट्यैस्तर्कैर्जैनाचार्या जीवस्य सिद्धिं कृतवन्तः।

## ४. जीवस्य लक्षणम्

जैनदर्शने जीवस्य लक्षणमित्थं प्रतिपादितम्—

'उपयोगो लक्षणम्[२]।' अथवा—'चैतनालक्षणो जीवः'[३]।

अर्थाद् उपयोग एव जीवस्यात्मभूतं लक्षणमस्ति। उपयोगशब्दस्यार्थोऽत्र 'चेतना' इति ग्राह्यः। आत्मा चैतन्यमयोऽस्ति ज्ञानमयोऽस्तीति जैनानामभि-प्रायः। यद्यपि नैयायिका वैशेषिकाश्चापि ज्ञानमात्मनो गुणं स्वीकुर्वन्ति, तथापि तत्र गुणगुणिनौ भिन्नौ पदार्थौ स्तः, तथा च समवायेनैव तयोः सम्बन्धः स्वीकृतः। तेषां मते आत्मा ज्ञानवानिति तु वक्तुं शक्यते किन्तु आत्मा ज्ञानमय, इति न वक्तुं शक्यते। जैनदर्शनानुसारं जीवो ज्ञानमय एव, न तु ज्ञानवान्, यतो हि ज्ञानं तस्य अग्नेरौष्ण्यमिव स्वभावः। आचार्यकुन्दकुन्ददेवाः कथयन्ति आत्मा ज्ञानं च भिन्नं भिन्नं द्वे द्रव्ये स्यातां तर्हि तद्यदि द्वयोरेवाचेतनत्वापत्तिः। यथा—

'णाणी णाणं च सदा अत्थंतरिदो दु अण्णमण्णस्स।
दोण्हं अचेदणत्तं पसजदि सम्मं जिणावमदं।।
ण हि सो समवायादो अत्थंतरिदो दु णाणदो णाणी।
अण्णाणीति य वयणं एगत्तप्पसाधकं होदि[४]।।'

आत्मनो लक्षणभूतस्यास्योपयोगस्यानेके भेद-प्रभेदा अपि जैनशास्त्रेषु विस्तरेण वर्णिताः। तेऽत्र सङ्क्षेपेणैव निम्नलिखितया सारिण्या प्रदर्शिताः—

---

१. आचार्यकलङ्कः, तत्त्वार्थवार्तिकम्, २/८।
२. आचार्योमास्वामी, तत्त्वार्थसूत्रम्, २/८।
३. आचार्यदेवनन्दिः, सर्वार्थसिद्धिः १/४।
४. आचार्यकुन्दकुन्दः, पञ्चास्तिकायः, गाथा-४८,४९।




## ५. जीवशब्दस्य व्युत्पत्तिः, नैकानि च नामानि

जैनाचार्यैर्जीवस्य व्युत्पत्तिरपि प्रकाशिता। सा चेयम्—'पाणेहि चदुहि जीवदि जीविस्सदि जो हि जीविदो पुव्वं'[1]। अथवा—'दशसु प्राणेषु यथोपात्तप्राणपर्यायेण त्रिषु कालेषु जीवनानुभवनात् जीवति अजीवीत् जीविष्यति इति वा जीव:'[2]। अथवा—'शुद्धिनिश्चयेन....शुद्धचैतन्य-लक्षणनिश्चयप्राणेन यद्यपि जीवति, तथाप्यशुद्धनयेन....द्रव्यप्राणैर्जीवतीति जीव:'[3]।

अर्थाद् इन्द्रियबलायुश्वासोच्छ्वासरूपैश्चतुर्भि: प्राणै: अथवा एतेषामेव विस्तरेण दशभि: प्राणैर्वा जीवति स जीव:। मुक्तजीवेषु यद्यप्येते द्रव्यप्राणा न सन्ति तथापि पूर्वमजीविन् एतस्माद् हेतो: उत शुद्धचैतन्यप्राणधारणात् ते जीवा इति वक्तुं शक्यन्ते।

जीवस्य पर्यायवाचिन: शब्दा आचार्यजिनसेनानुसारमेते सन्ति तेषाञ्चाभिप्रायोऽपि निम्नानुसारमस्ति—

'जीव: प्राणी च जन्तुश्च क्षेत्रज्ञ: पुरुषस्तथा।
पुमानात्मान्तरात्मा च ज्ञो ज्ञानीत्यस्य पर्यय:।।

---

१. आचार्यकुन्दकुन्द:, प्रवचनसार:, गाथा-१४७।
२. आचार्यकलङ्क:, तत्त्वार्थवार्तिकम्-१/४।
३. ब्रह्मदेवसूरि:, बृहद्द्रव्यसंग्रहवृत्ति:, गाथा-२।

प्राणा दशास्य सन्तीति प्राणी जन्तुश्च जन्मभाक्।
क्षेत्रं स्वरूपमस्य स्यात्तज्ज्ञानात् स तथोच्यते।।
पुरुषस्य पुरुभोगेषु शयनात् परिभाषितः।
पुनात्यात्मानमिति च पुमानिति निगद्यते।।
भवेष्वतति सातत्याद् एतीत्यात्मा निरुच्यते।
सोऽन्तरात्माष्टकर्मान्तर्वर्तित्वादभिलप्यते।।
ज्ञः स्याज्ज्ञानगुणोपेतो ज्ञानी च तत एव सः।
पर्यायशब्दैरेभिस्तु निर्णेयोऽन्यैश्च तद्विधैः'[1]।।

एवम्प्रकारेण जीवस्य नैकानि नामान्यपि जैनाचार्यैरुक्तानि तेषाञ्च नाम्नामभिप्रायोऽपि स्पष्टीकृतः।

## ६. जीवस्य स्वरूपम्

जीवस्य स्वरूपविषये एका प्राकृतगाथा अत्यन्तं महत्त्वपूर्णा वर्तते। सा चेयम्—

'जीवो उवओगमओ अमुत्ति कत्ता सदेहपरिमाणो।
भोत्ता संसारत्थो सिद्धो सो विस्ससोड्ढगदी[2]।।'

अस्याभिप्रायोऽयं यत् जीवस्य स्वरूपज्ञापका नवाधिकाराः सन्ति— १. जीवः, २. उपयोगमयः, ३. अमूर्तिकः, ४. कर्ता, ५. स्वदेहपरिमाणः, ६. भोक्ता, ७. संसारस्थः, ८. सिद्धः, ९. विस्रसोर्ध्वगतिश्च। एतेषां संक्षिप्तविवरणं निम्नलिखितानुसारमस्ति—

(१) **जीवः**—यो निश्चयेन चेतनाप्राणैर्व्यवहारेण वा इन्द्रिय-बलायुश्वासोच्छ्वासैश्चतुर्भिर्द्रव्यप्राणैर्जीवति स जीवः।

(२) **उपयोगमयः**—जीव उपयोगमयोऽस्ति। 'उपयोग'शब्दस्यार्थः 'चेतना' इति। चेतना उपयोगो वा द्विविधः—दर्शनोपयोगो ज्ञानोपयोगश्चेति। अनयोरपि अनेके प्रभेदाः सन्ति ते सङ्क्षेपेण पूर्वमेव सारिण्या परिगणिताः।

---

१. आचार्यजिनसेनः, महापुराणम्-२४/१०३, १०५ तः १०८।
२. आचार्यनेमिचन्द्रसिद्धान्तिदेवः, बृहद्द्रव्यसङ्ग्रहः, गाथा-२।

(३) **अमूर्तिकः**—जीवः संसारे देहादीनां संयोगात् मूर्तिकोऽस्ति, किन्तु स्वभावेन अमूर्तिक एव, यतो स्पर्शरसगन्धवर्णादयतस्मिन्न विद्यन्ते। ये चार्वाका जीवं भूतजनितं मूर्तिकं मन्यन्ते ते न समीचीनाः।

(४) **कर्त्ता**—जीवो व्यवहारेण पौद्गलिककर्मणां कर्ता भवति निश्चयेन च स्वकीयशुद्धाशुद्धभावानामेव कर्ता भवति। सांख्याभिमतमात्मनः सर्वथाऽकर्तृत्वमसमीचीनम्।

(५) **स्वदेहपरिमाणः**—आत्मा संसारावस्थायां स्वशरीरपरिमाण एव, मुक्तावस्थायान्तु अन्तिमशरीरपरिमाणो विराजते। ये कथयन्ति आत्मानं वटकणिकामात्रमुत सर्वलोकव्यापकं तन्न समीचीनम्।

(६) **भोक्ता**—आत्मा स्वकर्मणां स्वकीयशुद्धाशुद्धभावानाञ्च यथा कर्ताऽस्ति तथैव भोक्ताऽपि वर्तते। बौद्धाः क्षणिकत्वेनात्मानं भोक्तारं न स्वीकुर्वन्ति, तदपि नैवोचितम्।

(७) **संसारस्थः**—आत्मा अशुद्धावस्थायां संसारे निवसति, अतः संसारस्थोऽपि स्वीकृतः। ये जनो आत्मानं सर्वथा शुद्धं कर्मरहितं च मन्यन्ते तेऽत्र निराकृताः।

(८) **सिद्धः**—मुक्तावस्थायामयमात्मा सिद्धरूपेण विराजते। तत्रास्याभावो न भवति, यथा बौद्धदर्शने स्वीक्रियते, अपि तु वीतरागः सर्वज्ञः सर्वकर्मरहितः अनन्तगुणसहितः परमसुखी च सन् अनन्तकालपर्यन्तं लोकाग्रे निवसति। ये जना मुक्तावस्थायां जीवस्यैवाभावं जीवस्य वा ज्ञानादिगुणानामभावं स्वीकुर्वन्ति ते न ग्राह्याः। सिद्धजीवाः पुनः कदापि संसारे जन्म न धारयन्ति। अवतारवादो जैनदर्शने न स्वीकृतः। यथा दुग्धाद् घृतं भवति, किन्तु घृतात् पुनः दुग्धं न भवति, तिलेभ्यः तैलं भवति, किन्तु तैलात् पुनः तिलं न भवति, तथैव संसारी मुक्तो भवति, किन्तु मुक्तजीवः पुनः कदापि संसारी (संसरणं करोतीति संसारी) न भवति।

(९) **ऊर्ध्वगमनस्वभावः**—अयं जीवो यद्यपि संसारावस्थायां कर्माधीनत्वात् तिर्यग्गमनम् अधोगमनं वा करोति, तथापि नास्त्ययं तस्य स्वभावः। स्वभावेन तु स ऊर्ध्वगमनमेव करोति अग्निशिखावत्।

**७. अन्यः कश्चिद् विशेषः**

जैनाचार्येषु योगीन्दुदेवानामतिमहत्त्वपूर्णं स्थानं विद्यते। तैरपि स्वग्रन्थेषु योगसारपरमात्मप्रकाशादिषु जीवस्य स्वरूपं विस्तरेण प्रतिपादितम्।

परमात्मप्रकाशग्रन्थे प्रथममहाधिकारे जीवस्वरूपविषये ते कथयन्ति षड्दोहकसूत्रैः—

'कि वि भणंति जिउ सव्वगउ जिउ जडु के वि भणंति।
कि वि भणंति जिउ देहसमु सुण्णु वि के वि भणंति।।
अप्पा जोइय सव्वगउ अप्पा जडु वि वियाणि।
अप्पा देहपमाणु मुणि अप्पा सुण्णु वियाणि।।
अप्पा कम्मविवज्जियउ केवलणाणँ जेण।
लोयालोउ वि मुणइ जिय सव्वगु वुच्चइ तेण।।
जे णियबोहपरिट्ठियहँ जीवहँ तुट्टइ णाणु।
इन्दियजणियउ जोइया तिं जिउ जडु वि वियाणु।।
कारणविरहिउ सुद्ध जिउ वड्ढइ खिरइ ण जेण।
चरमसरीरपमाणु जिउ जिणवर बोल्लहिं तेण।।
अट्ठ वि कम्मइँ बहुविहइँ णव णव दोस वि जेण।
सुद्धहँ एक्कु वि अत्थि णवि सुण्णु वि वुच्चइ तेण[1]।।

अभिप्रायोऽयं यद् हे गुरुदेव! कस्मिंश्चिद्दर्शनेऽयं जीवः सर्वगतः कथितः, कस्मिंश्चिद्दर्शने जडो निरूपितः, कस्मिंश्चिद्दर्शने स्वदेहपरिमाणः प्ररूपितः, कस्मिंश्चिच्च दर्शने शून्यो वर्णितः। तत् कथम्?

आचार्यः समादधति—अपेक्षाभेदेन सर्वं समीचीनं वक्तुं शक्यते। यथा—अयं जीवः केवलज्ञानेन सर्वं लोकालोकं जानाति तस्माद् जडः, सदैव स्वशरीरपरिमाणं चरमशरीरपरिमाणं वा वसति, हीनोऽधिको वा न भवति तस्माद् स्वशरीरपरिमाणः, पौद्गलिककर्मादि सर्वपरद्रव्यविरहितत्वाच्च शून्य इति। नास्ति काचिद् बाधा।

अत्र योगीन्दुमुनिना स्याद्वादमवलम्ब्य यत् समाधानं कृतं तद् विशेषरूपेण चिन्तनीयमस्माभिः सर्वैः। तात्पर्यमिदं यत् जीवस्य कृते जैनेतरदर्शनेष्वपि यत्किमपि प्रोक्तं तत्सर्वमपि सामान्यतया समीचीनं भवितुमर्हति जैनदृष्ट्या किन्तु तस्य अपेक्षा दृष्टिकोणं वा सम्यक्तयाऽव-

---

१. योगीन्दुदेवः, परमात्मप्रकाशः, १/५० तः ५५।

गन्तव्यमेव। सापेक्षकथनं समीचीनं, निरपेक्षकथनं तु मिथ्या एव। मया तु इदमनुभूयते यद् अस्माकं भारतीयसंस्कृतौ यत् किमपि पूर्वजैः ज्ञानिध्यानिभिः प्रतिपादितं तत्सर्वं समीचीनमेव आसीत्, किन्तु एका एव विसङ्गतिः जाता यद् अस्माभिस्तस्य का अपेक्षा किं वा दृष्टिकोणमिति विस्मृतम्। अद्यावश्यकताऽस्ति तद्दृष्टिकोणप्रकाशनस्य महती।

एवमेव, जैनदर्शनानुसारं जीवा अनन्ताः सन्ति, न तु एकः, तथापि वेदान्तदर्शनं कथयति यत् जीव एक एव इत्यपि समीचीनं भवितुमर्हति। तदित्थं यद्यपि जीवाः संख्यापेक्षया अनन्ता एव, किन्तु जात्यपेक्षया स्वभावापेक्षया निश्चयेन वा सर्वे सदृशा एव समाना एव, न तु कोऽपि जीवः लघुः, न तु कोऽपि गुरुः, अतो जीव एक इत्यपि वक्तुं शक्यते। जीवाः संख्यापेक्षया अनन्ताः सन्ति, तथापि सर्वेषां पारमार्थिकस्वभावः समान एव, सर्वे जीवाः स्वभावेन अनन्तज्ञानदर्शनसुखवीर्यादिगुणसम्पन्नाः स्पर्शरस-गन्धवर्णविरहिताश्च सन्ति, सर्वे एव रागद्वेषमोहादीन् परित्यज्य परमात्मा भवितुमर्हन्ति। परमात्माऽपि स्वभावेन सर्वसदृश एव—'अप्पा सो परमप्पा' इत्युक्तत्वात्। इदमेव कारणं यज्जैनदर्शनानुसारं परमात्माऽपि कश्चन एक एव नास्ति, अपि तु अनन्ताः सन्ति। येऽपि आत्मानः पुरुषार्थं कृत्वा स्वस्य विकारान् निवारयन्ति त एव शुद्धात्मानः परमात्मानो वा भवन्ति। जैनदृष्ट्या परमात्मा कोऽपि पृथक् नास्ति, अपि तु अस्मासु एव यः कोऽपि पुरुषार्थं कृत्वा रागद्वेषादीन् विजहति स एव परमात्मा भवति। परमात्मा वीतरागः सर्वज्ञश्च विद्यते। स कदापि केनापि सह रुष्टतुष्टो वा न भवति। कामपि इच्छामपि न करोति, जगतः किञ्चित्कार्यमपि न करोति। स तु ज्ञाता द्रष्टा भवन् अनन्तकालपर्यन्तं लोकाग्रे तिष्ठति। यद्यपि परमात्मा अनन्तशक्तिशाली अस्ति तथापि परद्रव्यस्य किमपि कार्यं न करोति। स सदाकालं स्वस्य शुद्धस्वरूपे रमति, कदापि परद्रव्याणि विलोक्य रागं द्वेषं वा न करोत्ययमेव तस्यानन्तशक्तिः।

## ८. जीवस्य भेदप्रभेदाः

अथ जीवस्य भेदप्रभेदा अपि सङ्क्षेपेण ऊह्याः। जैनाचार्यैर्विविधदृष्टिभि-र्जीवस्य नैका भेदप्रभेदा वर्णिताः। यथा—

'एको चेव महप्पा सो दुवियप्पो त्ति लक्खणो भणिदो।
चदुसङ्कमणाजुत्तो पञ्चगगगुणप्पहाणो य॥

छक्कापक्कमजुत्तो उवजुत्तो सत्तभङ्गिसब्भावो।
अट्ठासवो णवट्ठो जीवो दसठाणिओ भणिदो[१]।।'

अर्थादयं जीवो महात्मा वा चैतन्यसामान्यापेक्षया एकविधः, ज्ञानदर्शनभेदेन संसारिमुक्तभेदेन भव्याभव्यभेदेन पापपुण्यभेदेन वा द्विविधः, ज्ञानकर्मकर्मफलचेतनाभेदेन द्रव्यगुणपर्यायभेदेन उत्पादव्ययध्रौव्यभेदेन वा त्रिविधः, नरकतिर्यञ्चदेवमनुष्यगतिभेदेन चतुर्विधः, औपशमिकक्षायिक-मिश्रश्चौदयिकपारिणामिकभेदेन एकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियभेदेन वा पञ्चविधः, षट्कापक्रमभेदेन षड्विधः, सप्तभङ्गभेदेन सप्तविधः, अष्टकर्माधारेण सम्यक्त्वाद्यष्टगुणोपेतेन वा अष्टविधः, नवपदार्थरूप-परिणमनान्नवविधः, पृथिव्यादिपञ्चस्थावरभेदेन एकेन्द्रियादिपञ्चभेदेन च दशविधः। एवम्प्रकारेण अन्येऽपि भेदप्रभेदा भवितुमर्हन्ति। अत्र विस्तरभयाद् जीवस्य प्रमुखा भेदप्रभेदा अधोलिखितया सारिण्या एव प्रदर्श्य विरम्यते—




१. आचार्यवीरसेनः, धवला, पुस्तक ९, खण्ड ४, भाग १, सूत्र ४५, गाथा-७६-७७।

**९. अध्यात्मग्रन्थेषु जीवस्य भेदप्रभेदाः**

यथा पूर्वमेवोक्तं यत् जीवस्वरूपपरिज्ञानप्रेरणार्थमेवास्माकं देशेऽध्यात्मविद्याया उद्‌गमो विकासो महत्त्वञ्च भूरिशः प्रतिपादितम्। अत एव अध्यात्मग्रन्थेषु जीवस्य कृते 'आत्मन्'शब्दस्य प्रयोगो विहितः। अध्यात्मग्रन्थानुसारं जीवः द्विविधः—स्वजीवः परजीवश्चेति। स्वजीव एव आत्मा। परजीवो नास्ति आत्मा। अतो यदा आचार्याः कथयन्ति यदात्मानं जानातु, आत्मज्ञानमावश्यकं तदा तस्याभिप्रायोऽयमेव यत् स्वजीवं जानातु, न तु परजीवम्। अध्यात्मग्रन्थेषु परजीवो जीव एव नास्तीत्यप्युच्यते। इदमेव कारणं यदस्माकं संस्कृतौ जना अद्यापि कथयन्ति यदात्मा एक एव विद्यते, किन्तु जीवा अनन्ताः सन्ति।

अत्रैकः प्रश्नः समुदेति यदध्यात्मग्रन्थानुसारं यदाऽऽत्मा एक एव तर्हि तस्य भेदप्रभेदाः कथं भवितुमर्हन्ति। उत्तरम्—सत्यमिदं यदध्यात्मग्रन्थाः कथयन्ति आत्मानमेव जानातु, परद्रव्यं परजीवं प्रति निमिषमात्रमपि मा पश्यतु, एकस्य आत्मनो ज्ञानादेव सर्वं विज्ञातं भवति स्वयमेव, सर्वार्थसिद्धिः आत्मज्ञानादेव भविष्यति[१], आत्मा च एक एव; किन्तु तस्य एकस्यापि आत्मनोऽवस्थापेक्षया त्रयो भेदा भवन्ति। ते च एवं ज्ञातव्याः—

१. **बहिरात्मा**—योज्ञानी मूढोऽस्ति, बहिर्भूतं देहमेवात्मानं जानाति स बहिरात्मा[२]।

२. **अन्तरात्मा**—य सम्यग्ज्ञानी जातः देहाद्‌भिन्नमात्मतत्त्वं जानाति सोऽन्तरात्मा[३]।

३. **परमात्मा**—य आत्मानं ज्ञात्वा रागद्वेषादिविकारान् परित्यज्य वीतरागः सर्वज्ञश्च भवति स परमात्मा[४]। परमात्मा द्विविधः—(क) सकलपरमात्मा—यः शरीरसहितो विद्यते अधुना सः सकलपरमात्मा, अर्हन् इति तस्यैवापरं नाम[५]। (ख) निकलपरमात्मा—यदा अर्हन् परमात्मा देहमपि

---

१. अचिन्त्यशक्तिः स्वयमेव देवः, चिन्मात्रचिन्तामणिरेष यस्मात्।
सर्वार्थसिद्धात्मतया विधत्ते ज्ञानी किमन्यस्य परिग्रहेण'।।
—आचार्यामृतचन्द्रः, आत्मख्यातिः, श्लो.-१४४।

२. आचार्यदेवनन्दिः, समाधिशतकम्-७।
३. आचार्यदेवनन्दिः, समाधिशतकम्-१५।
४. योगीन्दुदेवः, परमात्मप्रकाशः-१/१४।
५. कार्तिकेयानुप्रेक्षा, गाथा-१९२।

परित्यज्य मुक्तो भवति तदा स निकलपरमात्मा इत्युच्यते। सिद्ध इति तस्यैव अपरं नाम[1]।

एतेषु बहिरात्मा हेयः, अन्तरात्मा कथञ्चिदुपादेयः, परमात्मा च परमोपादेयः[2]।

**१०. उपसंहारः**

एवम्प्रकारेणेदं सुस्पष्टं यज्जैनदर्शनानुसारेण—

(क) जीवोऽस्ति एव, तस्य च सत्ता पारमार्थिकी एव, न तु व्यावहारिकी काल्पनिका वा।

(ख) जीवस्य लक्षणमुपयोगमयत्वं चैतन्यं वा विद्यते। चैतन्यं तस्य स्वाभाविको धर्मः, न तु समवायजनितः।

(ग) जीवा अनन्ताः सन्ति, न तु एकः। ते च सर्वे स्वभावेन समाना एव। न कोऽपि गुरुः लघुः वा।

(घ) जीवः स्वतन्त्रोऽखण्डो वा विद्यते। सः कस्यचिदेकस्य परमतत्त्वस्यांशो नास्ति। स्वकीयशुभाशुभकर्मणां स्वयमेव कर्ताऽपि भवति भोक्ता चापि भवति। अन्यद्रव्यं तु निमित्तमात्रमेव।

(ङ) जीवः स्वभावेन रूपरसस्पर्शादिगुणविरहितोऽमूर्तिको विद्यते, किन्तु संसारावस्थायां पौद्गलिककर्मदेहादीनां संयोगोऽपि विद्यते।

(च) विवक्षाभेदेनायं जीवः सर्वगतः, जडः, स्वशरीरपरिमाणः, शून्यः एकश्चेत्यपि वक्तुं शक्यते।

(छ) प्रत्येकं जीव आत्मा वा स्वस्य रागद्वेषादिविकारान् परित्यज्य परमात्मा भवितुमर्हति। स एव मुक्तावस्था। मुक्तावस्थायां जीवस्य तस्य ज्ञानादिस्वाभाविकगुणानां वाऽभावो न भवति, अपि तु तस्य समस्तविकाराणामेव विनाशो भवति। मुक्त्यनन्तरं जीवः पुनः कदापि संसारे आगत्य जन्म मरणं वा न करोति।

●

---

१. कार्तिकेयानुप्रेक्षा, गाथा-१९२।

२. ब्रह्मदेवसूरिः, बृहद्द्रव्यसङ्ग्रहवृत्तिः, गाथा-१४।

लघु-ग्रन्थमाला
[७०]

# श्रीगुरुप्रपत्तिः

## [ हिन्दी-आङ्ग्लानुवादोपेता ]

लेखकः
**प्रो. वेम्पटिकुटुम्बशास्त्री**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणस्याम्




**वाराणसी**
वि.सं. २०६६

# प्रस्तावना

अत्यन्त प्रसन्नता का विषय है कि भगवत्पाद आदि-शङ्कराचार्य जी द्वारा प्रतिष्ठापित श्रीकाञ्चीकामकोटि-पीठ की अविच्छिन्न परम्परा के ६८वें आचार्य ब्रह्मलीन **अनन्तश्रीविभूषित श्री चन्द्रशेखरेन्द्र सरस्वती जी महाराज** के प्रथम बार काशी-पदार्पण के 'अमृत-महोत्सव-वर्ष' (७५वें वर्ष) तथा ६९वें (वर्तमान) आचार्य **अनन्तश्रीविभूषित श्री जयेन्द्र सरस्वती जी महाराज** के ७५वें जन्म-दिवस (अमृत-महोत्सव) के उपलक्ष्य में विश्वविद्यालय की विश्वविख्यात त्रैमासिक अनुसन्धान-पत्रिका **'सारस्वती सुषमा'** के विशेषाङ्क का प्रकाशन किया जा रहा है।

प्रकृत विशेषाङ्क में व्याकरणशास्त्र तथा वेदान्तशास्त्र के अप्रतिम विद्वान् इस विश्वविद्यालय के पूर्व आचार्य स्व. **'पद्मश्री' पण्डितश्री रघुनाथ शर्मा जी** द्वारा विरचित **'श्रीकृष्णस्तवः'** के साथ ही साथ परमपूज्य जगद्गुरु श्रीचन्द्रशेखरेन्द्र सरस्वती जी महाराज को अर्पित **'श्रीगुरुप्रपत्तिः'** नामक इस रचना को प्रकाशित करते हुए हमें द्विगुणित हर्षानुभूति हो रही है।

वस्तुतः इस रचना के पूर्व मैं पद्यरचना में अभ्यस्त न होने के कारण कभी अत्यन्त प्रयास करके ५-६ या १०-११ श्लोकों की ही रचना किया था। प्रसङ्गतः यहाँ मैं निवेदन करना चाहता हूँ कि परमपूजनीय जगद्गुरु श्री चन्द्रशेखरेन्द्र सरस्वती जी महाराज के जन्म-शताब्दी-महोत्सव के पावन अवसर पर प्रकाशित होने वाली 'स्मारिका' में प्रकाशनार्थ कोई एक निबन्ध प्रेषित करने हेतु मुझे श्रीमठ की तरफ से आदेश प्राप्त हुआ था। उन दिनों व्यक्तिगत विभिन्न कारणों से मेरी मानसिक प्रवृत्ति अत्यन्त भयग्रस्त जैसी चल रही थी। इससे अभय-प्राप्त्यर्थ भगवान् एवं आचार्यों के चरणकमलों की शरण ही मुझे दृष्टिगोचर हो रही थी।

स्वानुभवात्मक किसी निबन्ध के लेखन में व्यापृत होते ही मेरी लेखनी निर्बाधरूप से अनायास ही पद्यबन्धरूप रचना में द्रुतगति से प्रवृत्त हो गयी और दो-तीन दिनों के अन्दर ही २५ श्लोकों की रचना हो गयी, जिनका यथासमय 'स्मारिका' में प्रकाशन भी हो गया। तदनन्तर कुछ अपने प्रयत्नों से लगभग ७० पद्यों की रचना कर सका। भाव-पुनरुक्ति आदि का त्याग करते हुए 'वरदराजपञ्चाशत्' इत्यादि ग्रन्थों के समान ५० श्लोकों के प्रकाशन

का मेरा सङ्कल्प था। मेरे इस सङ्कल्प को जानकर मेरे परम-हितैषी **श्री सिद्दलिङ्गय्य** जी ने ६८ श्लोकों के प्रकाशन का परामर्श दिया तथा इसका औचित्य भी **परमपूजनीय जगद्गुरु श्री चन्द्रशेखरेन्द्र सरस्वती जी महाराज का श्रीकाञ्चीकामकोटि-पीठ का ६८वाँ आचार्य होना** प्रतिपादित किया। सूक्ष्मतया मैंने पुन: श्लोकों की गणना की, तो ६८ श्लोक ही हुए, न कम और न ही अधिक। इस प्रकार इन पद्यों की रचना के प्रारम्भ तथा सम्पूर्ति में मैं निमित्तमात्र ही था, कर्तृता तो आचार्यश्री के ही आश्रित थी। आज भी इस घटना का स्मरण होने पर मैं विस्मय के साथ ही साथ रोमाञ्चित भी हो जाता हूँ।

प्रस्तुत **'श्रीगुरुप्रपत्ति'** का तेलुगु एवं आङ्ग्ल भाषानुवाद के साथ मेरे द्वारा ही प्रकाशन **'वनमाला'** नाम से पूर्व में किया गया था। सम्प्रति हिन्दी एवं आङ्ग्ल भाषानुवाद के साथ इसका प्रकाशन किया जा रहा है।

मैं अत्यन्त ही आभारी हूँ, इस विश्वविद्यालय के प्राचीनराजशास्त्रार्थशास्त्र-विभाग के आचार्य तथा शिक्षण-शोध-प्रकाशन-संस्थान एवं अनुसन्धान संस्थान के कार्यकारी निदेशक **प्रो. नरेन्द्रनाथ पाण्डेय** का, जिनके कुशल निर्देशन में इस ग्रन्थ तथा **'सारस्वती सुषमा'** के (६२वर्ष, १-४ अङ्क) विशेषाङ्क का इतना शीघ्र एवं उत्कृष्ट रूप में प्रकाशन सम्भव हो सका। अथ च इसके प्रकाशन में **डॉ. हरिवंश कुमार पाण्डेय** का अथक परिश्रम भी अभिनन्दनीय है, मैं हृदय से उनकी मङ्गल-कामना करता हूँ। एवमेव इसके उत्कृष्ट मुद्रण हेतु श्रीजी-मुद्रणालय के संचालक **श्री अनूप कुमार नागर** को भी धन्यवादपूर्वक आशी: प्रदान करता हूँ।

अन्तत: इस वाक्पुष्पोपहार को परमपावन आचार्य-परम्परा को समर्पित करते हुए अपनी लेखनी को विराम देता हूँ।

**वाराणसी**
रंगभरी एकादशी,
वि.सं. २०६६
(दि. २५.२.२०१० ई.)

**(प्रो. वेम्पटि कुटुम्ब शास्त्री)**
कुलपति
सम्पूर्णानन्द संस्कृत विश्वविद्यालय

।।श्रीः।।

# श्रीगुरुप्रपत्तिः

❋❋❋

यत्पादपङ्कजरजःपरिपूतमेतत्

श्रीभारतं विजयते बहुशः कृतार्थम्।

श्रीकाञ्चिपीठविलसद्यतिराजराजं

श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।१।।

जिनकी पादधूलि से सर्वप्रकार से पवित्रीकृत श्रीसम्पन्न यह भारत देश अधिक मात्रा में अपनी कृतार्थता का अनुभव करता है, ऐसे यतियों में उत्तमोत्तम श्री चन्द्रशेखर गुरुवर्य ही मेरी शरण अर्थात् रक्षक हैं।।१।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, the greatest pontiff of Śrī Kāñcī Kāmakoṭi Pīṭhaṃ, because of the dust of whose lotus-feet this great land of India is made pious and is repeatedly blessed.

Note : The Ācārya travelled on foot and made several circumambulations of our motherland on foot. [1]

श्रीमज्जगद्गुरुजयेन्द्रसरस्वतीति

तच्छिष्यभूतविजयेन्द्रसरस्वतीति।

शिष्यप्रशिष्ययुगलेन सुसेव्यमानं

श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।२।।

श्री जगद्गुरु जयेन्द्र सरस्वती जी तथा उनके शिष्य विजयेन्द्र सरस्वती जी के रूप में अपने शिष्य एवं प्रशिष्य के रूप में युगल शिष्यों से अच्छी तरह (मनसा, वाचा, कर्मणा) सेवित तथा श्री भगवती पराम्बा की कृपा से पावित श्री चन्द्रशेखर गुरुवर्य ही मेरे शरणस्थान हैं।।२।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who is well served by his desciple Śrī Jayendrasarasvatī and by his desciple's desciple Śrī Vijayendrasarasvatī. [2]

**मूर्त्तिः कठोरतपसा तनुरप्यधृष्या**
**दृष्टिः प्रसन्नमधुरा करुणामयी च।**
**स्फूर्तिः परात्मविषया प्रतिभाति यस्य**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।३।।**

जिनकी मूर्ति (शरीर) कठोर तप के कारण समुच्छ्रयण प्राप्त कर ब्रह्मप्राप्ति की योग्यता प्राप्त कर चुकी है। 'मूर्च्छा मोहसमुच्छ्राययोः' धातु से मूर्ति शब्द बनता है, अतः यह अर्थ धात्वर्थ के अनुगत है। जिनका तनु, तप के कारण विद्यावंश का विस्तार करने में सर्वथा सक्षम होने से अनभिभवनीय है, जिनकी दृष्टि प्रसादयुक्त एवं करुणामयी है, जिनके अन्तःकरण में जीव-ब्रह्मैक्य का स्फुरण हो रहा है, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती जी हमारी शरण हैं, मैं प्रपत्तिपूर्वक उनकी शरण में जा रहा हूँ।।३।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, whose form is lean because of strenuous austerities and who is yet indomitable, whose look is peaceful, sweet and full of compassion and whose contemplation is on the supreme Reality. [3]

**शान्ताकृतिः शममयी च वचःप्रवृत्तिः**
**शान्तं मनोऽथ गमनं हसनं च शान्तम्।**
**शान्ते कृपापरवशे नयने च यस्य**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।४।।**

जिनकी आकृति शान्त है, जिनकी वाणी की प्रवृत्ति शममय है, अर्थात् 'शमो मन्निष्ठताबुद्धेः' इस श्रीमद्भागवत के श्रीकृष्णवचन के अनुसार जिनकी वाणी सर्वदा प्रभु का संकीर्तन, गुणालाप आदि करती रहती है, जिनका मन शान्त है, अर्थात् भगवद्विषयता को प्राप्त है, जिनका गमन उपशम को सूचित कर रहा है, जिनका हँसना शान्त है, शमयुक्त है, अर्थात् भगवान् की लीला का विलास जगत् जिनके लिए सर्वदा हास देता है, कभी भी उनके लिए प्रतिकूल होकर रुदन का कारण नहीं बनता; क्योंकि रागद्वेषशून्य होने के कारण उनके लिए इष्टानिष्ट सब कुछ भगवत्प्रसाद होने

से हास का ही कारण है, जिनके नेत्र शान्त हैं, उपशम को प्राप्त हैं; क्योंकि आप्तकाम होने से किसी भी वस्तु को औत्सुक्य से नही देखते। उनके नेत्र कृपापरवश होने से भी शान्त हैं; क्योंकि करुणा का उद्रेक उपशमपूर्वक ही होता है। ऐसे श्री चन्द्रशेखरेन्द्र सरस्वतीरूप गुरु की शरण में मैं प्रपत्तिपूर्वक गमन करता हूँ।।४।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, whose appearance is peaceful, whose manner of speech is peaceful, whose mind is peaceful, whose gait and smile is peaceful, and whose eyes are peaceful and filled with compassion.[4]

**कान्तैर्मृदूक्तिनिचयैर्मृदुदर्शनाद्यै-**
**र्भीमैः कठोरचरणैर्यमसंयमाद्यैः।**
**यो राजतेऽभिगमनार्ह इवाप्रधृष्यः**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।५।।**

कान्त एवं मृदु वचनसमूह तथा मृदु दर्शन आदि के द्वारा तथा भीम-कठोर चरणों एवं यम-संयम के द्वारा जो अभिगमन के योग्य, सर्वथा गमन के योग्य होकर अनभिभवनीय हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वतीरूप गुरु की शरण में मैं प्रपत्तिपूर्वक गमन कर रहा हूँ।

कठोर चरण को कठोर आचरण भी कह सकते हैं; क्योंकि यम-संयम के साथ उसका उच्चारण हुआ है। अतः 'भीमैः शङ्करप्रापकैः कठोराचरणैर्यमसंयमाद्यैः' इस रूप में अर्थ की विवक्षा की जाय तो भगवान् शङ्कर को प्राप्त करानेवाले कठोर अहिंसा-सत्य-अस्तेय-ब्रह्मचर्यापरिग्रहरूप यम एवं तपःस्वाध्याय-ईश्वरप्राणिधानरूप नियम आदि से जिनके पास लोग जाते हैं तथा जो तप से अनभिभवनीय हैं, अर्थात् जिन्होंने लोकोत्तर तप का अर्जन किया है, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वतीरूप गुरु की शरण में मैं प्रपत्तिपूर्वक गमन करता हूँ।।५।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who is accessible because of his sweet and gentle manner of speech and soft glances, and yet who seems invincible because of his strenous and awe-inspiring practice of *yama* and *saṁyama.*

Note : *yama* is a technical term of *Yogaśāstra; ahiṁsā* = non-injury, *satyam* = speaking truth, *asteyam* = non-stealing,

*brahmacaryam* = celibacy, and *aparigrahaḥ* = non-acceptance of offerings; these are called *yamas* in the *Yogaśāstra; saṁyama* means self control. [5]

**'मूर्तं तपः', 'प्रसरणात्मक एष धर्मः'**
**'ज्ञानं हि गन्तृ','चलनात्मकमस्ति तेजः'।**
**इत्थं यमेव कलयन्ति जना अजस्रं**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।६।।**

जो तप के मूर्तरूप हैं, जो गतिशील धर्म की मूर्ति हैं, जो गमन करनेवाले ज्ञान हैं, जो चलनात्मक तेज हैं। इस प्रकार जिनके बारे में लोग निरन्तर आकलन किया करते हैं, उन श्री चन्द्रशेखरेन्द्र सरस्वतीरूप गुरु की शरण में मैं प्रपत्तिपूर्वक गमन करता हूँ।।६।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, whom people feel to be tapas embodied, *dharma* that is living and moving, knowledge that walks and effulgence that moves. [6]

**लोकाभिरक्षणपरामभयात्मिकां यो**
**मुद्रां च दण्डमुभयोः करयोर्विबिभ्रत्।**
**शान्तः परात्मनि रतो विलसत्यजस्रं**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।७।।**

लोकों की सभी भीतियों से रक्षा करनेवाली अभयमुद्रा और दण्ड, यह दोनों जिसके हाथ में विशेषरूप से धारित हैं, जो शान्त हैं तथा परात्मा प्रभु में रत होकर निरन्तर विलसित हो रहे हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वतीरूप गुरु की शरण में मैं प्रपत्तिपूर्वक गमन करता हूँ।।७।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who remains established forever in the supreme Reality, who is peaceful, who rises one hand in protection of all mankind, and holds the monk's staff in the other.

Note : The Ācārya was consistently very particular in holding the staff as ordained in the *śāstras.* [7]

**रुद्राक्षहारनिचयोऽस्ति गले पवित्रे**
**भस्मापि फालफलके तुलसी च शीर्षे।**
**दार्वात्मकोदकघटश्च करे हि यस्य**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।८।।**

जिनके गले में रुद्राक्ष-मालाओं का समूह अनेक हारों के रूप में शोभा पा रहा है, जिनके उन्नत ललाट पर भस्म एवं शिर पर तुलसी सुशोभित हो रही है, काष्ठमय 'घट' कमण्डलु के रूप में जिनके हाथ में है, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वतीरूप गुरु की शरण में मैं प्रपत्तिपूर्वक गमन करता हूँ।।८।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, on whose neck are rows of sacred *rudrākṣa* necklaces, on whose forehead is the auspicious ash, on whose head is *tulasī* and in whose hand is a water-pot made of wood.

Note : The Ācārya introduced wooden utensils for his personal use. Also, he is used to wear huge number of garlands of *tulasī*, *bilva* and lemons on his head in his own characteristic way. [8]

**प्राप्ताभयो जनभयादिव संवृताङ्गः**
**कोष्ठे क्वचित्प्रकटितार्धशरीरकान्तिः।**
**ध्याने रतो हिततमे सततं य आस्ते**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।९।।**

जो अभयपद को प्राप्त करने के बाद भी जनसम्पर्करूपा भीति (जनभय) के कारण अपने शरीर के अंगों को आवृत्त कर, किसी प्रकोष्ठ के एक कोने में आधे शरीर को ही लोक को दर्शन देने के व्याज से प्रकट किये हुए, परब्रह्म के सर्वोत्तम ध्यानरूप समाधि में सतत लीन रहते हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वतीरूप गुरु की शरण में मैं प्रपत्तिपूर्वक गमन करता हूँ।।९।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī who remains always in meditation on the supreme Reality sitting in the corner of a room constraining his body and revealing only a part of it through some window or the other as though out of fear from people, though he has attained the state of fearlessness.

Note : During the Ācārya's stay at Śivāsthānam his near invisible posture became wellknown to his devotees. [9]

**अन्नादिकोशमिह यः प्रविलाप्य सूक्ष्मे**
**सर्वान्तरे स्थिरपदो दहरे सुसूक्ष्मे।**
**अद्वैतमेकमवलम्ब्य लसन्तमीड्यं**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।१०।।**

जो अन्नमयादि कोशों को क्रमिक रूप से सर्वान्तर, विक्रियारहित दहराकाशस्वरूप परमात्मा में प्रविलापित कर केवल एक अद्वैत का अवलम्बन कर सुशोभित हो रहे हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वतीरूप गुरु की शरण में मैं प्रपत्तिपूर्वक गमन करता हूँ।

अन्नमय, प्राणमय, मनोमय, विज्ञानमय एवं आनन्दमय पाँच कोश तैत्तिरीयोपनिषद् में वर्णित हैं, जो आत्मा का कोश की तरह आच्छादन किए हुए हैं। यह आच्छादन तादात्म्याध्यास के द्वारा देह, प्राण, मन, विज्ञान एवं आनन्द आदि में आत्मबुद्धि का होना है। इस अध्यास के निरास के पश्चात् आत्मा ब्रह्मरूप में प्रतिष्ठित होता है, इसी तथ्य का वर्णन प्रकृत श्लोक में संकेतरूप में किया गया है।।१०।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī the revered one, who having dissolved the gross bodies such as *annamayakośa* etc., into the subtle one and having fixed himself steadily in the most subtle ether called 'dahara' shines forth embracing the one reality without a second.

Note : In the *Taittirīyopaniṣad* five sheaths namely, *annamaya, prāṇamaya, manomaya, vijñānamaya* and *ānandamaya* are described in detail. It is also described that every succeeding sheath is internal and subtle with regard to the previous sheath. *Dahara* is the cavity in the heart. Meditation of it as Brahman is enjoined in the *Upaniṣads.* [10]

**एकं द्वितीयरहितं परमार्थसत्यं**
**स्थूलादिसर्वजगतः प्रविलापसिद्धम्।**
**दृष्ट्वा हि यः स्मितमुखोऽस्त्यतिलोकदृष्टिः**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।११।।**

एक, द्वितीयरहित परमार्थसत्य (जो सर्वदा सत्य है) स्वरूप ब्रह्म, जो स्थूल आदि सम्पूर्ण जगत् के प्रविलापन से सिद्ध होता है, उसका ज्ञान प्राप्त कर जो सर्वदा स्मितहास (थोड़ा हास) युक्त तथा अलौकिक दृष्टिवाले हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वतीरूप गुरु की शरण में मैं प्रपत्तिपूर्वक गमन करता हूँ।

कारणलय के क्रम से अर्थात् पृथ्वी का जल में, जल का तेज में, तेज का वायु में, वायु का आकाश में, आकाश का अव्यक्त में और अव्यक्त का आत्मा में लय के क्रम से पञ्चभूतों का लय होता है। इसी को स्थूलादि जगत् का प्रविलापन कहा गया है। योगशास्त्र में यह लय का क्रम वर्णित है।।११।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, whose uncommon looks and smile reveal his inward experience of the ultimate reality that is one without a second, that is transcendentally real and attained by dissolving the gross world into it. [11]

**यस्यैव वामनशरीरधृतो गुणाब्धे-**
**स्त्रैविक्रमो हि महिमा विशदीकरोति।**
**ब्राह्मस्य दीप्ततपसो महिमातिरेकं**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।१२।।**

ब्रह्मज्ञानसम्पन्न यति सर्वरूप होते हैं। अतः आचार्यचरण के लघुकाय को विष्णु का वामनरूप बतलाया गया है, जिसमें स्थित गुणों का विस्तार हमें त्रिविक्रम (तीन पादविक्षेपों से तीनों लोकों को मापनेवाले विष्णु) की छवि में मिलता है। अत एव यह वर्णित किया गया है कि गुणों के सागर जिन स्वामिपाद के वामन (लघुकाय) शरीर में अवस्थित महिमा का विस्तार त्रिविक्रमस्वरूप करता है, अर्थात् आचार्यचरण में जितने गुण हैं, जो सामर्थ्य उनके अन्तःकरण में अवस्थित है, उसकी स्फुट व्यक्ति के लिए त्रिविक्रम का शरीर ही पर्याप्त हो सकता है, अन्य शरीर नहीं। ऐसे ब्राह्म तप के महिमापुंज के रूप में वर्तमान श्री चन्द्रशेखरेन्द्र सरस्वतीरूप गुरु की शरण में मैं प्रपत्तिपूर्वक गमन करता हूँ।।१२।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, the ocean of good and auspicious qualities, who possesses a small

and short figure, but whose greatness which fills all the three regions, establishes the glory of severe penance made on *Brahman.*

Note : The terms 'vāmana' and *'trivikrama'* signify two forms of one and the same Viṣṇu in his fifth incarnation. The first one is short and the second one is so vast that it filled all the three worlds. These terms are used to describe the physical form and the glory of the *Ācārya* respectively. [12]

**ओङ्कारतत्त्वमनिशं हृदि भावयन् यः**
**प्राणान्निरुध्य हृदि सुस्थिरकायदृष्टिः।**
**निर्वातदीप इव भाति सुदीप्तमूर्तिः**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।१३।।**

जो ओङ्कारस्वरूप तत्त्व की अपने हृदय में निरन्तर भावना करते रहते हैं और प्राण का हृदय में निरोध करके अपने काय (शरीर) एवं दृष्टि दोनों को स्थिर कर देने के कारण वायुरहित स्थान में अवस्थित दीप की तरह शोभित होते हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वतीरूप गुरु की शरण में मैं प्रपत्तिपूर्वक गमन करता हूँ।।१३।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who shines steadily poised like the flame of a lamp that is undisturbed in the absence of wind, and whose form is thus effulgent on account of his stopping the breath through *prāṇāyāma* and attaining steadiness in body and looks, and who remains in contemplation upon the supreme reality which is revealed in the letter *'om'* in his mind. [13]

**निर्व्याधिदेहविभवं शतपूर्णमायुः**
**सञ्जीव्य दर्शयति यो गुरुयोगसिद्धिम्।**
**नानश्नतोऽस्ति न च केवलमश्नतश्च**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।१४।।**

व्याधिरहित वैभवयुक्त शरीर को शत संवत्सरों की पूर्ण आयु पर्यन्त जिन्होंने सम्यग् रूप से धारण कर अरोग जीवन से योग की गुरु-सिद्धियों को प्रदर्शित किया, जो संसार के भोगों में अत्यधिक आसक्ति न करके केवल शरीर-धारण के निमित्त उनको स्वीकार करते हुए योग की सिद्धियों

को प्राप्त कर सके, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वतीरूप गुरु की शरण में मैं अन्य साधनों का त्याग करके प्रपत्तिपूर्वक गमन करता हूँ॥१४॥

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who having lived a full life of hundred years demonstrates the greatness of *yoga* which is attained only by one who is neither indulgent in wordly objects nor shies away from them, putting them to the uses of necessity. [14]

**शान्तानि सत्त्वगुणवैभवमण्डितानि**
**तेजोमयानि करुणारसपूरितानि।**
**योऽलौकिकानि वहतीह सुवीक्षितानि**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।१५।।**

जो सत्त्वगुण के वैभव (प्रकर्ष) से मण्डित, करुणारसपूर्ण तेजोमय, अलौकिक दृष्टि-निक्षेप का वहन करते हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में मैं अन्य साधनों का त्याग करके प्रपत्तिपूर्वक गमन करता हूँ॥१५॥

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, whose looks are transworldly, peaceful, fully adorned with *sattvaguṇa,* radiant and overflowing with compassion. [15]

**संविन्मये महसि निर्गुणनित्यसत्येऽ-**
**द्वैते सदाकृतपदः श्रुतिगोचरे यः।**
**अव्यक्तहासपरितुष्टदृगेव भाति**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।१६।।**

श्रुति से प्रतिपादित त्रिकाल सत्य, निर्गुण तेजःस्वरूप, ज्ञानरूप, अद्वैत ब्रह्म में सर्वदा रमण करनेवाले, अव्यक्तहास से युक्त, सर्वदा सर्वथा सन्तोष-युक्त दृष्टि-निक्षेप करनेवाले, शोभायमान श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में मैं अन्य सभी साधनों का परित्याग करके प्रपत्तिपूर्वक गमन करता हूँ॥१६॥

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who sports an inexplicable smile and whose eyes are effuigent because of the joy of having established himself in the reality which

is of the nature of consciousness, which is the eternal truth without any attribute, which is one without a second and which is the content of the Upaniṣadic teachings. [16]

**संन्यासधर्मनिचयस्य पुराणशास्त्र-**
**रामायणादिपरिदर्शितमौनिवृत्तेः।**
**काले कलौ निरुपमाननिदर्शनं यः**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।१७।।**

सम्पूर्ण संन्यास धर्मों तथा पुराणशास्त्र एवं रामायण आदि के द्वारा सर्वतोभावेन प्रदर्शित की गयी मुनियों की वृत्ति या आचार के, इस सभी सद्गुणों का ग्रास करनेवाले कलियुग में, जो मूर्तरूप में अद्वितीय उदाहरण हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में मैं अन्य साधनों का तिरस्कार कर प्रपत्तिपूर्वक गमन करता हूँ।।१७।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who stands as an exceptional and matchless example of the *'muni-hood'* described in the *Purāṇas, Śāstras,* and the *Rāmāyaṇa* and who exemplifies the code of conduct of a *sannyāsin* during the present times of *kali.* [17]

**धर्मिष्ठतां सकलसत्पुरुषेषु तन्वन्**
**वेदोक्तधर्ममखिलागमतन्त्रभेदान्।**
**संख्यापयन् विजयतेऽपरशङ्करो यः**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।१८।।**

सभी सत्पुरुषों में धर्मनिष्ठा का विस्तार करने के कारण तथा वेदप्रतिपादित धर्म, सम्पूर्ण आगम एवं तन्त्र का सम्यग् रूप से प्रकाशन के कारण जो द्वितीय शङ्करभगवत्पाद के रूप में उत्कर्षसहित शोभा पा रहे हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में मैं अन्य साधनों को छोड़कर प्रपत्तिपूर्वक गमन करता हूँ।।१८।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who is truly Śaṅkara come again inspiring all good people to perform various rituals enjoined in the *Vedas and* explaining the *dharma* envisaged in the *Vedas* and making known the significance of the *Āgamas* and the *Tantras.* [18]

**अद्वैततत्त्वममलं भुवि संविवृण्वन्**
**सच्छिष्यजातमनघं निखिलासु दिक्षु।**
**संस्थापयन् विजयतेऽपरशङ्करो यः**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।१९।।**

जो मलरहित अद्वैत तत्त्व का भूमण्डल पर सम्यग् रूप से विवरण करने के कारण तथा सभी दिशाओं में शोभन शिष्यसमूह का सम्यग् रूप से स्थापन करने के कारण द्वितीय शङ्करभगवत्पाद के रूप में उत्कर्षसहित शोभा पा रहे हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में मैं अन्य साधनों का तिरस्कार कर प्रपत्तिपूर्वक गमन करता हूँ।।१९।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who is truly Śaṅkara come again explaining the faultless truth of Advaita and establishing a multitude of disciples in all directions of the world. [19]

**भाषादिभेदबहुलं जनजीवनं यः**
**सानातनेन महता हितधर्मदाम्ना।**
**संयोजयन् विजयतेऽपरशङ्करार्यः**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।२०।।**

भाषा आदि के अधिक भेद को अपने भीतर रखनेवाले जनजीवन को सनातन धर्मरूप हितकारी बृहद् बन्धन के द्वारा संयुक्त करते हुए जो द्वितीय शङ्करभगवत्पाद के रूप में उत्कर्षसहित शोभा पा रहे हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार करके मैं प्रपत्तिपूर्वक गमन करता हूँ।।२०।।

I take refuge in the preceptor Śrī Candrasekharendrasarasvatī, who is truly Śaṅkara come again inculcating the sense of unity among people by propagating the auspicious *sanātana dharma* and thus reminding the people of their commonness who otherwise stand divided by distinctions of language, caste and several other factors. [20]

**भूमिं भ्रमन् प्रचुरयन् सकलाँश्च वेदान्**
**अद्वैतमेव कथयन् प्रथयन् स्वधर्मम्।**
**सम्बोधयन् जनततिं परशङ्करो यः**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।२१।।**

सम्पूर्ण भारत-भूमि के भ्रमण के द्वारा सम्पूर्ण वेदों को समृद्ध करते हुए अद्वैत तत्त्व के उपदेश के द्वारा अपने धर्म का विस्तार करते हुए जन-समूह का अधिकारिता के अनुसार उचित सम्बोधन (जागरण) करते हुए जो द्वितीय शङ्करभगवत्पाद की तरह आचरण कर रहे हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अ़न्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।२१।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who is truly Śaṅkara come again and who tours the nation, popularises Vedic studies, preaches Advaita, establishes *svadharma* and enlightens the common man. [21]

**बाल्ये च दैवघटनात् शुभकामकोटि-**
**माठाधिपत्यगुरुतां गुरुणा नियुक्तः।**
**स्वीकृत्य विश्वविदितं हि मठं चकार**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।२२।।**

बाल्यावस्था में दैवयोग से काञ्चीकामकोटि-मठ का प्रबन्ध-भार एवं गुरुत्व के गुरुतर भार के उद्वहन के लिए गुरु की आज्ञा को स्वीकार कर जिन्होंने काञ्चीकामकोटि-मठ को विश्वविदित बना दिया, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।२२।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who has been made to fulfill the arduous duty of heading the Kāñcī Kāmakoṭi Maṭha at a very young age by his *guru* under unexpected and accidential circumstances, and who having accepted it has, indeed, made the Maṭha known to the entire world. [22]

**सञ्चारपूतभुवनं भुवि दीप्तकीर्तिं**
**साक्षात्कृतागमवचः प्रतिपाद्यतत्त्वम्।**
**सान्निध्यमात्रशमिताखिलकल्मषौघं**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।२३।।**

भूमण्डल को अपने संचार (भ्रमण) से पवित्र करनेवाले, सम्पूर्ण भूमण्डल में अपनी कीर्ति को प्रकाशित करनेवाले, आगम-वचनों के प्रतिपाद्य तत्त्व का साक्षात्कार करनेवाले, अपने सान्निध्य मात्र से सम्पूर्ण पापसमूह का शमन करनेवाले श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।२३।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who has sanctified this world by his tours, who is endowed with glory and fame, who has directly experienced the reality which is described by the Upaniṣadic texts and who by his mere presence washes away all kinds of sins. [23]

**कार्यं सदैव निगमागमपोषणादि**
**धार्यं सुबिल्वतुलसीदलमालिकादि।**
**हार्यं च भक्तजनतादुरितं च यस्य**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।२४।।**

सर्वदा निगम, आगम का पोषण ही जिनके लिए कार्य है; बिल्वपत्र, तुलसीदल एवं माला ही जिनके लिए धार्य (धारण करने के योग्य) है; भक्तजनसमूह का दुरित (पाप) ही जिनके लिए हार्य (हरण करने के योग्य) है, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।२४।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, for whom activity is always directed towards the furtherance of Vedic and Śāstraic studies, for whom the garlands to be worn are of the holy leaves of *bilva* and *tulasī* and for whom the thing to be destroyed is the sin of his disciples. [24]

**योऽनेकशो विहितपावनपादचार-**
**स्तीर्थानि नैजतपसा परिपावयन् हि।**
**तीर्थाधिको विजयतेऽखिलतीर्थमूर्तिः**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।२५।।**

जो अनेक बार अपने द्वारा कृत पावन पादसंचार से तथा अपने तप से तीर्थों को पूर्णरूप से पवित्र करने के कारण सभी तीर्थों से अधिक पवित्रकारक हैं तथा सम्पूर्ण तीर्थ-मूर्ति होकर अथवा बृहद् ब्रह्मरूप गुरुमूर्ति होकर उत्कृष्टरूप से शोभा पा रहे हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।२५।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who is indeed an embodiment of all the *tīrthas,* who shines forth as a person more pious than all the *tīrthas* and who makes the *tīrthas* themselves more pious by bathing in them, during his several pilgrimages and circumambulations of the country by foot.

Note : *tīrtha* means places of holy water.

Cf. *bhavadvidhāḥ bhāgavatāḥ tīrthabhūtāḥ mahītale tīrthīkurvanti tīrthāni svāntasthena gadābhṛtā.* [25]

**पाण्डित्यमेदुरमतीन् स्वसभास्थलीषु**
**सम्बोधयन् विशदयन्निगमार्थतत्त्वम्।**
**नैजं प्रकाशयति यो गुरुमूर्तिरूपं**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।२६।।**

पाण्डित्य से ओतप्रोत मतिवाले विद्वद्गण को अपनी सभास्थली में सम्बोधित करते हुए निगम के प्रतिपाद्य तत्त्व को विस्तार से बोधित करके जो अपने गुरुमूर्ति रूप को स्पष्टरूप से प्रकाशित करते रहे हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।२६।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who reveals his true form of *Dakṣiṇāmūrti,* the form of Śiva as wisdom incarnate, by such acts as convening eminent scholars for

discussion and addressing them and by elucidating the true significance of the meaning of the *Vedas* and the *Śāstras* to them.

Note : It is in the good experience of Pandits that quite often they were unable to answer the questions posed by the *Ācārya* during *śāstraic* conventions. At the end he used to clarify them himself. [26]

**श्रीशाङ्करं शिवतमं मतमात्मभेद-**
**धिक्कारधीरममृतं निगमान्तसिद्धम्।**
**अद्वैतमत्र गदितुं हि कृतावतारं**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।२७।।**

अद्वैत ब्रह्म का प्रतिपादन करनेवाला श्रीशङ्करभगवत्पाद का अत्यन्त कल्याणकारी मत, जो आत्मभेद की धिक्कृति बुद्धि को धारण करता है, जो किसी भी मत से खण्डित न होने के कारण अमृतस्वरूप है तथा उपनिषद् से सिद्ध होता है, उसका उपदेश करने के लिए ही जिन्होंने अवतार लिया है, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।२७।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who has manifested himself in this world to teach us the Advaita (i) which was propounded by Śrī Śaṅkara, (ii) which is the most auspicious of all philosophies, (iii) which alone is competent in refuting the difference between the *jīvātman* and the *paramātman,* (iv) which is as sweet as nectar and (v) which is established by the *Upaniṣads.* [27]

**कामाक्षिदिव्यचरणे सततं ह्युपास्ते**
**कामाँश्च भक्तजनताभिमतान् ददाति।**
**यः कामकोटिमठपोऽपि निरस्तकामः**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।२८।।**

जो पराम्बा भगवती कामाक्षी के दिव्य चरणों की सतत उपसना करते हैं तथा भक्तजनसमूह की अभिमत कामनाओं की पूर्ति करते हैं, जो कामकोटि-मठ के मठाधिपति होकर भी कामनाओं का निरास कर चुके हैं,

ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ॥२८॥

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who always worships and meditates upon the divine feet of Kāmākṣī, who fulfills all the desires *(kāmas)* of his devotees, who heads the Kāma Koṭi Pīṭha and who yet remains without any desire. [28]

**अद्वैतमेव वचने चरणे स्वचित्ते**
**सन्देशशंसनविधौ हितबोधने च।**
**अद्वैतमूर्तिरिह यो विलसत्यजस्रं**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।२९।।**

जिनकी वाणी से सर्वदा अद्वैत का प्रकाशन होता है, जिनका चित्त सर्वदा भगवान् के चरणों में, शिष्यों को दिव्य सन्देश देने में तथा उनके हितबोधन में रहता है, ऐसे अद्वैतमूर्ति के रूप में जो सर्वदा शोभा पा रहे हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ॥२९॥

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who possesses unique uniformity of thought, word and action, and who gives messages of good counsel prompted by his own convictions and practice in a unique way. Indeed, he exists forever as *Advaita* personified. [29]

**यत्पादसेवनमलभ्यपदाप्तिहेतु-**
**र्यद्दर्शनं सकलदर्शनसिद्धिहेतुः।**
**यद्भावनं शुभदमीप्सितलाभहेतुः**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।३०।।**

जिनके चरणों का सेवन अलभ्यपद की प्राप्ति का हेतु है, जिनका दर्शन सकल सिद्धियों का हेतु है, जिनकी मूर्ति का निरन्तर ध्यान (भावना) शुभ को देनेवाला तथा ईप्सित लाभ का हेतु है, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ॥३०॥

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, serving whose feet endows one with the most unattainable and coveted positions, seeing whom is to see all that is to be seen, contemplating upon whom gives one all auspiciousness and enables one to attain all that is desired. [30]

**आचार्यशेखरममेयतपःप्रभाव-**
**मानन्दकन्दलितचारुगभीरवक्त्रम्।**
**शिष्याभयैकवरदानरतं महान्तं**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।३१।।**

आचार्य श्री चन्द्रशेखरेन्द्र सरस्वती में अप्रमेय (अनुमान के अयोग्य) तप का प्रभाव लक्षित होता है, आनन्द की वृष्टि करनेवाला जिनका मुखमण्डल शोभायुक्त एवं गाम्भीर्ययुक्त है, जो शिष्यों को अभय का वरदान करने में सर्वदा उद्यत रहते हैं, जो सर्वप्रकार से महत्त्वयुक्त होने के कारण महान् हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।३१।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who is the *Ācārya* par excellence, who possesses the power of *tapas* in abundance, whose face is both majestic and beautiful with bliss permeating through every pore, who is indulgent in offering the boon of fearlessness to his disciples, and who is great in every way. [31]

**आवृत्तचक्षुरिह यस्सकलं प्रपञ्चं**
**स्वप्नात्मकं परिमृशन् कुरुते च कार्यम्।**
**साक्षीभवन् स्वकरणादिसुचेष्टितस्य**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।३२।।**

जो नेत्र-निमीलन कर सम्पूर्ण प्रपञ्च की स्वप्नसदृशता का विचार करते हुए अनासक्त भाव से कार्य करते रहते हैं तथा अपने करण एवं अकरण रूप इन्द्रियों से अनुष्ठित कार्य के साक्षीरूप में विद्यमान हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।३२।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who having turned his eyes inward, experiences the entire world as a dream and who yet performs all his actions, distancing himself as the witness of his own good deeds performed by his physical and mental faculties. [32]

**यो ह्येकरूपनिजजीवितदर्शनेन**
**सम्पूजितोऽस्ति सकलैः स्वजनैः परैश्च।**
**वाग्यामकश्शमदमादिगुणस्वरूपः**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।३३।।**

जिनकी एक रूप में जीवनचर्या को आजीवन देखकर सभी शिष्यगण, आत्मीय जन एवं अन्य लोग भी उनकी केवल श्रद्धा से नहीं, गुणप्रयोज्य पूजा करते हैं, जो वाणी का नियन्त्रण कर मौनव्रत धारण करनेवाले तथा शम-दमादि गुणों के मूर्तरूप ही हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।३३।।

I take refuge in me preceptor Śrī Candraśekharendrasarasvatī, who is manifest as the personification of qualities like *śama* and *dama,* who has been adored by all his disciples as well as by others, and who maintains silence; and who has thus silenced his critics, by exhibiting his uniform and consistent life-style.

Note : Control of the internal organ (mind) is called *śama* and control of the external organs such as eye *etc.* is called *dama.* [33]

**यस्यैव जीवनमिहास्ति शताब्दसाक्षि**
**धर्मप्रचारपरिपालनबद्धदीक्षम्।**
**आध्यात्मिकस्वपरिरक्षणदक्षदक्षं**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।३४।।**

जिनका जीवन सौ वर्ष का साक्षी है, जो धर्मप्रचार एवं धर्म के परिपालन हेतु गुरु से दीक्षा प्राप्त किये हुए हैं, जो आध्यात्मिक दृष्टि से स्वपरिरक्षण में दक्ष लोगों से भी अधिक दक्ष हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।३४।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, whose life is totally committed to the protection and propagation of *sanātana dharma,* whose life most competently protects our spiritual wealth and whose life stands as witness to the full span of the twentieth century. [34]

**संसारतापपरितप्तजनालिदुःखं**
**हर्तुं स्वयं परिजहार भवाख्यबन्धम्।**
**कारुण्यपूरपरिशीतलसौम्यदृष्टिः**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।३५।।**

संसार-ताप से परितप्त जनसमूह के दुःख का हरण करने हेतु जिन्होंने संसार-बन्धन का स्वयं त्याग किया है, करुणा के प्रवाह से जिनकी दृष्टि सर्वतोभावेन शीतल तथा सौम्य है, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।३५।।

1 take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who has cut asunder the knot of *saṁsāra,* for the sake of relieving the people who have been afflicted by the disease of *saṁsāra* and whose looks are warm and friendly with compassion overflowing them. [35]

**आढ्ये धनेन रहिते विदुषां वरिष्ठेऽ-**
**विद्वज्जने युवजनेऽतिवयस्कदेहे।**
**संस्कारमात्रमुपलक्ष्य करोति चित्तं**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।३६।।**

धनी व्यक्ति को या धनरहित दरिद्र को, श्रेष्ठ विद्वान् को या अविद्वान् पामर पुरुष को, युवक को या अत्यधिक वय वाले व्यक्ति को उपलक्षित कर उनकी चित्तवृत्ति केवल संस्कार के लिए अघविधूनन हेतु होती थी। ऐसी समदृष्टि वाले करुणापरायण श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।३६।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who cares equally for the wealthy and the poor, the scholar and the

illiterate, the young and the old, whatever one may be, only if he is of good conduct. [36]

**सर्वं च भक्तगदितं कटुदुःखजातं**
**शृण्वन् सदा परिमृशन् तदपायहेतुम्।**
**मार्गं दिशन् यतिवरोऽपि महाकुटुम्बः**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।३७।।**

भक्तों के द्वारा व्यक्त किए गये कटु दुःखसमूह को सुनकर उस पर विचार करते हुए उसको दूर करने का उपाय बतलानेवाले यतिवर का कुटुम्ब बहुत विशाल था। इस विशाल कुटुम्ब पर अनुग्रह-दृष्टि रखनेवाले श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।३७।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who listens to the woes of his disciples, who contemplates on remedies to relieve them of their sorrows and who instructs the disciples accordingly and is indeed, therefore, the head of a large family though he remains a *sannyāsin* himself. [37]

**देशं भ्रमन् धनचयं परिगृह्य यच्छन्**
**सन्तोषयन् जनततिं स्वपितेव पुत्रान्।**
**यो राजते यतिवरो वसुधाकुटुम्बः**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।३८।।**

सम्पूर्ण राष्ट्र का भ्रमण करते हुए प्रभूत धन का संग्रह कर उसके वितरण के द्वारा जनसमूह को अपने पिता की तरह पुत्रों को सन्तोष देने वाले, केवल राष्ट्र ही नहीं, सम्पूर्ण पृथ्वी को अपने कुटुम्ब की तरह स्नेह एवं अपनत्व देनेवाले श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रप[illegible] गमन करता हूँ।।३८।।

I take refuge in th[illegible]śekharendrasarasvatī, who being a *sannyā*[illegible]rld for his family, because of his perig[illegible]collecting and then giving away money [illegible]s a father does his children. [38]

**मुक्तोऽपि सन् भुवनसंग्रहहेतुना यः**
**कर्माणि सर्वजनताहितदान्यसक्तः।**
**कुर्वन्निदर्शयति नैजजगद्गुरुत्वं**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।३९।।**

जीवन्मुक्त होने पर भी जो लोकस्थिति के निमित्त कर्म के संग्रह के लिए सर्वजनसमूह का हित करनेवाले कर्मों का आचरण असक्त होकर भी स्वयं करते हुए अपने जगद्गुरुत्व को प्रदर्शित करते हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।३९।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who being liberated himself, performs, in a detached manner, actions that are good to all people, with a view to teach the world the truth about dispassionate action and who thereby justifies his status as *jagadguru* or the teacher of the world. [39]

**पूर्णं वयस्तदुपदेशविधिश्च पूर्णः**
**पूर्णं तपस्तदुपदिष्टपरात्मबोधः।**
**पूर्णं च कर्म य इहास्ति नितान्तपूर्णः**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।४०।।**

जिन्हें सौ वर्ष की पूर्ण वय प्राप्त हुई है, जिनकी उपदेश-विधि भी पूर्ण है; क्योंकि उनके द्वारा उपदिष्ट मार्ग का अनुसरण कर लोग ऐहलौकिक एवं पारलौकिक फलों को प्राप्त कर आनन्दित होते हैं। उनका तप पूर्ण है तथा उनके द्वारा उपदिष्ट परात्मा का बोध भी पूर्ण है, जिनके कर्म पूर्ण हैं और इस प्रकार सर्वविध पूर्णता के कारण जो नितान्त पूर्णता को प्राप्त हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।४०।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, whose life of a hundred years is complete, whose counselling is complete, whose penance is complete, whose exposition of the supreme being (*paramātman)* is complete, whose actions are complete and who is himself in every way complete. [40]

**कर्मास्ति देहधृतिलोकशुभादिहेतु-**
**र्भक्तिर्भवे स्मरहरे सगुणे च यस्य।**
**ज्ञानं निजानुभवसिद्धचिदेकनिष्ठं**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।४१।।**

जिनके कर्म देहधारण के निमित्त एवं उसके द्वारा लोक के शुभ के हेतु हैं, अर्थात् जिन्होंने केवल लोककल्याण के लिए शरीर धारण किया है, भोग- के लिए नहीं। जिनकी भक्ति काम का दहन करनेवाले सगुण शङ्कर में है, जिनका ज्ञान अनुभवसिद्ध चित्तत्त्वनिष्ठ है, अर्थात् जिन्होंने चित्तत्त्व का साक्षात्कारात्मक ज्ञान प्राप्त किया है, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।४१।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who performs only those actions that are necessary to sustain his body and which cause good to all humanity, who offers his devotion to the manifest form *(Saguṇa Brahma)* in the form of Lord Śiva and whose wisdom is centered round the pure consciousness which is revealed only in one's own experience. [41]

**लोकस्य यो हितकरोऽस्ति सुकर्मयोगी**
**स्थाणौ कृतात्मशरणो ननु भक्तियोगी।**
**साक्षात्कृतात्मविभवः खलु बोधयोगी**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।४२।।**

जो सम्पूर्ण लोक का हित करनेवाले शोभन कर्मयोगी हैं, जिन्होंने भगवान् शङ्कर में प्रपत्ति कर भक्तियोग का आश्रयण किया है, जो आत्मा के वैभव का साक्षात्कार करने के कारण ज्ञानयोगी हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।

श्रीमद्भगवद्गीता में ज्ञानयोग, कर्मयोग और भक्तियोग के रूप में ईश्वर से योग या मिलन हेतु तीन उपाय बतलाये गये हैं। उन तीनों उपायों का समावेश आचार्यचरण में बताया गया है।।४२।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who is considered an exemplar of *Karmayoga* because of the actions he performs for the good of the society, who is considered an exemplar of *bhaktiyoga* because of his surrender to Lord Śiva and who is considered an exemplar of *jñānayoga* because of his direct perception and experience of the *ātman.*

Note : These three *yogas* which are considered to be mutually complimentary are well described in the texts like the *Bhagavadgītā.* The *Ācārya* is described as an exemplar of all the three *yogas.* [42]

**ज्ञानादियोगनिरतौ वरसम्प्रदाय-**
**रक्षाविधौ शमदमादिगुणप्रकर्षे।**
**स्वेनैव राजति समो य इहाद्वितीयः**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।४३।।**

जो ज्ञानयोग, भक्तियोग, कर्मयोग आदि के अनुष्ठान में तथा श्रेष्ठ सम्प्रदाय की रक्षा करने में अथवा शम, दम आदि गुणों के प्रकर्ष में अपने समान अपने ही होकर शोभा पाने के कारण अद्वितीय हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।४३।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who is peerless and can be matched with himself alone in his mastery of the many kinds of *yoga,* in his protection of the varied and great traditions and in his possession of an abundance of virtues such as *śama* and *dama.* [43]

**आडम्बरं न सहते न च राजतन्त्रं**
**स्वीयप्रयोजनकृतं परिसेवनं च।**
**अङ्गीकरोति करणत्रयसेवनं यः**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।४४।।**

जो अपने को प्रदर्शित करनेवाले समारम्भों को सहन नहीं करते तथा राजनीति को भी सहन नहीं कर पाते; क्योंकि उसमें उनकी रुचि नहीं है। स्वार्थप्रेरित सेवा-भाव जिन्हें पसन्द नहीं; क्योंकि उसमें वञ्चकता का भाव

होता है। अत: जो केवल मन, वचन एवं शरीर इन तीन साधनों से समवेत रूप में की गयी सेवा को ही, जो एक-दूसरे की पूरक होती है, स्वीकार करते हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।४४।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who is intolerant of pomp and show, who is disinterested in politics, who does not accept service rendered to him with self-interest, who is pleased to accept only such services rendered to him by all the three instruments of services, namely, mind, speech and body. [44]

**एकान्तवाससुखितो जनसङ्कुलेषु**
**देशेषु वासमपि यो बहुशश्चकार।**
**दिग्भ्रान्तदुःखिजनतापथदर्शनाय**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।४५।।**

जो एकान्त-वास में सुख का अनुभव करते थे; किन्तु जनसंकुल स्थान में जहाँ जनसमुदाय रहता था, वहाँ भी उपदेश के अभाव में मार्ग को न प्राप्त करनेवाले किंकर्तव्यविमूढ़ दु:खी जनसमूह का पथप्रदर्शन करने के लिए बहुत बार जिन्होंने वास किया, ऐसे लोगों के उद्धार की रुचि रखनेवाले श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।४५।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, whose preference is to enjoy solitude, but who stays in crowded cities also for long periods often, in order to guide mankind which is in distress because of its loss of direction in life. [45]

**श्रीशङ्करार्यचरितं ह्यतिलोकवृत्त-**
**माश्चर्यकारि मनुजैर्विदितं कथेति।**
**सत्यापितं भवति यस्य च दर्शनेन**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।४६।।**

श्री शङ्करभगवत्पाद का चरित्र जो अलौकिक एवं आश्चर्यकारक होने के कारण लोगों के द्वारा 'कथा' के रूप में जाना जाता था, अर्थात् वर्तमान काल में जिसका अनुवर्तन सम्भव नहीं लगता, वह लोकोत्तर चरित भी

जिनको देखने से सत्यापित हो जाता है, अर्थात् प्रत्यक्ष रूप में जिसे देखने के बाद लोग शङ्करचरित को सत्य मान लेते हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।४६।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, perceiving whom one is convinced of the truth of Śrī Śaṅkara's life which is otherwise so wondorous and superhuman that it might be considered a myth by people. [46]

**यो बालको निजसुवर्णमयीं विभूषां**
**दत्त्वा नु चोरमथ तत्पतिमेव चक्रे।**
**स्वान्ते सदा कलयते च हरस्य तत्त्वं**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।४७।।**

जिन्होंने बाल्यावस्था में अपना स्वर्णाभूषण चोर को स्वयं देकर उसे उसका स्वामी बना दिया; क्योंकि उस चोर में वे हरण करनेवाले हरपद-वाच्य शिव की प्रतिमूर्ति का विभावन अपने मन में सर्वदा करते रहे। ऐसे अलौकिक भावपूर्ण हृदयवाले श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।

विशेष—आभूषण स्वयं ले लेने पर चोर उसका स्वामी नहीं हो सकता; क्योंकि जिसका धन है उसकी अनुमति स्वामित्व के लिए अपेक्षित है। अपनी स्वेच्छा से देकर स्वामी जी ने उसे चौर्य-दोष से बचाया; क्योंकि वह उनकी दृष्टि में भगवान् शिव की प्रतिमूर्ति था।।४७।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who in his boyhood gave away his gold bracelet to a thief, thus making the thief the owner of the jewel and who always comtemplates upon the incident to understand the philosophical significance of the divine robber, Hara. [47]

**वर्षे त्रयोदशतमे सुकुमारभावे**
**मूर्धाभिषेकमहितो वरकाञ्चिपीठे।**
**स्वीकृत्य भारमतुलं विधिवद्दधार**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।४८।।**

तेरह वर्ष की सुकुमार अवस्था में जो काञ्ची पीठ पर मूर्धाऽभिषेक के द्वारा पूज्यता को प्राप्त किए तथा पीठ के अतुलनीय कार्यभार को स्वीकार कर जिन्होंने उसका विधिवत् निर्वाह किया, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।४८।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who having taken the responsibility of being the head of the great *Kāñcī Pīṭha* having been consecrated at a tender age of thirteen, holds his office strictly according to the prescriptions. [48]

**दुग्धाशया घटगलार्पितकण्ठदेशं**
**प्राणाशया परिलुठन्तमिवाखुभोजम्।**
**सांसारिकं हि दयते हतबन्धनो यः**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।४९।।**

जो मुक्तात्मा आचार्यपाद सांसारिक लोगों को उस बिल्ली की तरह मानकर, जो दुग्धपूर्ण घड़े में अपनी गर्दन स्वयं फँसाकर उसे छुड़ाकर प्राण बचाने की आशा से चारों ओर व्याकुल होकर भागते हुए भी मुख में गृहीत चूहे को खाना चाहती है, केवल स्वार्थचिन्तनपरायण जानते हुए भी, उनके ऊपर उद्धार की इच्छा से दया करते हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।४९।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who having cut the knot of *saṁsāra* feels compassion for people who, like the cat that has put its head into the milkpot, greedily, and then rolls on the floor and struggles for life, have entangled themselves in *saṁsāra* and are struggling to be free. [49]

**सिंहासनं सुरुचिरामलवस्त्रकोटिं**
**ग्रैवेयकादिनिकरं च किरीटकं यः।**
**पीठाधिपोचितमपीह तृणाय मेने**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।५०।।**

आचार्य-पीठ के सिंहासन, अत्यन्त सुन्दर एवं शुचि प्रकृष्ट वस्त्रों तथा धारणीय अलङ्कारसमूह एवं किरीट आदि, जो पीठाधीश्वर के लिए परम्परानुसार विहित होने से उचित हैं; उन्हें भी तृण के समान हेयता बुद्धि से अगणनीय समझनेवाले श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ॥५०॥

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who was indifferent to the throne, the colourful garments, the many types of necklaces and the crown, even though the heads of the maṭhas are permitted to put them to use. [50]

**तुर्याश्रमोऽपि महितं निजदेशदास्य-**
**मुक्तिप्रदं जनहितं खलु 'खादि'वस्त्रम्।**
**धृत्वा महोद्यमकृते विदधे य आशीः**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।५१।।**

चतुर्थाश्रमरूप संन्यास आश्रम में भी, अपने देश को दासता से मुक्ति दिलाने में समर्थ महत्त्वयुक्त खादी वस्त्र को जिन्होंने धारण किया तथा राष्ट्र के दासता से मुक्तिरूप अत्यन्त पवित्र एवं महान् उद्देश्य की पूर्ति के लिए अपना आशीर्वाद प्रदान किया, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ॥५१॥

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who in spite of having entered the fourth *āśrama,* the state of *sannyāsa,* extended his blessings to the struggle for the freedom of our country by wearing clothes of *khādī,* the cloth that is held in high esteem, an effective tool for the liberation from slavery, and which is the best for the welfare of the society.

Note : The *Ācārya* wore exclusively *Khādī* clothes till he attained *siddhi.* [51]

**वेदस्य रक्षणपरो विधिवद् विधिज्ञः**
**कृत्वा निधिं तदुचितं बहुशिष्यसङ्घान्।**
**सम्प्रेर्य नष्टसदृशास्सुररक्षशाखाः**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।५२।।**

जो वेदों की रक्षा में सर्वदा तत्पर हैं तथा वेदरक्षा की विधि को अच्छी तरह से जानने के कारण जिन्होंने वेदरक्षा हेतु पर्याप्त समुचित निधि (कोश) की स्थापना कर, बहुत शिष्यों को प्रेरित कर संचित की गयी इस निधि के द्वारा, लोगों को अध्ययन में प्रेरित कर नष्टप्राय बहुत-सी वेदशाखाओं की रक्षा अच्छी प्रकार से की, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ॥५२॥

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who being intent in protecting the *Vedas* is most competent in doing so, has constituted a huge trust for this purpose, who has inspired many to undertake the *adhyayana* of *śākhās* that are on the verge of extinction and who has thereby succeeded in protecting several such *śākhās.* [52]

**यस्सर्वधर्मसमभावनयातिधर्मी**
**धर्मे स्वकेऽभिरतिमेव सदाभिचष्टे।**
**धर्मान्तरग्रहणकर्मणि हेत्वभावात्**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।५३।।**

जो सभी धर्मों में समभाव (बराबरी का भाव, अर्थात् प्रत्येक की अपने में पूर्णता) की भावना करने के कारण अतिक्रमणशील धर्म को धारण करने वाले हैं, अर्थात् यह अतिक्रमणशील धर्म ऐसा है जो सभी धर्मों के पुण्य को अपने में समाहित कर लेता है। ऐसा ब्रह्मज्ञानरूप धर्म है जिसे गीता में—

यावानर्थ उद्वापे सर्वत: सम्प्लुतोदके।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानत:॥

इस वचन के द्वारा बतलाया गया है। ऐसे धर्म को धारण करने पर भी जिन्होंने सबको अपने धर्म का पालन करने का उपदेश ही सर्वदा दिया; क्योंकि धर्मान्तर ग्रहण में उनको कोई फल नहीं दिखाई देता था, सब कुछ तो अपने धर्म से ही मिलेगा, यह उनका भाव था। ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ॥५३॥

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who having transcended all *dharmas* and who holds all religions in all equal vision, always propogates one's pursuance of one's own specific religion alone, for want of any good reason to convert from one religion to another. [53]

**वर्णेष्ववान्तरविभागशतेषु सत्सु**
**वैवाहिकादिसमयं दिशति स्वके यः।**
**सङ्घस्य सर्वगणवृद्धिमपेक्षमाणः**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।५४।।**

ब्राह्मण-क्षत्रिय-वैश्य-शूद्रादि वर्णों में एक-एक में अवान्तर शताधिक भेदों के रहने पर भी विवाहादि अपने समूह में किये जाँय, ऐसा निर्देश उपदेश के माध्यम से देते हुए जो सभी समूहों एवं अवान्तर प्रभेदों की वृद्धि की अपेक्षा रखते हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।५४।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who advocates alliances of marriages within one's own community in a society where several hundreds of communities exist, only with a view to protect each and every group within the larger whole of the society. [54]

**वर्णाश्रमादिपरिरक्षणदीक्षितो यः**
**कारुण्यदृष्टिकरणे न विवेक्ति कञ्चित्।**
**लोकस्य दृष्टिमनुसृत्य निजां च दृष्टिं**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।५५।।**

वर्णाश्रम आदि की सर्वथा रक्षा करने हेतु कृतसङ्कल्प होने पर भी, कृपापूर्वक करुणा की दृष्टि करते समय किसी को वे भेद से अलग नहीं करते, चाहे वर्णाश्रमावलम्बी हो या अन्य धर्मी, आर्त होने पर सब पर कृपा करते हैं। लोक की दृष्टि का अनुसरण कर वे व्यवहार-निर्वाह के लिए वर्णाश्रम आदि की रक्षा का उपदेश देते हैं; किन्तु उनकी अपनी दृष्टि से जगत् के मिथ्या होने से वे भेदरहित होकर सबको भयमुक्त करने हेतु करुणा करते हैं। ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।५५।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who in spite of being committed to the protection of *varṇas* and *āśramas,* never shows any disparity in his compassion to any one and who thus reconciles his individual point of view and the social point of view in an amicable way.

Note : From the point of view of *Ācārya,* who is liberated while living, *varṇas* and *āśramas are* irrelevant. But from the point of view of the world they are very much relevant to uphold Śāstraic instructions and to maintain the equilibrium. The *Ācārya's* point of view is *pāramārthika* whereas the point of view of the world is *vyāvahārika.* He has reconciled both these seemingly opposite views in his own unique way. [55]

**देवालयेषु सततं सुम-धूप-दीप-**
**नैवेद्यनिर्मितिकृते च दिदेश दातुम्।**
**शालीश्च रूप्यकचयं विभवानुसारं**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।५६।।**

मन्दिरों में पुष्प, धूप, दीप, नैवेद्य आदि पूजासम्भार की आवश्यकता की पूर्ति करने के लिए जिन्होंने लोगों को अपनी सामर्थ्य के अनुसार चावल और रूपया देने हेतु उपदेश दिया, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।५६।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who has called for the donation of rice and money according to one's capacity for the offering of flowers, *dhūpa* and *naivedya* in the temples. [56]

**काञ्चीपुरे महति यो विचरन् स्वकीय-**
**वासादिना प्रकटयन् स्थलगौरवादि।**
**जीर्णान् हि देवनिलयान् सुपुपोष नित्यं**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।५७।।**

विशाल काञ्चीपुरी में विचरण करते हुए जो अपने निवास आदि के द्वारा विश्रामस्थल के गौरव, महत्त्व आदि को सूचित करते हैं तथा जीर्ण

देवनिलयों का जीर्णोद्धार आदि के द्वारा नित्य पोषण करते हैं; ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।५७।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who has helped the renovation of the dilapidated temples in Kāñcīpuram by such methods as wandering in the city, and by himself staying in them for some time to highlight the greatness and auspiciousness of these temples.

Note : During the *Ācārya's* memorable stay at Śivāsthānam, it was in the experience of the visiting devotees to enquire about the place of his stay and to search for and locate it with great difficulty. [57]

**सर्वार्थसिद्धिदमथो मनसि प्रसाद-**
**सन्धायकं श्रुतिलयादियुतं च विष्णोः।**
**सङ्कीर्तनं कलिहरं दिशतीह सर्वान्**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।५८।।**

सभी प्रयोजनों को सिद्ध करनेवाले तथा मन में प्रसन्नता का सञ्चार करनेवाले, श्रुति-लय आदि से युक्त भगवान् विष्णु के कलियुग के दोषों को दूर करनेवाले, नामसंकीर्तन का उपदेश सभी को देनेवाले श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।५८।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who advises all to perform the musical rendering of the names of Viṣṇu- *Viṣṇusaṅkīrtana* - which gives all things desired, which gives solace to the mind, which is suited to *śruti* and *laya* and which is the destroyer of *'kali'*. [58]

**सन्दर्शनागतजनैस्सह भाषमाणो**
**योऽज्ञातहेतुकतया प्रतिपद्य मौनम्।**
**सर्वान् समागतजनान् चकितान् विधत्ते**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।५९।।**

दर्शनार्थ आये हुए लोगों के साथ वार्तालाप करते समय अज्ञात कारणों से अचानक मौन होकर जो सभी समागत लोगों को आश्चर्यचकित कर देते हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।५९।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, whose sudden withdrawal into silence even in the middle of conversations with visitors, leaves people around him wonder-struck. [59]

**कामाक्षिपूजनविधौ विरतिं गतायां**
**नामावलावथ तदर्चनतत्परं यम्।**
**दृष्ट्वा पुरोहितजनः पुनरेव वक्ति**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।६०।।**

भगवती कामाक्षी का नामावली से अर्चन करते समय, पुरोहितों द्वारा उच्चरित नामावली का उच्चारण समाप्त होने पर भी पुष्पादि के अर्पण के द्वारा अर्चन करते रहनेवाले, जिनको पुरोहित लोग पूजा-विराम हेतु सङ्केत करते हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।६०।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who continues to perform *arcanā* (worship) even after completion of the *nāmāvalī* during the ritualistic worship of Kāmākṣī and thereby causes the priests to chant the *nāmāvalī* again. [60]

**हस्तद्वयेन हृदये निहितेन बिम्बं**
**व्यासस्य पूजनकृते प्रणयन् बभौ यः।**
**अद्वैतगाङ्गजलनेतृभगीरथाभः**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।६१।।**

व्यास-पूजन के अवसर पर, अपने दोनों हाथों से व्यासदेव की प्रतिमा को अपने हृदय में समेट कर ले जाते समय जो अद्वैतरूपी गङ्गा का जल लानेवाले भगीरथ की तरह प्रतीत होते हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।

**विशेष**—व्यास जी ने ब्रह्मसूत्र की रचना कर अद्वैत-गङ्गा का उद्भव किया; किन्तु धरती पर उसके प्रचार एवं सर्वत्र गमन का कार्य भगीरथ-सदृश आचार्य शङ्कर एवं उनके अनुयायियों ने किया। यही तथ्य यहाँ सङ्केतित है।।६१।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who is hailed as Bhagīratha bringing down to us the Advaita Gaṅgā, while holding the idol of Vyāsa against his chest and taking it to the place of worship during Vyāsa-pūjā. [61]

**यः स्वामिनाथभगवान् प्रणवं स्वपित्रे**
**सर्वात्मकाय जगतां गुरवे दिदेश।**
**तस्यैव रूपमपरं मनुते जनो यं**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।६२।।**

जिन्होंने स्वामीनाथ भगवान् के रूप में अवतीर्ण होकर अपने पिता एवं जगत् के गुरु भगवान् शिव को प्रणवोपासना का रहस्य बतलाया। ऐसे स्वामिनाथ का ही दूसरा रूप जिसको लोग मानते हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।६२।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, whom people consider to be a manifestation of Lord Svaminātha who initiated his father Lord Śiva, the teacher of all the worlds, into the meaning of the mystic *praṇavopāsana.*

Note : It may be noted that the name of the *Ācārya* before he was initiated into the *sannyāsa* was Svāminātħan. [62]

**पद्भ्यां चरन् भरतभूमिमनेकवारं**
**सम्पाद्य शिष्यधनमद्भुतसंख्यया यः।**
**सम्भाव्यमेव सकलं जगतीति शास्ति**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।६३।।**

इस भारतवर्ष की भूमि में अनेक बार पैदल भ्रमण कर, अद्भुत संख्या में शिष्यों को दीक्षित कर असम्भव को सम्भव करनेवाले जो आचार्य-चरण जगतीतल पर सब कुछ सम्भव ही है, असम्भव कुछ नहीं है, ऐसा उपदेश

देते हैं; उन श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ॥६३॥

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who has shown that nothing is impossible in this world by his walking across the length and breadth of this vast land on foot several times, and thus earning an abundant wealth of devotees all over the country. [63]

**वेदोक्तधर्मचरणे प्रतिषिद्धहानौ**
**विद्यासु च श्रुतिशिरःप्रतिपादितासु।**
**ब्रह्मापरोक्षकरणे सुनिदर्शनं यः**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।६४।।**

वेद-प्रतिपादित धर्म का आचरण करने में, वेद से निषिद्ध का त्याग करने में, उपनिषद् में प्रतिपादित विद्याओं (उपासनाओं) का भ्रमरहित निश्चयात्मक ज्ञान रखने में तथा ब्रह्म का अपरोक्ष साक्षात्कार करने में जो शोभन निदर्शन (दृष्टान्त) हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ॥६४॥

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who is exemplary in conducting the rituals enjoined in the *Vedas*, in abandoning the actions condemned in the *Vedas*, in undertaking the *upāsanās* prescribed in the *Upaniṣads* and in attaining the realisation of Brahman. [64]

**यस्यैव दीप्तवपुषः परमात्मदृष्टे-**
**र्मुक्तात्मनो विगलिताखिलबन्धनस्य।**
**अग्रे स्थितो हि मनुते स्वमतीवधन्यं**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।६५।।**

तप के कारण दीप्त वपुवाले, सर्वत्र परमात्म-दृष्टि रखनेवाले, सम्पूर्ण बन्धनों का विगलन होने से जीवन्मुक्तावस्था में विराजमान जिस यतिराज के सम्मुख स्थित व्यक्ति अपने को अत्यन्त धन्य मानते हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ॥६५॥

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, who possesses a glowing physical structure, whose vision is fixed in *Paramātman,* who is liberated, whose bondages of various kinds have been destroyed and standing in whose presence one feels himself as being blessed plentifully. [65]

**यस्यैव पूर्ण-परिपूत-परात्मबोध-**
**दीप्तस्य चेह सहजन्म-सहाधिवासैः।**
**धन्या चकास्ति जनता भुवि भारतीया**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।६६।।**

जो पूर्ण पवित्र परतत्त्व के साक्षात्कार से प्रदीप्त हैं, जिसके कारण उनके साथ भारतभूमि में जन्म लेनेवाला तथा साथ-साथ निवास करनेवाला जनसमूह अपने को धन्य मानता है तथा जो भासमान अपने स्वरूप में विराजमान हैं, ऐसे श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।६६।।

I take refuge in the preceptor Śrī Candrasekharendrasarasvatī, whose realisation of the complete and auspicious *Paramātman* has rendered him radiant, by whose contemporaneity in birth and life the humanity in India is blessed. [66]

**'योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां**
**सञ्जीवयत्यखिलशक्तिधरः स्वधाम्ना'।**
**हृद्ये सुपद्यरचने परिचोदयँस्तं**
**श्रीचन्द्रशेखरगुरुं शरणं प्रपद्ये।।६७।।**

जो सम्पूर्ण शक्तिसम्पन्न परमात्मा शरीर के भीतर प्रवेश कर अपनी शक्ति के द्वारा मेरी गाढ़-निद्रा में निमग्न वाणी को सञ्जीवित करने के द्वारा सुन्दर पद्य-रचना में प्रवृत्त कर रहा है, उस परमात्मा के स्वरूप में विद्यमान श्री चन्द्रशेखरेन्द्र सरस्वती गुरुपाद की शरण में अन्य साधनों का तिरस्कार कर मैं प्रपत्तिपूर्वक गमन करता हूँ।।६७।।

I take refuge in the preceptor Śrī Candraśekharendrasarasvatī, the all-powerful, who having entered me in spirit has kindled my dormant capacity for verbal expression and has caused by his might the composition of these good poems.

Note : The first half of this verse forms the words of Dhruva in the *Śrīmadbhāgavata.* [67]

**यद्दिव्यपादकमले नवपद्यपुष्पैः**
**सम्पूजिते शिवतमे शुभदे शरण्ये।**
**श्रीचन्द्रशेखरयतीन्द्रसरस्वती वो**
**मह्यं सदैव वरदोऽस्तु गुरुर्गरिष्ठः।।६८।।**

नव पद्य-पुष्पों से सुपूजित जिनके दिव्य पादपद्मयुगल कल्याणस्वरूप, शुभ देनेवाले तथा शरणागत की रक्षा करनेवाले हैं, ऐसे पादपद्मवाले यतिवर श्री चन्द्रशेखरेन्द्र सरस्वती जी महाराज, जो अतिशय गरिमामय गुरु हैं, वह आप सबके लिए और मेरे लिए भी अभीष्ट की प्राप्ति करानेवाले हों। अर्थात् हम सबको आचार्यचरण से अभीष्ट की प्राप्ति हो।।६८।।

May Śrī Candraśekharendrasarasvatī, the greatest of all the preceptors, whose lotus feet are auspicious, the giver *of* all good things and the sole refuge and which are worshipped with the flowers of these new verses, grant to you and me all that is desired. [68]



## परिशिष्टम्

# ॥ धन्याष्टकम् ॥

**धन्या वयं निरुपमानतपोनिधेस्ते**
**श्रीचन्द्रशेखरगुरो धृतकाञ्चिपीठ!**
**वेदोक्तधर्मनिचयादिपुनःप्रतिष्ठा-**
**सत्रे सुदीक्षितवतो नु समानकालाः॥१॥**

हे उपमानरहित तपोनिधिस्वरूप काञ्चीपीठ को धारण करनेवाले तथा वेदप्रतिपादित धर्मसमूह के पुनः प्रतिष्ठा-सत्र में शोभन रूप में दीक्षित होनेवाले श्री चन्द्रशेखर गुरुपाद आपके अवस्थिति-काल में इस धराधाम पर रहनेवाले हम सब लोग धन्य हैं; क्योंकि हमने ब्रह्मज्ञान-निधि के रूप में आपको प्राप्त किया है॥१॥

0! Guru! Śrī Candraśekharendrasarasvatī! The pontiff of Śrī Kāñchī Kāmakoṭi Pīṭha! Blessed, indeed, are we to have been your contemporaries; you who is the incomparable embodiment of penance; you who have initiated yourself in the life-long sacrifice of upholding and re-establishing various *dharmas* prescribed by the *Vedas.* [1]

**धन्यां वयं ननु गुरो! करुणारसार्द्रे**
**गाम्भीर्य-निर्जित-महोदधिके सुशान्ते!**
**तेजस्विनी प्रतिफलत्परमात्मबोधे**
**द्रष्टुं त्वदीयनयने हि समानकालाः॥२॥**

हे गुरो! करुणारस से आर्द्र तथा गाम्भीर्य से महोदधि को भी जीतने-वाले, प्रशान्त तेजोयुक्त तथा परमार्थबोध का प्रतिफलन करनेवाले (जिनके दर्शन से ही यह बोध हो जाता है कि गुरुवर्य को परमात्म-साक्षात्कार हुआ है) आपके नेत्रयुगल का दर्शन प्राप्त करने के लिए आपके मानव शरीर में अवस्थित रहने के समानकाल में रहनेवाले हम लोग धन्य हैं॥२॥

0! Guru! Blessed, indeed, are we to have been your contemporaries ; to see your eyes, which are moistered with compassion; which defeat the ocean in their depth (*gāmbhīrya)* which are peaceful and resplendent; which reflect your experience of the ultimate reality, i.e. *paramātman.* [2]

**धन्या वयं ननु गुरो! मृदुमन्द्रधीर-**

**गाम्भीर्यवन्ति विशदानि लघूनि चैव।**

**धर्मादि-तत्त्वगण-सूक्ष्म-सुबोधकानि**

**श्रोतुं त्वदीयवचनानि समानकालाः।।३।।**

हे गुरो! आपके मृदु धीर-गम्भीर विशद (विस्तृत) तथा लघु वचन, जो धर्म आदि पुरुषार्थों के तत्त्वसमूह का सूक्ष्मातिसूक्ष्म रूप से बोधन करने में समर्थ हैं, ऐसे आपके वचनों के श्रवण के लिए आपके धराधाम पर अवस्थित होने के समानकाल में रहनेवाले हम लोग धन्य हैं; क्योंकि हमारे लिए ब्रह्म का श्रवण दुर्लभ नहीं है, हम तो आचारसम्पन्न गुरु से धर्म, अर्थ, काम, मोक्ष रूप चतुर्विध पुरुषार्थ के तत्त्व को सुनने का अवसर प्राप्त कर ही रहे हैं।।३।।

0! Guru! Blessed, indeed, are we to have been your contemporaries; to listen to your words; which are soft, low in voice, full of conviction *(dhīra)* and profound in their meaning; which are clear, brief in form, and which interpret scores of subtle concepts such as *dharma.* [3]

**धन्या वयं ननु गुरो! भवतोऽन्तिके हि**

**राष्ट्रस्य लौकिकविचारगणस्य चैव।**

**वैयक्तिकस्य सुखदुःखचयस्य वार्ता**

**वक्तुं प्रसादमनुभोक्तुमनन्यकालाः।।४।।**

हे गुरो! आपके समीप में स्थान पाकर राष्ट्रीय विचार सम्बन्धी वार्ता, लौकिक विचार सम्बन्धी वार्ता, वैयक्तिक सुख-दुःख की वार्ता को कहने तथा कथन के उत्तरकाल में आपके कृपाप्रसाद का भोग प्राप्त करने में आपकी अवस्थिति के अनन्य काल में धराधाम पर रहने का अवसर प्राप्त करनेवाले हम सभी लोग धन्य हैं।।४।।

0! Guru! Blessed, indeed, are we to have been your contemporaries; to talk to you about worldly matters related to the nation, about various mundane issues, about matters of personal joys and sorrows; and to receive your favours and blessings. [4]

**धन्या वयं ननु गुरो! भवतः पदाब्ज-**
**मुद्राङ्कितं तदनु पूततमं शिवं च।**
**श्रीभारतस्य महितं रजसां चयं नः**
**स्प्रष्टुं शिरोभिरवसाम समानकालाः।।५।।**

हे गुरो! आपके चरणकमल से चिह्नित मुद्रा से अङ्कित तथा सर्वाधिक पवित्र एवं कल्याणकारी इस भारतवर्ष की महिमामण्डित धूलि को सिर से स्पर्श करने के लिए हम आपके समानकाल में इस भूमि पर रहे और वास एवं दर्शन का लाभ प्राप्त करते रहे, अतः हम धन्य हैं।।५।।

0! Guru! Blessed, indeed, are we to have been your contemporaries; to touch the dust of the land of great India with our heads; which is great in itself and made most pious and auspicious by the imprints of your lotus feet. [5]

**धन्या वयं ननु गुरो! भवतः पवित्रे**
**सञ्चारपूतभुवने चरणे विशाले।**
**संसारभीतजनताश्रयदेऽनुसृत्य**
**गन्तुं कियन्ति च पदानि समानकालाः।।६।।**

हे गुरो! संचरण से पृथ्वीतल को पवित्र करनेवाले तथा संसार-भय से भयभीत जनसमूह को आश्रय देनेवाले एवं पवित्र आपके विशाल चरणयुगल का अनुगमन कर कुछ पद तक आपके पीछे चलनेवाले, आपके समकालिक जीवनवाले हम लोग धन्य हैं।।६।।

0! Guru! Blessed, indeed, are we to have been your contemporaries; to walk a few steps following your feet; which are pious; which made this country sacred by their treading on it, which are large., and tend to give refuge to the entire mankind, frightened of the cycle of births and deaths. [6]

**धन्या वयं ननु गुरो! भवतोऽतिलोकं**
**भास्वत्प्रभावलयितं तपसा कृशाङ्गम्।**
**शान्तं चलं मह इवाप्रतिमं च साक्षात्-**
**कर्तुं च रूपमनघं हि समानकालाः।।७।।**

हे गुरो! आपके लोकातिक्रम करनेवाले, सुदीप्त प्रभा से घिरे हुए, तप से अत्यन्त कृशता को प्राप्त होनेवाले, गतिशील तेज के समान प्रतीत होनेवाले, प्रतिमारहित अनघ आकृति का साक्षात्कार करने का अवसर प्राप्त करनेवाले हम लोग आपके समानकाल में जीवन का लाभ प्राप्त करने के कारण धन्य हैं।।७।।

0! Guru! Blessed, indeed, are we to have been your contemporaries; to behold your holy form; which is non-earthly, which is encircled with resplendent light, which is thin because of penance, which is quiet and peaceful, which is like moving light and which is indeed unique. [7]

**धन्या वयं तव नु सन्निधिमात्रकेण**
**धन्या वयं तव हि दर्शनसेवनेन।**
**धन्या वयं सदुपदेशविधेस्तवैव**
**त्वद्विप्रयोगवशतो नु वयं त्वधन्याः।।८।।**

हे गुरो! हम आपके सन्निधानमात्र से धन्य हैं, हम अपने अदृष्ट के अनुसार दर्शन और सेवा दोनों अथवा कोई एक प्राप्त करके धन्य हैं, हम आपकी उपदेश-विधि से धन्य हैं; क्योंकि आप जैसा श्रोत्रिय ब्रह्मनिष्ठ उपदेशकर्ता गुरु उपदेशकर्ता के रूप में प्राप्त है। हम किसी भी प्रकार से आपका वियोग होने पर ही अपनी अधन्यता समझते हैं; क्योंकि उस समय हम गुरु के दर्शन, पादस्पर्श, संलाप एवं सहवास आदि से सर्वदा के लिए वंचित हो जायेंगे।।८।।

O! Guru! Blessed, indeed, are we by your mere presence before us; Blessed, indeed, are we by beholding you and serving you; Blessed, indeed are we by your righteous discourses; But, unfortunate, indeed, are we because of your seperation from us. [8]



लघु-ग्रन्थमाला
[७१]

पद्मश्रीपण्डितश्रीरघुनाथशर्मप्रणीतः

# श्रीकृष्णास्तवः

सम्पादकः
**प्रो. नरेन्द्रनाथपाण्डेयः**
आचार्यः
प्राचीनराजशास्त्रार्थशास्त्रविभागस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणस्याम्




**वाराणस्याम्**
वि.सं. २०६६

# स्वरूप-व्याक्रिया

आसन्नविंशेभ्यो वर्षेभ्यः प्राग् बहुषु स्तोत्रेष्वन्यतममिदं भगवल्लीलावर्णनपरं स्तोत्रं श्रीकृष्णस्तवाभिधं विरचय्य लोकस्योपायनीकृत्य १९८९ तमे ख्रीस्ताब्दे ब्रह्मलीनेषु तातपादेषु चिरस्य प्रकाश्यमानेऽस्मिन् तेषां भक्तिप्रवणं मानसमुल्लासं प्राप्नोति। तच्च—

**वाणीगुणानुकथने श्रवणौ कथायां**
**हस्तौ च कर्मसुमनस्तव पादयोर्नः।**
**स्मृत्यां शिरस्तव निवासजगत्प्रणामे**
**दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम्।।**

इति भागवतीयामुक्तिं सार्थयत् निरन्तरं भगवत्स्मरणं समर्चापूतं नैकविधेषु स्तोत्रेषु प्राकाश्यं प्राप्तवदिति नास्ति तिरोहितं स्तोत्रस्यास्य पाठकानाम्।

योगेन तनुत्यजां तेषां कर्मानुष्ठानतत्पराणाम् तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दतीति भगवदुक्त्यनुसारेण समाधियोगभावितान्तःकरणानां प्राप्तयोगसमृद्धीनां कपालमुद्भिद्य ब्रह्मलोकप्राप्तिविषयकनैकधाकृतपूर्वालापानां तथैव प्राप्तब्रह्मलोकानां रामनवम्यां दिवैव रामजन्मावसरे १९८० तमे वर्षे सगुणसाकारबालविग्रहधारिरामलक्ष्मणसाक्षात्कारसनाथानां तयोर्दर्शनेनोपदेशेन च नाशितसकलदुरितानाम्, अभिव्यक्तपरात्मदर्शनानाम्, अस्मिन् जन्मन्येव प्राप्तगुरुसेवाप्रसादभूतब्रह्मदर्शनानाम्,

**एतावत्येव शुश्रूषा कार्या पितरि पुत्रकैः।**
**बाढमित्यनुमन्येत गौरवेण गुरोर्वचः।।**

इति वचनं मनसिकृत्य श्रीराम इवाजीवनं पित्राज्ञापालनसक्तमानसानाम्,

**देवगन्धर्वगोलोकान् ब्रह्मलोकाँस्तथापरान्।**
**प्राप्नुवन्ति महात्मानो मातापितृपरायणाः।।**

इति वाल्मीकीयरामायणवचः प्रमाणत्वेनाश्रित्य पितृसेवयैव आज्ञानुमोदनरूपया प्राप्तब्रह्मलोकानाम्,

**एतद्ध्यातुरचित्तानामिच्छतामकुतोभयम्।**
**भवाम्भोधिप्लवो दृष्टो हरिचर्यानुवर्णनम्।।**

इति वचनं स्मारं स्मारं भगवत्येव लीनसर्ववाग्व्यापाराणाम्, सर्वदा व्यापारवतामपि वस्तुतोऽव्यापाराणां सर्वाणि स्तोत्राणि भगवत्प्राप्तये प्रस्तुतान्यपि

लोककल्याणाय भवन्तीत्यस्यापि स्तोत्रस्य फलसूचनार्थं लिखितेनान्तिमश्लोकेन सूच्यते।

श्लोकानां सहस्रं पञ्चाधिकं भगवत्सपर्यार्थं तै रचितम्। अत्र अन्तिमः श्लोकः स्तोत्रमिदं यशस्यम् आयुष्यम् अघौघमर्षणं वर्तत इत्युक्त्वा अस्याकर्णनानन्तरमनुचिन्तनेनेदं माधवभक्तिभावनमघधावनञ्च भवतीति वदति। एतेन लोककल्याणाय भवतीदं स्तोत्रमिति गम्यते।

चतुरधिकसहस्रश्लोकात्मकस्य स्तोत्रस्य एकेन श्लोकेनोच्यमानमनुचिन्तनफलम्—

**तेषां सततमुक्तानां भजतां प्रीतिपूर्वकम्।**
**ददामि बुद्धियोगं तं येन मामुपयान्ति ते।।**

**तेषामेवानुकम्पार्थमहमज्ञानजं तमः।**
**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता।।**

(श्रीमद्भगवद्गीता-१०.१०)

इत्यादिगीतोक्तिभिः सूच्यमानां भक्तोपर्यनुग्रहस्यावश्यम्भावितां सूचयति। अनेन च फलवर्णनपरेणान्तिमेन श्लोकेन भगवद्भक्तिरूपो मोक्षस्य सरलः पन्थाः सूचितो भवति। तथा चोक्तो मोक्षधर्मसंग्रह एकत्र—

**कर्मभिर्भगवद्भक्तिर्भक्त्या चेशकृपा तथा।**
**ज्ञानं तेन विमुक्तिश्च मोक्षधर्मस्य संग्रहः।।** इति।

अत्र च सोपानारोहणन्यायेन कर्मभक्तिज्ञानानां मानसावस्थाविशेषे क्रम उक्तः। यद्यपि श्रीमद्भगवद्गीतासु—

**लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ।**
**ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्।।** (३.३)

इति भगवद्वचनदर्शनेन भगवता कर्मज्ञाननिष्ठे प्रोक्ते, भक्तिनिष्ठा तु नोक्ता इति भ्रमो जायते, तथापि विचारणानन्तरं भगवद्धार्दमाविष्कर्तुमेवं वक्तुं युज्यते मधुसूदसरस्वतीरीत्या यद् अस्मिन्नधिकारित्वाभिमते लोके शुद्धाशुद्धान्तःकरणभेदेन द्विविधे जने द्विविधा द्विप्रकारा निष्ठा स्थितिः ज्ञानपरता कर्मपरता च पुरा पूर्वाध्याये मया तवात्यन्तहितकारिणा प्रोक्ता प्रकर्षेण स्पष्टत्वलक्षणेनोक्तां तथा चाधिकार्यैक्यशङ्कया मा ग्लासीरिति भगवदाशयः।

अत्र एकैव निष्ठा साध्यसाधनावस्थाभेदेन द्विप्रकारा, न तु द्वे स्वतन्त्रे निष्ठे इति सूचयितुं निष्ठेत्येकवचनम्। तथा च वक्ष्यति—**'एकं सांख्यं च योगञ्च यः पश्यति स पश्यति'** इति।

अत्र ज्ञाननिष्ठायामेव भक्तिनिष्ठाया अप्यन्तर्भाव उक्तः—

**तानि सर्वाणि संयम्य युक्त आसीत मत्परः।**
**वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता।। (२.६)**

इत्यत्र। मत्पर इत्यत्र अहं वासुदेवः परः परत्वेनोपादेयो यस्य स मत्पर इति व्युत्पत्त्या भक्तियोग उक्तः। द्विविधा निष्ठेति कथनेनैतदवगम्यते—कर्माणि साधनावस्थायामनुष्ठेयानि। कर्मानुष्ठानादेव भक्तियोगस्य ज्ञानयोगस्य वा प्राप्तिर्भवति। अत एवोच्यते श्रीमद्भागवते—

**अस्मिन् लोके वर्तमानः स्वधर्मस्थोऽनघः शुचिः।**
**ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया।।**
**स्वर्गिणोऽप्येतमिच्छन्ति लोकं निरयिणस्तथा।**
**साधकं ज्ञानभक्तिभ्यामुभयं तदसाधकम्।। (११.२०.११-१२)**

अत्र श्रीधरस्वामी—अस्मिँल्लोके अस्मिन् नृदेहे, अनघो निषिद्धत्यागी। अतः शुचिर्निवृत्तरागादिमलः। यदृच्छयेति केवलज्ञानादपि भक्तेर्दुर्लभतां द्योतयति। स्वर्गिणोऽप्येतमिति श्लोके ज्ञानभक्त्योः साधको मनुष्यदेहः स्तूयते। कर्मद्वारैव मनुष्यशरीरं यदृच्छया ज्ञानस्य भक्तेर्वा साधकमित्युच्यते।

कर्मभिः फलेच्छारहितैरन्तःकरणशुद्धिर्भक्त्या च वासनानिवृत्तिरित्युक्तं भागवते—

**तैस्तान्यघानि पूयन्ते तपोदानजपादिभिः।**
**नाधर्मजं तद्धृदयं तदपीशाङ्घ्रिसेवया।। (६.२१.७)**

अत्र श्रीधरस्वामी—तेषामघानां हृदयं सूक्ष्मं रूपं संस्काराख्यं न शुद्ध्यति तदपीशाङ्घ्रिसेवया कीर्तनादिना शुद्ध्यतीत्यर्थः। अयं भावः—महान्त्यपि पापानि सकृदुच्चारितेनैव नाम्ना नश्यन्ति सकृत्प्रवर्तितेन दीपेनेव गाढध्वान्तानि। तदावृत्त्या तु पापान्तरस्यानुत्पत्तिर्दीपधारण इव तमोऽन्तरस्य। ततश्च वासनाक्षयाद् हृदयशुद्धिः। एतदर्थमेव तत्र तत्रावृत्तिविधानम्। तदेवात्राप्युक्तम्—'तदपीशाङ्घ्रिसेवया' इति।

तपोदानजपादिभिरघानि पूयन्ते पापानाम् अनिष्टफलप्रापिका शक्तिर्नश्यति, ईशाङ्घ्रिसेवया तु पुनः पापे प्रवर्तिका वासनाऽपि नश्यतीति ज्ञेयम्।

इदन्त्ववधेयम्—'साधकं ज्ञानभक्तिभ्याम्' इत्यनेन अधिकारिभिरनुष्ठितैः कर्मभिर्ज्ञानभक्त्योः साध्यताया उक्तेरुभयोः स्वतन्त्रफलत्वं सूच्यते। अत्र गीताऽपि प्रमाणभूता। गीतायां हि—

**क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्।**
**अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते।।** (१२.५)

इत्यत्र सगुणोपासनया विना गुरूपदेशं विना च श्रवणमनन-निदिध्यासनाद्यावृत्तिक्लेशं स्वयमाविर्भूतेन वेदान्तवाक्येनेश्वरप्रसादसहकृतेन ज्ञानोदय उच्यते। अतो भक्तेः स्वतन्त्रतया मोक्षसाधनत्वम्। अव्यक्तासक्तचेतसान्तु देहाभिमानवताम् अधिकक्लेशेन ज्ञानोदय इत्युच्यते। अत्रोभयोः साधनयोरेकस्मिन् फले विनियोगात् तरपा क्लेशतारतम्यं बोध्यते।

तानि सर्वाणि संयम्येत्यत्र ज्ञाननिष्ठायां साधनभक्तेः सहकारित्वमुक्तम्, साध्यभक्तेस्तु न सहकारित्वम्, तस्याः स्वातन्त्र्येण ज्ञाननिष्ठां विनाऽपि मोक्षहेतुत्वात्। ज्ञाननिष्ठायाश्च कर्मयोगसाध्यत्वमुक्तं गीतायाम्—

**नहि ज्ञानेन सदृशं पवित्रमिह विद्यते।**
**तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति।।** (४.३८)

इति श्लोकव्याख्यायां शाङ्करभाष्ये—'तज्ज्ञानं स्वयमेव योगसंसिद्धो योगेन कर्मयोगेन समाधियोगेन च संसिद्धः संस्कृतो योग्यतामापन्नो मुमुक्षुः कालेन महता आत्मनि विन्दति लभते' इत्यादिना। अत्र भगवत्पादवाक्ये—'कर्मयोगेन समाधियोगेन च' इत्यंशस्य प्रयोगाद् उभयोरावश्यकत्वं सूच्यते। कर्मयोगो निष्कामकर्मयोगः। अत्राभिनवगुप्तपादाचार्यास्तु 'तदात्मविषयं ज्ञानं कालेन महता कर्मयोगेन संसिद्धो योग्यतां प्राप्तः सन् स्वयमेवानायासेन लभते न तु कर्मयोगं विनेत्यर्थः' इति वदन्तः कर्मयोगस्य अवश्यानुष्ठेयतामाहुः। एवं लोकोद्धारार्थं ज्ञानकर्मनिष्ठयोरावश्यकत्वमुक्तम्।

श्रीमद्भागवतमहापुराणे वर्णितं कृष्णचरितमाधारीकृत्य स्तोत्रस्यास्य निबन्धनं कृत्वा सहैव विषमस्थलटिप्पणमपि स्तोत्रकर्त्रैव विहितमर्थसौकर्याय। अलेख्यया लेखभाषया निबद्धस्यास्य मुद्रणयोग्या प्रतिलिपिः प्राचीनराजशास्त्रार्थशास्त्रविभागीयप्राध्यापकैः **डॉ. दिनेशगर्ग**महाशयैः कृतेति त आशिषा योज्यन्ते। अन्ते च लोककल्याणकारिस्तोत्रमिदं भगवतः श्रीकृष्णस्य चरणकमलयोः समर्पयन् विरमामि।

नरेन्द्रनाथपाण्डेयः

**(प्रो. नरेन्द्रनाथपाण्डेयः)**
आचार्यः
प्राचीनराजशास्त्रार्थशास्त्रविभागस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये

**वाराणस्याम्**
वसन्तपञ्चम्याम्,
२०६६ तमे वैक्रमाब्दे

पद्मश्रीपण्डितश्रीरघुनाथशर्मप्रणीतः

# श्रीकृष्णस्तवः



एतद्ध्यातुरचित्तानामिच्छतामकुतोभयम्।
भवाम्भोधिप्लवो दृष्टो हरिचर्यानुवर्णनम्।।१।।

श्रीकृष्णचरणद्वन्द्वमधुना महदद्भुतम्।
यत्पायिनो न मुह्यन्ति मुह्यन्ति यदपायिनः।।२।।

तव चरणनिविष्टोऽभेदनिर्धूतमोहः
किमपि भवजदुःखं नाविदं वीतशोकः।
तव चरणवियुक्तः शोकमोहोपरक्तः
कमलनयन शश्वत्त्वत्प्रतीक्षापरोऽहम्।।३।।

विशति विशति कामो मानसं मानसं मे
दहति दहति चेतः क्रोधदावानलो मे।
हरति हरति बोधं लोभक्रोधोऽनिशं मे
शमय शमय भीतिं त्वत्पदप्रापिणो मे।।४।।

यो विश्वसर्गस्थितिसंहृतीनां हेतुः पुराणः पुरुषः प्रसिद्धः।
यदन्वितं सर्वमिदं जगत्सदानन्दरूपं सततं विभाति।।५।।

यो ब्रह्मणे प्राक् प्रजिघाय वेदं क्रियाविधिज्ञापनकौतुकेन।
तं सर्वधातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात्।।६।।

गुरुं गरीयांसमगाधबोधं प्रजापतिं तं प्रपितामहञ्च।
सर्वस्य लोकस्य चराचरस्य प्रभुं प्रपद्ये शरणं शरण्यम्।।७।।

भूतपञ्चकमिदं समाश्रितं यत्र भाति भुजगो यथा स्त्रजि।
सत्यमीश्वरमखण्डमद्भुतं मन्महे मनसि तन्महन्महः॥८॥

गोपिकाजनविलाससंस्पृहं वंशिकारवविकृष्टवन्यकम्।
यामुनं पुलिनमाश्रितं सदा मन्महे मनसि तन्महन्महः॥९॥

कालियाहिनत्तमूर्धमर्दनं दैत्यदानवविपदविवर्धनम्।
आश्रिताश्रयमुदारविक्रमं मन्महे मनसि तन्महन्महः॥१०॥

त्वत्पदाम्बुजनिपातिनं भिया वेपमानमगतिं कृतागसम्।
नाथ वीक्ष्य करुणेन चक्षुषा देहि भीतिपरिभञ्जकं वचः॥११॥

यत्तमोभयमसीमलीमसं मानसं विशति दाश्यतमः।
वारिताश्रितविपत्तिजालकं बालकं मनसि मन्महे महः॥१२॥

यस्य पादत्रयं चिन्मयं द्योतते यस्य पदि चतुर्थे तमःस्तोमकम्।
तं निरीहं प्रभुं सर्वसम्भासकं सम्प्रपद्ये शिवं सुन्दरं सादरम्॥१३॥

व्रजविपिनबिहारी विघ्नविध्वंसकारी
करगिरिवरधारी गोपिकानन्दकारी।
रथचरणहतारी रक्षिताऽसौ मुरारि-
र्भवतु भवतु कामं कोऽप्यसौ कैटभारिः॥१४॥

इन्द्रनीलमणिपुञ्जमञ्जुलं वञ्जुलीकृतसमस्तराजकम्।
पीतवाससमुदारमच्युतं चित्त चिन्तय मनोहरं हरिम्॥१५॥

गोपयौवतदुकूलहारिणं तारिणं भवपयोधिसन्ततेः।
दैत्यदानवकदम्बसूदनं चिन्तयाशु मधुसूदनं हरिम्॥१६॥

पूतनोरसि लसन्तमर्भकं विस्मयस्तिमितगोपवीक्षितम्।
चिन्तयाशु भववार्धिलङ्घने पादपोतमकुतोभयं हरिम्॥१७॥

केशिवक्त्रकुहरे निवेशितं दीर्घदण्डधरदण्डभीषणम्।
चिन्तयाशु मधुविद्विषः सदा पावनं हि भुजदण्डमद्भुतम्॥१८॥

यस्तृणावर्तमाकाशगं पातयं कायभाराद् विनिष्पीड्य भूमौ मुहुः।
सञ्जघानाशु सांराविणं वर्तयन् सन्निधत्तां समे मानसे तामसे॥१९॥

धर्मराजकृतराजसूयके योऽकरोद् द्विजपदावनेजनम्।
तं गवां द्विजकुलस्य भूतये नित्ययुक्तमहमाश्रये हरिम्॥२०॥

धर्मराजकृतराजसूयके भूमिदेवनरदेवसङ्गमे।
पूर्वदेवरिपुरर्हणां पुरा प्रापयँस्तमहमाश्रये हरिम्॥२१॥

धर्मराजकृतराजसूयके यः क्षिपन्तमसुरं पितृस्वसुः।
आत्मजं रथपदस्य धारया सञ्जघान तमहमाश्रये हरिम्॥२२॥

धर्मराजकृतराजसूयके यः क्षिपन्तमसुरं द्विषद्गणम्।
सञ्जघान रथपादधारया तं श्रये भुवनभावनं हरिम्॥२३॥

यो द्रौपद्याऽऽहुत एयाय सद्यो वृद्ध्या हर्षयामास दीनान्।
दुःशासनोऽधोमुख आस तूष्णीं स मे यदूनामृषभः प्रसीदतु॥२४॥

यः शैशवे बाहुनैकेन धीरो गिरिं दध्ने गोपकान् पातुकामः।
शक्रे रुष्टे वर्षयत्यम्बुधाराः स मां नन्दनानन्दनः पातु दीनम्॥२५॥

यो रुक्मिणीं मिषतां पार्थिवानां भागं जहे रौहिणेयद्वितीयः।
यो रुक्मिणं पृष्ठगं चार्दयत्तं वन्दे मूर्तं पुण्यपुञ्जं यदूनाम्॥२६॥

यः स्यमन्तकमणिप्रलम्भने जाम्बवद्गृहमुपागतः स्वयम्।
जाम्बवद्दुहितरं तथा मणिं लब्धवान् स हरिस्तु भूतये॥२७॥

यः सप्तमत्तान् वृषभानथैको नासा रज्जुं ग्राहयामास धीरः।
पणं तीर्त्वा नाग्नजितीमुद्वहे स मे यदूनामृषभः प्रसीदतु॥२८॥

यः सर्वज्ञः सर्ववित् सर्वसाक्षी इदं विश्वं यस्य भासा विभाति।
अन्तर्यामी चेतनाचेतनस्य तं देवानां दैवतं सम्प्रपद्ये॥२९॥

दुर्वाससहास्यतां पाण्डवानां जलं पीत्वा तर्पयन् सर्वलोकान्।
शापाद् भयं वारयामास सद्यः स नो भयं वारयिताऽम्बुजाक्षः॥३०॥

यो जरासन्धमाजौ नियुद्धे स्थितं दारयिष्यन् पृथासूनुनाऽबोधयत्।
तं तृणं दारयित्वा निगूढाशयस्तं प्रपद्ये यदूनां पतिं सादरम्।।३१।।

सन्दीपनाय गुरवे गुरुदक्षिणायां
पुत्रं पयोधिसलिलेऽपहृतं विचित्य।
हत्वा च पञ्चजनमाशु ददौ स नाथो
भीतिं भिनत्तु भवरोगभयार्दितस्य।।३२।।

य: सुदामकणकामुको हरिर्वारितो रहसि लुब्धया श्रिया।
स्वल्पमेव परिभुज्य सस्मितो दैवसम्पदमदात् स पातु न:।।३३।।

य: पाण्डवानां शरणागतानां सारथ्यदौत्यादि चकार भक्त्या।
स वै मुरारिर्मधुकैटभारिर्दीनस्य मे दैन्यमपाकरोतु।।३४।।

गोब्राह्मणानां विधिवर्धकानां क्षेमाय लोकेषु कृतावतार:।
साधूनवन्नाशयन्नप्यसाधून् स मे देवो भजत: शं तनोतु।।३५।।

य: कुब्जया चन्दनेनानुलिप्त: कुब्जां चक्रे ऋजुकां नन्दसूनु:।
मालाकृते माल्यदानेन तुष्टो ददौ वरान् दुर्लभान् सोऽवतान्न:।।३६।।

यो राजधार्यं वाससं याचमान: परिक्षिपन्तं रजकं सञ्जघान।
धृत्वा वासो गोयुगं मल्लशालां गच्छन्मध्ये धनुरुग्रं बभञ्ज।।३७।।

यो मल्लशालागोपुरे वर्तमानं दुष्टं गजं दुष्टयन्त्रा नियुक्तम्।
क्रीडन् वीरो रौहिणेयद्वितीयो न्यहन् मत्तं प्राञ्जलिस्तं प्रपद्ये।।३८।।

मीरासूरसुदामागणिकागृध्रगजा यत्पदरजसा।
पूता भवजलपारं याता: पातु सदासौ पादनतान्।।३९।।

युद्धारम्भे शोकसंविग्नचित्तं धर्मं हित्वा परधर्मं श्रयन्तम्।
गीतावाक्यैर्बोधयामास धर्मं यस्तं धर्मं संश्रये बोद्धुकाम:।।४०।।

य: कर्मयोगं ज्ञानयोगञ्च योगी भक्तिं योगं प्राह पार्थाय पूर्वम्।
स मे भवाब्धौ मज्जते दुर्भगाय पोतं पादौ दिशताद् वासुदेव:।।४१।।

भृगुर्मुनीनां नृपतिर्नराणां सिंहो मृगाणां गरुडो द्विजानाम्।
प्रह्लादरूपो दितिजोत्तमानां श्रीवासुदेवस्तनुतां शुभं नः॥४२॥

योगी नो हृदि रुध्यते सुकृतिनां भक्त्या च शुश्रूषया
रुद्धश्चापि धुनोति कल्मषमलं ध्वान्तं यथा भास्करः।
तं देवं निरवग्रहं स्फुरदभिध्यानानुभावं भव-
भ्रान्त्याखिन्नमना उपैमि शरणं गोब्राह्मणानां सताम्॥४३॥

यमुनाकूलनिकुञ्जे विहरन् गोपीजनशतसंवृतकः।
वंशीरवपरिमोहितभुवनः पातु मुरारिः पातु सदा॥४४॥

नहि जातु मुरारे त्वत्पदतः परियातु ममायं चित्तमृगः।
सततं शुचि गायतु नाम सदा भवजालविभेदि निकाममवाक्॥४५॥

चित्तं मम चिन्तयतु तत्त्वमसि तत्त्वमसि
वाणी मम रौतु सदा तत्त्वमसि तत्त्वमसि।
वाद्यं मम वक्तु सदा तत्त्वमसि तत्त्वमसि
लोको मम सन्दिशतु तत्त्वमसि तत्त्वमसि॥४६॥

यस्यावताराः खलनिग्रहार्थाः सतां परित्राणकरा भवन्ति।
संशृण्वतां पारकृतो भवाब्धेः स वासुदेवस्तनुतां शुभं नः॥४७॥

यन्नाम पावनमहो विवशोऽपि गृह्णन्
जन्तुस्तरेद् भवसागरमप्यलङ्घ्यम्।
तस्मै नमो भयकृतां भयदाय पुण्य-
श्लोकाय पुण्यचरिताय सनातनाय॥४८॥

यत्पादसंश्रयसमाहितशान्तियोगाः
सद्यः पुनन्ति मुनयो नयनाभिरामाः।
तस्मै नमो भगवते कलिकल्मषाणां
शोधाय शुद्धयशसे पुरुषोत्तमाय॥४९॥

यत्पादस्पर्शकामा तरणितनुजनु: पादसंस्पर्शनेन
प्रीता पाथ: प्रवाहं सपदि निरुरुधे वेगत: संप्रयातम्।
सद्योजातं वहन्तं शिशुमपरमसौ प्रापयामास पारं
शौरिं तं बालकेलिप्रवणकरपदं बालकं सन्नतोऽस्मि॥५०॥

यस्मिन् भक्तिर्निर्निमित्ताऽपविघ्ना परो धर्मो मुनिभि: सम्प्रगीत:।
यया मनो भजतां सत्त्वशुद्धं न जात्वधर्मेषु विसज्जतेऽङ्ग॥५१॥

यो वैराग्यं जनयत्याशु बोधं याभ्यां परं संसृते: सन्निरोध:।
य: शृण्वतां शमलं संविधत्ते तं देवानां देवमीड्यं प्रपद्ये॥५२॥

विधिनाऽपहृतान् विपिने चरत: सुरभी शिशुकान् सह गोपसुतै:।
परिवीक्ष्य विधाय च तावत एव ययौ स्वगृहान् स हि पातु हरि:॥५३॥

चत्वारोऽर्था यस्य सम्यक् प्रसादे यस्य स्मृत्या जायते सम्प्रसाद:।
स्मृति: शश्वज्जायते यस्य कीर्त्या सोऽयं देवो भजतां शं तनोतु॥५४॥

भेदं हित्वा भजत: पूरुषस्य धर्मार्थकामा अपवर्ग्या भवन्ति।
अर्थाद् धर्मो धनतश्चैव काम: कामाद् दीर्घं जीवितं प्राहुरार्या:॥५५॥

जाते दीर्घे जीविते तत्त्वबुद्धिर्यया पुमान् अपवर्गं वृणीते।
जाते तस्मिन् मोदमानोऽतिमात्रं शोचन् जीवो जायते वीतशोक:॥५६॥

यत्तत्त्वं विद्वांस उदात्तसत्त्वा ज्ञानं विशुद्धाद्वयमादिशन्ति।
ब्रह्मेति यद्वेदविदो वदन्ति पौराणिका यं भगवन्तमाहु:॥५७॥

परो हि आत्मा जगतस्तस्थुषो यो भक्त्या दृश्यो ज्ञानवैराग्ययुक्त्या।
सर्वैर्वर्णैराश्रमैश्चैव सर्वै: स्वै: स्वैर्धर्मैरर्च्यमानोऽवतान्न:॥५८॥

अनलपरिवृतान् यो दह्यमानान् दवेन
शरणपरिगतान् प्रापीपलद् वह्निपीत्या।
अजगरपरिगीर्णान् गोपकानावतूर्णं
स जयति जगतीनां गोपिता कोऽपि देव:॥५९॥

यं सात्वन्तो मनसा निर्मलेन श्रुत्या कीर्त्या ध्यानतः पूजया च।
उपासीनाः कर्मबन्धान् धुवन्तो मोदन्ते तं देवदेवं प्रपद्ये॥६०॥

यद् वृत्तश्रवणे रुचिः खलु महत्पादाश्रयात्
श्रद्धया शुश्रूषोः प्रति जायते शुचि सरित्स्नानादितः सर्वदा।
सोऽयं पुण्यपराक्रमः पृथुयशाः पार्थस्य मित्रं
दयापात्रस्यार्तिजुषो ममाशु दुरितं दूरीकरोत्वञ्जसा॥६१॥

यस्य श्रवणं कीर्तनं चापि पुण्यं याभ्यां भगवान् हृदये सन्निविष्टः।
सतां मित्रं विधुनोत्याश्वभद्रं स मे देवः सततं सन्निधत्ताम्॥६२॥

नष्टप्राये किल्विषाणां कदम्बे शश्वत्सात्वत्सेवया जायतेऽद्धः।
कृष्णे भक्तिः कामलोभादिभावा ययाऽत्यस्ताश्चेतसो यान्ति दूरम्॥६३॥

एवं स्वान्ते शुद्धसत्त्वानुविद्धे सङ्गं हित्वा मुनयो भक्तियोगात्।
यं पश्यन्तो भवपारं प्रयातास्तं देवानां दैवतं सम्प्रपद्ये॥६४॥

यस्मिन् दृष्टे हृदयग्रन्थिभङ्गः सम्पद्यते सर्गविलोपनाय।
सर्वं द्वैतं संक्षयं याति तूर्णं सद्यो जीवः कर्मबन्धान् धुनोति॥६५॥

मोहिन्या यो मोहयन् दैत्यवर्गान् सुरां देवोऽपाययत् संप्रमत्तान्।
सुधां देवान् भजतोऽध्यापयत्तान् अहं अहं दीनो दैवतं तं प्रपद्ये॥६६॥

जगदवनपरो यः सत्त्वमास्थायशश्वत्
रजस उदतिरेके यो विरिञ्चीति वित्तः।
तमसि समतिरिक्ते संहरन् यो हरेति
प्रभवतु मम भूत्यै सर्वदा सैव देवः॥६७॥

सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति।
सर्वे मखा यत्परा एव शिष्टास्तं वासुदेवं शरणं प्रपद्ये॥६८॥

सर्वे योगा विधयश्चैव सर्वे सर्वं ज्ञानं सुकृतश्चैव सर्वम्।
यदाप्तये विहितं सर्वमेतत् तं वासुदेवं शरणं प्रपद्ये॥६९॥

यो माययेदं प्रविधाय सर्वमन्तः प्रविष्टः परमप्रकाशः।
वह्निर्यथा दारुणि सन्निविष्टस्तं वासुदेवं शरणं प्रपद्ये॥७०॥

योऽसौ देवः प्राकृतो सन्निविष्टो न लिप्यते प्राकृतैर्बाह्यदोषैः।
भुङ्क्ते गुणान् प्राकृतानप्यसङ्गो बुद्ध्या हृदा करणैश्चैव सर्वैः॥७१॥

योऽसावनन्तमूर्तसङ्घे निविष्टो नानेव भाति बहुधा रोचमानः।
दारुष्वन्तः सन्निविष्टो यथाऽग्निस्तं सर्वेषां परमं धाम पद्ये॥७२॥

यः सत्त्वमास्थाय विशुद्धमीशो लोकान् सदा भावयत्यप्रमत्तः।
लीलावतारान् देवतिर्यङ्नरादौ गृह्णन् देवो भजतां शं तनोतु॥७३॥

यो माययेदं महदादि सम्भृतं रूपं महापौरुषमादिकाले।
सर्वस्य लोकस्य सिसृक्षयाऽदात्तं षोडशांशं पुरुषं प्रपद्ये॥७४॥

यस्याम्भोधौ स्वपतो योगनिद्रां शेषे तल्पे तन्वतो नाभिपद्मात्।
ब्रह्मा जातो विश्वसर्गैकहेतुस्तं देवानां दैवतं सम्प्रपद्ये॥७५॥

यद्वै रूपं शुद्धसत्त्वोपपन्नं सहस्रपादोरुभुजाननाद्भुतम्।
सहस्रमूर्धश्रवणाक्षिनासिकं सहस्रमौल्यम्बरकुण्डलोल्लसत्॥७६॥

यद्वै निधानं परमं बीजमाद्यं सर्वेऽवताराः प्रभवन्ति यस्मात्।
यस्यांशांशैः सृज्यते सर्वसर्गस्तं देवानां दैवतं सम्प्रपद्ये॥७७॥

यः कौमारं सर्गमास्थाय देवश्चक्रे यद् दुरापं दुरक्षैः।
प्रजासर्गाद् विमुखो ब्रह्मचर्यं दध्रेऽनन्तं शरणं तं प्रपद्ये॥७८॥

यो यज्ञेशः सौकरं रम्यरूपं विभ्रद्भूमिं दशनेनोज्जहार।
भवाय लोकस्य चराचरस्य तं देवानां दैवतं सम्प्रपद्ये॥७९॥

ऋषिं सर्गं यः समास्थाय देवो देवर्षित्वं प्राप्य दीनोद्धराय।
नैष्कर्म्यार्थं सात्वतां तन्त्रमूचे तं यज्ञेशं शरणं सम्प्रपद्ये॥८०॥

योऽसौ देवो धर्मसर्गे तुरीये चर्षीभूत्वा नरनारायणौ द्वौ।
तपोऽतप्यंश्च तपत्स्वान्तशान्त्यै तं देवेशं शरणं सम्प्रपद्ये॥८१॥

यः सिद्धेशः कपिलो देवहूत्यां जातः सांख्यं कालवेगेन लुप्तम्।
समुद्धरन्नासुरिं प्रत्यवोचत् स मे गुरुर्भविता वासुदेवः॥८२॥

योऽत्रिपुत्रः श्रुतो दत्तनाम्ना वृतो दम्पतिभ्यां तपःपूतचेतोधृतः।
यो ह्यलर्काय कायाधवं प्रत्युवाचात्मविद्यां हरिं संश्रये तं सदा॥८३॥

यो रुचेर्यज्ञ आकूतिकायां पुराऽजायतासौ सुरैर्यामिकाद्यैर्वृतः।
पालयामास राज्यं शुभस्वभावं तं प्रपद्ये हरिं सुन्दरं सादरम्॥८४॥

योऽष्टमे मेरुदेव्यां तु जातः पुरा नाभितो नामतो य उरुक्रामकः।
दर्शयामास धीराध्वगानां सृतिं सर्ववन्दारुवन्द्यां श्रये तं हरिम्॥८५॥

नष्टे वेने मुनिभिर्याचितो यो वेनोरुभ्यां मथिताभ्यां प्रजातः।
विभ्रद्वपुः पार्थिवं गां प्रदुग्धे सर्वौषधीस्तं हरिमाश्रयेऽहम्॥८६॥

सर्वे कामा यस्य रोषाद् विमुक्ताः सर्वे कामाः परकामानुवृत्ताः।
सर्वे कामा भगवत्यर्पितास्तमुशत्तमं वैन्यमहं प्रपद्ये॥८७॥

सत्यव्रतं नृपतिं मत्स्यरूपो जाते घोरे चाक्षुषे सम्प्लवे यः।
नाव्यारोप्यापान्महीरूपिकायां मनुं सौरं शरणं सम्प्रपद्ये॥८८॥

सुरासुराणामुदधिं मथ्नतां यो दध्रे देवः कामठो मन्दराद्रिम्।
जाते नेत्रे वासुकौ वर्तनोत्थैः किणैश्चक्रैर्यस्य पृष्ठं विभाति॥८९॥

सर्वौषधीनां मथ्नात् सम्प्रभूतां सुधां देवान् धयतोऽधापयत्तान्।
मोहिन्या यो मोहयन् दैत्यवर्गान् तं स्त्रिया देवं दैवतानां श्रये तम्॥९०॥

यो नारसिंहं दधदप्रमेयं वपुं दैत्यं करजैर्वक्षसीशः।
कटं कर्त्ता वैरकां संददार तं देवानां दैवतं सम्प्रपद्ये॥९१॥

यो वामनं रूपमाधाय देवः पदत्रयं बलितो याचमानः।
क्रतुं प्रागाद् भुवनान्याहरिष्यन् तं देवेन्द्रावरजं सम्प्रपद्ये॥९२॥

ब्रह्मविद्वेषिणो वीक्ष्य यः पार्थिवान् पितृहत्यां पुरस्कृत्य संदंशितः।
प्राकरोद् राजराजन्यहीनां महीं सप्तकृत्वः त्रिरावृत्तकं तं नुमः॥९३॥

पराशरात् सत्यवत्यां सुजातो दृष्ट्वा नरान् भाविनो मन्दबुद्धीन्।
चक्रे शाखा वेदतरोरनन्ताः वेदव्यासं तमहं सम्प्रपद्ये॥९४॥

यो नरेन्द्रो विधित्सुः सुराणां हितं राघवोऽब्धिं बबन्धाद्भुतं भूधरैः।
तं श्रयेऽहं हरिं सादरं सोदरं यो दशास्यं निहत्याशु चक्रे नृपम्॥९५॥

वृष्णिषु प्राप्य जन्माद्भुतं यो हरी रौहिणेयद्वितीयो दधाराचलम्।
कंसकेशिप्रलम्बादिकञ्चासुरं संजघानाश्रयते तं हरिं सत्त्वरम्॥९६॥

यः कलौ सम्प्रवृत्ते सुरद्वेषिणां सम्प्रमोहाय जातो जिनस्यालये।
वेदवाणीरनिन्ददृदयावेशतो बुद्धनामा श्रये तं हरिं शाश्वतम्॥९७॥

कलेरन्ते योऽश्वमारुह्य कर्कं म्लेच्छान् देवो मूर्च्छयिष्यत्यसाधून्।
असिद्वितीयश्चरिताकल्किरीशो वर्णाश्रमाणां स्थितये संश्रये तम्॥९८॥

संख्या कर्त्तुं शक्यते नैव यत्र यत्रांशांशैर्भगवान् योऽवतीर्णः।
यथा सरसः शतशो यान्ति कुल्यास्तं देवेशं शरणं सम्प्रपद्ये॥९९॥

ऋषयो देवा मनवो मानवाश्च प्रजातपो महदोजो दधानाः।
यस्यैवांशा यत्र कुत्रापि जातास्तं कृष्णाख्यं परमं धाम पद्ये॥१००॥

युगे युगे जन्म गुह्यं श्रयन्तः शक्रारिभिर्व्याकुलं सर्वलोकम्।
मृडयन्तो वाश्र प्रमत्ताश्चरन्ति तानप्रमेयान् शरणं प्रपद्ये॥१०१॥

सायं प्रातः प्रयतो जन्म गुह्यं गायन् भक्त्या पुरुषपापपूरात्।
मोमुच्यमानो मोमुदीत्येव यस्य प्राप्तो देवं शरणं तं शरण्यम्॥१०२॥

यो ह्यरूपश्चिदात्मा परः पुरुषो यत्र मायागुणैः प्राकृतैरात्मनि।
व्योम्नि मेधाबलिर्वा यथा रेणवः पार्थिवाः कल्पिता स्वं श्रये तं हरिम्॥१०३॥

यत्र दृङ्मात्ररूपे समारोपितं दृश्यमेतत्समस्तं नरैः पामरैः।
तं सदानन्दरूपं परं पूरुषं सम्प्रपद्ये हरिं सुन्दरं सादरम्॥१०४॥

व्यक्तोऽव्यक्तो व्यष्टिको वा समष्टिः कायोऽबुद्धैः कल्पितो जीवबुद्ध्या।
जीवो मिथ्याऽदृष्टकोऽसंश्रुतश्च ततः परं पुरुषं सम्प्रपद्ये॥१०५॥

यत्रेमे द्वे माययाऽऽत्मन्यसर्गे कृते बुद्ध्या वारिते दैवयोगात्।
व्यक्ताव्यक्ते तर्हि तद्भासमानं स्वया भासा शरणं धाम पद्ये॥१०६॥

दैवी ह्येषा त्रिगुणा संनिवृत्ता यदा माया ब्रह्मसंदर्शनेन।
तदा जीवो यस्य सारूप्यमेता तत्कृष्णाख्यं परमं धाम पद्ये॥१०७॥

यस्या कर्तुः कर्म संवदेयन्ते यस्या जनस्यापि जन्माद्भुतं तत्।
तं हृत्पतिं पुरुषं वेदवेद्यं सनातनं सर्वदा संश्रयेऽहम्॥१०८॥

यो वा इदं सर्वममोघलीलः सृजत्यवत्त्यत्ति न सज्जतेऽस्मिन्।
गुणेषु मायारचितेष्वात्मतन्त्रो भुङ्क्ते गुणान् सततं षड्गुणेशः॥१०९॥

न यस्य कश्चिन्निपुणोऽपि जन्तुर्गतीरवैतुं कुमनीष ईशः।
नामानि रूपाणि मनोवचोभिः संतन्वतस्तं शरणं गतोऽस्मि॥११०॥

यत्पादपद्मं विबुधा भजन्ते ह्यमायया संततयाऽनुवृत्त्या।
विदन्ति धातुः परमस्य पुंसः पदं पदं तस्य सदाश्रयेऽहम्॥१११॥

यस्मिन् देवेऽखिललोकनाथे सर्वात्मके स्वात्मभावं श्रयन्तः।
न भूय उग्रं परिवर्तं भजन्ते तं वासुदेवं शरणं प्रपद्ये॥११२॥

संसारदावानलदह्यमानो मोघैकदृक् चाप्यशुचिश्रवाश्च।
उरुक्रमस्याऽखिलबन्धमुक्तये विचिन्तये चित्तहरं विचेष्टितम्॥११३॥

ततोऽन्यथा किञ्चन यद्विवक्षतो मतिः स्थितं नैव लभेत शाश्वतीम्।
पृथग् दृशस्तत्कृतरूपनामभिः तमाद्यमीशं पुरुषं प्रपद्ये॥११४॥

प्रवृत्तिरेषा श्रुतिभिर्निदर्शिता स्वभावरक्ताय भवस्य भित्तते।
निवृत्तरागाय निवृत्तिरीरिता तमाप्तवाचं पुरुषं सम्प्रपद्ये॥११५॥

प्रवर्तमानस्य गुणैरनात्मनो न बन्धहेतुः खलु यस्य कर्म।
निवृत्तमार्गोऽप्यभवाय दर्शितो येनात्मना सरतास्तं प्रपद्ये॥११६॥

यच्चेष्टितान्यनुसरन् पुरुषः प्रवृत्त्या बुद्धोऽथवा परमहंसगतिर्निवृत्त्या।
पारं प्रयाति भवसागरसंप्लवस्य तं देवदेवमनिशं शरणं प्रपद्ये॥११७॥

पादाम्बुजं संश्रयन् यस्य भक्त्या त्यक्त्वा स्वधर्मं यदि नैति निर्वृतिम्।
भवान्तरे तस्य भवेदवश्यं भद्रं ततस्तं पुरुषं प्रपद्ये॥११८॥

स्वधर्ममाधाय पदाम्बुजं श्रयन् भक्त्या जनो यस्य लभेत निर्वृतिम्।
स्वधर्ममप्याचरतो न संभवेद् यद्भक्तिवर्जं तमहं श्रये हरिम्॥११९॥

न लभ्यते यत्पदसेवनं विना भ्रमद्भिरुच्चैरथवाऽप्यधोजनै:।
सुनिर्वृतिस्तं पुरुषं पुरातनं हरिं श्रयेऽहं स्मरणीयविक्रमम्॥१२०॥

न यत्पदाम्भोरुहसेवको जन: कदाचिदभ्येति भवाय संसृतिम्।
न च स्मरंस्तच्चरणोपगूहनं विहातुमिच्छत्यरणं तमाश्रये॥१२१॥

इदं हि विश्वं भगवानिवेतरद् यतोऽस्य सर्वे स्थितिरोधसंभवा:।
विभाति सच्चित्सुखविग्रहं हरिं तमाश्रयेऽहं भवभीतिभित्तये॥१२२॥

वदन्ति पुंसस्तपस: श्रुतस्य वा स्विष्टस्य सूक्तस्य च बुद्धिदत्तयो:।
यदुत्तमश्लोकगुणानुवर्णनं फलं श्रये तं पुरुषोत्तमं हरिम्॥१२३॥

प्रगायतो यस्य कथा मनोहरा: प्रजायते यस्य पदे दृढा रति:।
विशृण्वत: श्रद्दधतश्च सादरं तमाश्रयेऽहं पुरुषोत्तमं हरिम्॥१२४॥

यस्मिन् दृढं प्राप्तरुचेर्महात्मन: प्रियश्रवस्य सूवलिता मतिर्भवेत्।
यया जन: पश्यति विश्वमीदृशं स्वमायया ब्रह्मणि कल्पितं परे॥१२५॥

विशृण्वतो यस्य यशोऽमलं सदा प्रगीयमानं यतिभिर्महात्मभि:।
प्रवर्तते स्वात्मरजस्तमोऽपहा विरागभक्तिस्तमुपाश्रये हरिम्॥१२६॥

यत्रानुरक्ता: प्रश्रिताहुतैनसा: संश्रद्दधाना: शिशवोऽपि दान्ता:।
सदा च यत्पादसरोजसेवका लभन्ति बोधं तमुपाश्रये गुरुम्॥१२७॥

यस्य मायानुभावं विदन्तो जना: संलभन्ते परं पावनं तत्पदम्।
तं परेशं परं वेधसं संश्रये वासुदेवं हरिं दैत्यदर्पच्छिदम्॥१२८॥

यत्रेश्वरे ब्रह्मणि कर्म भावितं पुन: प्ररोहाय न जातु जायते।
भवेच्च तापत्रयसंचिकित्सितं तमाश्रयेऽहं पुरुषोत्तमं हरिम्॥१२९॥

कर्माणि सर्वाणि भवस्य हेतवो न तद्विनाशस्तत एव जायते।
श्रुता बुधास्तान्यजनस्य तुष्टये यस्यानुकुर्वन्ति तमाश्रये हरिम्॥१३०॥

कर्माणि यस्मिन् परिकल्पितानि स्वनाशनाय प्रभवन्ति सत्त्वरम्।
विहाय कामान् यतिभिर्मनीषिभिस्तमाश्रयेऽयं पुरुषोत्तमं हरिम्॥१३१॥

विधीयते कर्म नु यस्य तुष्टये यतो हि भक्तिः प्रबला प्रजायते।
उदेति बोधोऽपि विशुद्ध ईश्वरे तमाश्रयेऽहं पुरुषोत्तमं हरिम्॥१३२॥

यत् शिक्षया कर्मविधौ प्रसक्ता गुणान् गृणन्तश्चरितं स्मरन्ति।
भक्त्या च भावेष्वजमीक्षमाणास्तरन्ति शोकं तमुपाश्रये हरिम्॥१३३॥

नमो भगवते तुभ्यं वासुदेवाय धीमहि।
प्रद्युम्नायानिरुद्धाय तुभ्यं भगवते नमः॥१३४॥

इदं मन्त्रं प्रजपन् प्रत्यहं यो यज्ञं देवं यजते रूढभक्त्या।
तस्मै स्वस्मिन् भावमैश्वर्यमग्र्यं बोधं शुद्धं ददते सन्नतोऽस्मि॥१३५॥

यत्पदाम्भोजयुग्मं सदा ध्यायतो भावनिर्बद्धचित्तेन संगम्यतः।
हर्षवाष्पाकुलाक्षस्य विद्योतते यो हृदिस्थं श्रये तं हरिं सादरम्॥१३६॥

यत्परप्रेमनिर्भिन्नरोमोद्‌गमा निर्वता निर्वता संप्लवन्तो जनाः।
नैव पश्यन्ति भावद्वयं भूसुरास्तं प्रपद्ये हरिं सुन्दरं सादरम्॥१३७॥

यन्मनः कान्तरूपं स्मरन्तो बुधाः सर्वशोकाय हं कोकबन्धुप्रभम्।
नैव तृप्यन्ति तर्षातुराः सन्ततं तं प्रपद्ये हरिं सुन्दरं सादरम्॥१३८॥

योऽविपक्वे कषाये न संदृश्यते येन कामाय रूपं स्वकं दर्श्यते।
यस्य कामे प्रजाते हृदः सर्वके यान्ति कामाः क्षयं तं हरिं संश्रये॥१३९॥

सेवया दीर्घया वैष्णवानां सतां यत्र बुद्धिः सदा जायते संदृढा।
प्राप्यते जन्म कल्याणकं नैर्वृतं तं प्रपद्ये हरिं सादरं सुन्दरम्॥१४०॥

यन्निबद्धा मतिः शाश्वती हीयते नैव सर्गस्य रोधेऽपि सम्यग्दृढा।
संस्मरत्येव भावं स्वकं पूर्वकं तं प्रपद्ये हरिं सादरं सुन्दरम्॥१४१॥

यन्महद्भूतमीशं नमो लिङ्गकं यत्सदाऽलिङ्गमप्यस्ति विद्युत्प्रभम्।
तन्महद्भ्यो महीयः स्वयं संस्फुरद् यामि शीर्ष्णाऽवनामं ततं तन्महः॥१४२॥

नामान्यनन्तस्य हतत्रपः पठन् गुह्यानि भद्राणि कृतानि च स्मरन्।
गां पर्यटन् तुष्टमनागतस्पृहः कालं नयेयं विमदो विमत्सरः॥१४३॥

एवं सदा कृष्णमतेरसज्जतो गुणेषु मायारचितेषु सद्धियः।
प्रयात कालः सकलो निमेषवन्मुदा सदाऽऽरब्धफलं बुभुक्षतः॥१४४॥

एवं शिवां भागवतीं तनुं मे प्रयुज्यमानस्य मुदाऽन्वितस्य।
प्रारब्धकर्मक्षयनिर्विपाकः पतत्वयं पञ्चकवृत्तकायः॥१४५॥

यस्य कल्पान्तकाले पयस्याब्धिके योगनिद्रामुपेतस्य संगृह्णतः।
प्राणगत्या विशत्यन्तरं विश्वकं तं प्रपद्ये हरिं सादरं सुन्दरम्॥१४६॥

यो युगानां सहस्रेऽतिवृत्ते विभुर्बुद्ध आदौ जगन्मानसं संसृजन्।
प्राणतोऽन्तर्गतं तद्बहिः कल्पयन् क्रीडति प्राप्तकालं हरिं तं श्रये॥१४७॥

कदा विष्णोर्महतोऽनुग्रहेण चरन् दान्तो बहिरन्तस्त्रिलोकीम्।
अविघ्नयातश्चरितानि गायन् विधूतवेषो मुदितः चरेयम्॥१४८॥

प्रगायतो मे निजवीर्याणि कृष्णः प्रियश्रवास्तीर्थपादः प्रजानन्।
हृद्याहूतो दर्शनं दास्यते द्राक् कदा मुदा प्रेमपरिप्लुतस्य॥१४९॥

कामः क्रोधो लोभ एष तृतीयो दोषैरेतैः सहसा लुप्तबोधः।
यमादिभिर्योगपथैरशान्तो मुकुन्दपादौ शरणं यामि दीनः॥१५०॥

य ईश्वरो हृदये सन्निविष्टः सम्भ्रामयत्यखिलं भूतवर्गम्।
यत्रारूढं मायया मायिकेशस्तं देवानां दैवतं सम्प्रपद्ये॥१५१॥

य ईश्वरो हृदये सन्निविष्टो यतः स्मृतिर्ज्ञानमपोहनञ्च।
वेदैश्च सर्वैः खलु यश्च वेद्यो वेदान्तकृद्वेदविदेव यश्च॥१५२॥

तमस्य लोकस्य चराचरस्य गुरुं गरीयांसमलुप्तबोधम्।
पूज्यं तथा पितरं चास्य वन्दे लोकत्रयेऽप्यप्रतिमप्रभावम्॥१५३॥

नमामि मे ज्ञातय आतुरं सुता न वा स्त्रियो मां परिरक्षितुं क्षमाः।
वार्धक्यपाशेन विधातुरावृतोऽप्यहं तु तं यामि परं परायणम्॥१५४॥

यः कश्चनेशो बलिनोऽन्तकोरगात् प्रचण्डवेगादभिधावतो भृशम्।
भीतं प्रपन्नं परिपाति यद्भयान्मृत्युः प्रधावत्यरणं तमाश्रये॥१५५॥

गायन्तो यस्य कीर्तिं प्रमुदितमनसो मादयन्तश्च विश्वं
ये वीणां वादयन्तः स्वकरनिकरैर्यं समाराधयन्ते।
तेषां पादाब्जधूलीः शिरसि दधदहं पूतकायो हृदि स्वे
स्मारं स्मारं तदीयं चरणयुगमहो गां कदा संचरेयम्॥१५६॥

प्रयाणकाले मनसाऽचलेन भक्त्या युतो योगबलेन चैव।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् प्रयान्ति यं पुरुषं तं प्रपद्ये॥१५७॥

एकाक्षरं ब्रह्म मुदा गृणन्तः सदा स्मरन्तो मनसा मुरारिम्।
प्रयान्ति यं यतयो वीतरागास्तमाश्रयेऽहं पुरुषं पुराणम्॥१५८॥

भक्तियोगेन चेतस्यहो निर्मले संप्रणीते परं धाम यत्साधवः।
संप्रपश्यन्ति मायां ततो यत्परां तं प्रपद्ये हरिं सादरं सुन्दरम्॥१५९॥

सम्मोहितो यकया जीववर्गः संमन्यते स्वं त्रिगुणो न बद्धम्।
परोऽपि सन् मनुतेऽनर्थजालं निसर्गतः स्वात्मनि संप्ररूढम्॥१६०॥

अनर्थजातस्य यथा कृतस्य शुभाय साक्षाद् भगवत्यनन्ते।
यो भक्तियोगं विदधत् पुराणं चक्रे मुनिं तं हरिमानतोऽस्मि॥१६१॥

यस्मिन् भक्तिं मुनयो ग्रन्थिहीना आत्मरामा निर्निमित्तां श्रयन्ते।
गुणैर्लुब्धा यतयोऽसङ्गबन्धास्तं देवानां दैवतं सम्प्रपद्ये॥१६२॥

येन गीतोपदेशः सुगीतः पुरा पाण्डवेयाय धर्माननुपृच्छते।
तं महादेशिकं संसृतेः पारगं पारनेतारमीशं हरिं संश्रये॥१६३॥

यो द्रोणिना ब्रह्मशिरो महान्तं पुरा क्षिप्तं पार्थवधाय भीमम्।
प्रत्यादिशत् पार्थसुतः स्वमत्या तमाश्रयं भजतां सम्प्रपद्ये॥१६४॥

यो भक्तानामभयं स्थानमेको यः संसृतेर्दह्यमानापवर्गः।
योऽप्राकृतः पुरुषो विश्वरूपस्तं विश्वेषामाद्यमीशं प्रपद्ये॥१६५॥

यश्चिच्छक्त्या संवृतिं संव्युदस्य स्थितो देवः केवले स्वस्वरूपे।
जीवान् मायामोहितानुन्निनीषुर्धर्मान् आर्षानादिशत्तं नतोऽस्मि॥१६६॥

श्रीकृष्णकृष्णसखवृष्ण्यृषभावनीध्रुग्राजन्यवंशदहनानपवर्गवीर्य।
गोविन्दगोद्विजसुरार्तिहरावतार भारं भुवो हर यदूत्तम वन्दनं ते॥१६७॥

यो ह्यर्जुनं द्रौणिवधे प्रवृत्तं धनादानं वपनं यापनञ्च।
हत्यां पुरा ब्रह्मणा प्राह धर्म्यां तस्मै गुरूणां गुरवे नतोऽस्मि॥१६८॥

यत्पदाम्भोजधूलीसुपूता सरित् पावयत्यञ्जसा मज्जतो मानवान्।
निर्दिशन्तो हि यन्नामकायाधवो हैहयो वैन्यकः संसृतेः पारगाः॥१६९॥

भारते यो हतान् शोचतो बान्धवान् पाण्डवान् प्रतीकारमाबोधयन्।
कालसञ्चेष्टितं प्राणुदत् सन्ततं शोकमीशं हरिं कृष्णमीड्यं श्रये॥१७०॥

सर्वधर्मान् परित्यज्य भक्त्या तु यं संश्रयन्तो ययुस्तत्पदं निर्भयम्।
मुक्तशोकाः सदा मुक्तपापाः सदा सञ्चरन्त्याश्रये तं हरिं सादरम्॥१७१॥

अजातशत्रोः कितवैर्हृतं यो राज्यं पुरा साधयित्वा स्वबुद्ध्या।
राज्ञः कचस्पर्शहतायुषश्चासतो विनाश्याप्रतिमप्रभावः॥१७२॥

अयाजयद् यस्त्रिभिरश्वमेधैर्यशो वितन्वन् भुवि धर्मजस्य।
तं पाण्डवानां सुहृदश्च सूतं दूतं मुरारिं शरणं गतोऽस्मि॥१७३॥

य उत्तरायाः शरणं गताया गर्भं पुरा द्रौणिबाणेन तप्तम्।
अपालयच्चक्रसुदर्शनेन तं दीनबन्धुं शरणं गतोऽस्मि॥१७४॥

समीरितान् पाण्डवानां वधाय यः पञ्चबाणान् द्रौणिना सुप्रयुक्तान्।
अवारयच्चक्रवरेण रक्षन् स मे यदूनामृषभः प्रसीदतु॥१७५॥

यः सर्वभूतान्तरवस्थितोऽसावात्मा हरिर्योगविदां वरिष्ठः।
स्वमायया संवृते स्म गर्भं वैराटिकायास्तमहं प्रपद्ये॥१७६॥

यस्त्वमोघं तथा निर्निरोधं विभुर्ब्रह्मशीर्षं महास्त्रं पुरा प्रेरितम्।
द्रौणिनाऽवारयद् वैष्णवास्त्रेण तं प्रपद्ये हरिं सादरं सुन्दरम्॥१७७॥

यो मायया विश्वमिदं विचित्रं सृजत्यवत्यत्ति च सङ्गहीनः।
न यस्य देवाः पदवीं विदुस्तं परावरेशं शरणं गतोऽस्मि॥१७८॥

य आद्य ईशः प्रकृतेः परश्च न लक्ष्यरूपः पुरुषः पुराणः।
सर्वेषु भूतेष्वनुप्रविष्ट आत्मा तं देवदेवं शरणं गतोऽस्मि॥१७९॥

यः संवृत्या तमसा संवृतात्मा न लक्ष्यते नटवन्मूढदृष्ट्या।
संलक्ष्यते हंसवरैस्तु भक्त्या तं दीनदीनः शरणं प्रपद्ये॥१८०॥

नमोऽस्तु ते वासुदेवाय नित्यं कृष्णाय ते देवकीनन्दनाय।
नमो नमो नन्दकुमार तुभ्यं नमोऽस्तु गोविन्द विभो प्रसीद॥१८१॥

नमोऽस्तु मे पङ्कजनाभ तुभ्यं नमोऽस्तु मे पङ्कजमालिने ते।
नमोऽस्तु मे पङ्कजनेत्र तुभ्यं नमोऽस्तु ते पङ्कजयद्वराय॥१८२॥

येन कंसेन रुद्धा चिरं देवकी मोचिता कंसमाहत्य कारागृहात्।
येन पार्थैः समं सा पृथा मोचिता वै पदान्तं श्रये मुक्तयेऽहं हरिम्॥१८३॥

यो विश्वात्मा बुभुजे विश्वमूर्तिर्भक्त्या शाकं विदुरस्यैव गेहे।
प्रत्याचख्ये परमं सिद्धमन्नं दुर्योधनस्यास्य विनिन्दकस्य॥१८४॥

यो वल्लभो वल्लवीनां शिशुर्यो नन्दादीनां बान्धवो यो यदूनाम्।
यश्चाधीशो निर्जराणां प्रतीतो नारायणो भजतां देवदेवः॥१८५॥

यो योनिभिर्ब्रह्मबुद्ध्या गृहीतो मल्लैर्मल्लो मल्लभूमौ निविष्टः।
सहाधीती यः सुदाम्नो द्विजस्य तं संश्रये सुहृदं फाल्गुनस्य॥१८६॥

विषान्महाग्नेः पुरुषाददर्शनादसत्सभाया वनवासकृच्छ्रतः।
मृधे मृधेऽनेकमहारथास्त्रतः पार्थाः पुरा द्रौणिशराश्च रक्षिताः॥१८७॥

जन्मैश्वर्यश्रुतिलक्ष्मीमदैर्यं मत्तः पुमान् भजते नैव देवम्।
अकिञ्चनानां परमाश्रयं हरिं तं श्रये शाश्वतमप्रमेयम्॥१८८॥

यद् दर्शनं स्यादपुनर्भवाय यद्दर्शनं स्याद् व्यसनाभवाय।
यद्दर्शनं स्यात् परमोदयाय जगद्गुरुं तं शरणं गतोऽस्मि॥१८९॥

गुणप्रवृत्तेर्विनिवर्तकाय वित्ताय तेऽकिञ्चनानां नमोऽस्तु।
शान्ताय कैवल्यपते नमोऽस्तु आत्मन्यहो रमते ते नमोऽस्तु॥१९०॥

मन्ये त्वहं कालमीशानमीड्यं समं चरं सर्वभूतेषु गूढम्।
अनादिमध्यं विभुमप्रमेयं मिथः कलेर्हेतुभूतं प्रपद्ये॥१९१॥

न वेद कश्चिद् भगवत्प्रियं विना चिकीर्षितं यस्य नृणां विडम्बनम्।
न यस्य कश्चिद् दयितो न चाप्रियो मुधैव यस्मिन् विषमामतिर्नृणाम्॥१९२॥

न विद्यते यस्य च जन्म कर्म वा विश्वात्मनोऽजस्य न कर्त्तुरात्मनः।
यादःसु तिर्यङ्नृषु यद् विडम्बनं तमाश्रयेऽहं पुरुषोत्तमं हरिम्॥१९३॥

यस्मिन् कृतागसि बधानबधानिकेति गोपी बबन्ध दृढदाम मुदा हसन्ती।
जाता दशाश्रुकलिलाञ्जनसम्भ्रमाक्षं वक्त्रं विनीयभयभावनया स्थितस्य॥१९४॥

यस्मात्तु भीरपि बिभेति यदोः प्रियस्य वंशे चयोऽजनि महायशसः।
तं सर्वभक्तवृजिनापहरं हरन्तं बद्धं कटौ वृहदुरसुप्रतोरवेलमानतोऽस्मि॥१९५॥

समस्तलोकस्य भवाय भूतये सुरद्विषाञ्चैव वधाय पूतये।
यं जातमाहुर्वसुदेवदेवकीसुतं तमीशमीशं शरणं गतोऽस्मि॥१९६॥

यश्चोदधौ नावमिवातिभारात् सीदन्तीं गामुद्धरिष्यद्गजेन।
सम्प्रार्थितो यादवे भूरिभाग्ये वंशे जातः शरणं तं प्रपद्ये॥१९७॥

योऽस्मिन् भवे भ्रमतां सज्जनानामविद्यया क्लिश्यमानाशयानाम्।
श्रोतुं स्मर्तुं कर्माणि चक्रे देवानां दैवतं सम्प्रपद्ये॥१९८॥

शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः स्मरन्ति नन्दन्ति च यस्य चेष्टितम्।
दिदृक्षवः पादसरोजमद्भुतं भवप्रवाहोपरमं तमाश्रये॥१९९॥

न मामर्हसि केशव त्वं श्रितं पदाब्जं शरणाभिलाषिणम्।
न यस्य चान्यद् भवतः पदाम्बुजात् परायणं पापमसत्कृतं द्विजैः॥२००॥

नामानि रूपाणि च यद्विवर्ताश्चाब्धौ तरङ्गा इव जातभङ्गाः।
जातानि तिष्ठन्ति च संह्रियन्ते तमाश्रयं जगतां सम्प्रपद्ये॥२०१॥

कृष्णाय ते कृष्णसखाय नित्यं नमो नमो ब्राह्मणानां हिताय।
गवाञ्च तेऽर्घ्यानुचराय नित्यं नमोऽस्तु ते देवकिनन्दनाय॥२०२॥

नमोऽस्तु ते व्यासविशालबुद्धे फुल्लारविन्दायतपत्रनेत्र।
येन त्वया भारततैलपूर्णः प्रज्वालितो ज्ञानमयः प्रदीपः॥२०३॥

नमोऽस्तु ते वासुदेवाय नित्यं नमोऽस्तु सङ्कर्षण नाथ तुभ्यम्।
प्रद्युम्न तुभ्यं सततं नमोऽस्तु नक्तं दिवं नौम्यनिरुद्ध तुभ्यम्॥२०४॥

सर्वे नदा नदिकाश्चैव सर्वा उदन्वन्तो गिरयोऽरण्यकानि।
देशाः सुपक्वौषधिवीरुधश्च यद्वीक्षितैः सन्ति समेधितानि॥२०५॥

विश्वात्मनो विश्वविसर्जकस्य विश्वेशितुर्विश्वमूर्तेरजस्य।
आशापाशैः स्नेहपाशैर्निबद्धः पादद्वन्द्वं शरणं तस्य पद्ये॥२०६॥

अहं याचे मथुरानाथ तुभ्यं मतिर्ममान्यान् परिवर्जयन्ती।
तवाङ्घ्रियुग्मं सततं श्रयन्ती अमन्दमानन्दभरं बिभर्तु॥२०७॥

श्रीकृष्ण कृष्णसख वृष्ण्यृषभावनीध्रुग् राजन्यवंशदहनानपवर्ग्यवीर्य।
गोविन्द गोद्विजसुरार्तिहरावतार योगेश्वराखिलगुरो भगवन्नमस्ते॥२०८॥

यः कालरूपः प्रियमप्रियञ्च करोति जन्तोरनिवार्यवेगः।
लोको हि यद् वशगः कर्मबद्धो घनावलिर्व्राततन्त्रा यथा खे॥२०९॥

न यस्य कश्चित् पुरुषो विधित्सितं विवेद विद्वानपि सर्वशासनम्।
जिज्ञासया यस्य कृतप्रयत्ना मुह्यन्ति सर्वे कवयोऽपि यत्र॥२१०॥

योऽसौ साक्षाद् भगवानादिदेवो नारायणो यः पुरुषः परश्च।
संमोहयन् मायया सर्वलोकं गूढोऽचरद् वृष्णिषु आप्तकामः॥२११॥

यस्यानुभावं भगवान् हि वेद गुह्यातिगुह्यं शिव आत्मभूतः।
स्वयंभुवः कपिलश्चादिविद्वान् तं वासुदेवं शरणं प्रपद्ये॥२१२॥

य: सर्वात्मा समदृक् चाद्वयश्च मतिर्यस्याहंकृतेर्दूरयाता।
मतिवैषम्यं निरवद्यस्य यस्य नास्ते प्रभुं तं शरणं प्रपद्ये।।२१३।।

अन्ते मनो यत्र निवेशयन्तो भक्त्या च यन्नाम समुच्चरन्त:।
व्यक्ताशया: कर्मविकर्ममुक्ता: प्रयान्ति यं यतयस्तं प्रपद्ये।।२१४।।

स देवदेवो भगवान् प्रतीक्षतां कलेवरं यावदिदं दधाम्यहम्।
प्रसन्नहासारुणलोचनोल्लसन्मुखाम्बुजो ध्यानपथश्चतुर्भुज:।।२१५।।

सदा ममाऽऽस्तां मन आदिपूरुषे कृष्णे लसत्पीतपटे चतुर्भुजे।
विमुक्तसंगं पुरत: स्थितं तं प्रपश्यतो यान्तु दिनानि देवम्।।२१६।।

विशुद्धया धारणया हताशुभस्तदीक्षयैवाशु गताखिलव्यथ:।
निवृत्तसर्वेन्द्रियवृत्तिविभ्रम: कदेक्षिताऽहं पुरुषं चतुर्भुजम्।।२१७।।

इति मतिरुपकल्पिता वितृष्णा भगवति सात्वतपुङ्गवे विभूम्नि।
स्वसुखमुपगते क्वचिद् विहर्त्तुं प्रकृतिमुपेयुषि यद्भवप्रवाह:।।२१८।।

त्रिभुवनकमनं तमालवर्णं रविकरगौरवराम्बरं दधाने।
वपुरलककुलावृताननाब्जं विजयसखे रतिरस्तु मेऽनवद्या।।२१९।।

युधि तुरगरजो विधूम्रविष्वक् कचलुलितश्रमवार्यलंकृतास्ये।
निशिशरशतैर्विभिद्यमानत्वचि विलसत् कवचेऽस्तु कृष्ण आत्मा।।२२०।।

सपदि सखिवचो निशम्य मध्ये निजमपरयोर्वलमयो रथं निवेश्य।
स्थितवति परसैकिकायुरक्ष्णा हृतवति पार्थसखे रतिर्ममास्तु।।२२१।।

व्यवहितपृतनामुखं निरीक्ष्य स्वजनवधाद् विमुखस्य दोषबुद्ध्या।
कुमतिमहरदात्मविद्यया यश्चरणरति: परमस्य तस्य मेऽस्तु।।२२२।।

स्वनिगममपहाय भक्तसंघामृतमधिकर्तुमवप्लुतो रथस्थ:।
धृतरथचरणोऽभ्यगाच्चलद्गुर्हरिरिव हन्तुमिभं गतोत्तरीय:।।२२३।।

शितविशिखहतो विशीर्णदंश: क्षतजपरिप्लुत आततायिनं य:।
प्रसभमभिससार तद्वधार्थं स भवतु मे भगवान् गतिर्मुकुन्द:।।२२४।।

विजयरथ कुटुम्ब आत्ततोत्रे धृतहयरश्मिकरे श्रियेक्षणीये।
भगवति रतिरस्तु मे मुमुक्षोर्यमिह निरीक्ष्य हता गताः स्वरूपम्॥२२५॥

ललितगतिविलासवल्गुहासप्रणयनिरीक्षणकल्पितोरुमानः।
कृतमनुकृतवत्य उन्मदान्धाः प्रकृतिमयुः किल यस्य गोपवध्वः॥२२६॥

मुनिगणनृपवर्यसंकुलेन्तःसदसि युधिष्ठिर राजसूय एषाम्।
अर्हणमुपपेद ईक्षणीयो मम हृशिगोचरतामुपैतु कृष्णः॥२२७॥

तमिमहमजं शरीरभाजां हृदि हृदि धिष्ठितमात्मकल्पितानाम्।
प्रतिहृशमिव नैकधाऽर्कमेकं समधिगतोऽस्मि विधूतभेदमोहः॥२२८॥

वंशंकुरोर्वंशदवाग्निनिर्हृतं योऽरुरुहत्प्राग् भवभावनो यः।
न्यवेशयच्चैव निजे तु राज्ये युधिष्ठिरं प्रीतमनाः स मे गतिः॥२२९॥

यदुक्तमालोच्य विकर्मकर्शितः प्रवृत्तविज्ञानविधूतविभ्रमः।
शशास गामिन्द्र इव जिताश्रयो युधिष्ठिरः सोऽस्तु हरिर्गतिर्मम॥२३०॥

यस्य संकीर्त्यमानं यशः साधुभिः सत्समाजे समाकर्ण्य संरोचनम्।
नैव हातुं सहन्ते बुधास्तत्सदः तं प्रपद्ये हरिं सादरं सुन्दरम्॥२३१॥

यद् दर्शनं स्पर्शनं चासनञ्च सहालापः शयनं भोजनञ्च।
वृष्णीन् पाण्डून् प्रापयद् ब्रह्मपारं सारं भवे शरणं तं प्रपद्ये॥२३२॥

यस्य नागाह्वयाद् द्वारकां गच्छतः संप्रणेदुः पुरा पाणवं गोमुखाः।
धुन्धुरी चानकं शंखभेर्यः शुभा वन्दिनस्तुष्टुवुः संजगुर्गाथकाः॥२३३॥

यं सतारुह्य सौधं कुरुणां स्त्रियः प्राकिरन् पुण्पवर्षैस्तथा लाजकैः।
प्रेम संव्रीड़मन्दस्मितेक्षापरान्तं प्रपद्ये परंधाम धामार्थिनाम्॥२३४॥

यस्य मुक्ताभरै भूषितं श्वेतकं छत्रमाधारयद् रत्नदण्डं प्रियः।
फाल्गुनो दर्शयन् लोकविस्मापनं सौहृदं तं प्रपद्ये हरिं सादरम्॥२३५॥

उद्धवः सात्यकिश्चामरे चाद्भुते दध्रतु र्धूतकीटे विधूते शुभे।
कीर्यमाणं परागैर्नृभिः कौसुमैमार्गणैर्मृग्यमाणं हरिं तं श्रये॥२३६॥

अश्रूयन्ताशीर्गिरो सत्या: समीरिता ब्राह्मणै: सुप्रयुक्ता:।
अनुरूपा नानुरूपा: परेशे गोब्राह्मणा: शरणं तं प्रपद्ये।।२३७।।

यो वै किलासीत् पुरुष: पुरातन: पूर्वं गुणेभ्यो ह्यविशेषं परात्मा।
सुप्तिं गतायां संप्लवे सर्वशक्तौ तं दीनदीन: पुरुषं संप्रपद्ये।।२३८।।

य एव भूयो निजवीर्यचोदितां स्वजीवमायां प्रकृतिं विधित्सतीम्।
अनामरूपात्मनि रूपनामनी चिकीर्षमाणोऽनुससार शास्त्रकृत्।।२३९।।

यस्यास्पदं सूरयो मार्गयन्तो जितेन्द्रिया निर्जितवायुवर्गा:।
पश्यन्ति भक्त्या मनसो विशुद्ध्या स मे मन: संपरिमार्ष्टु देव:।।२४०।।

यो वा गुणैर्भक्त्यनुगीतसत्कथो वेदेषु गुह्येषु च गुह्यवादिभि:।
य एक ईशो जगदात्मलीलया सृजत्यवत्यत्ति न तत्र सज्जते।।२४१।।

यदा ह्यधर्मेणं तमोधियो नृपा जीवन्ति तत्रैष हि सत्त्वत: किल।
धत्ते भगं सत्त्यमृतं दयां यशो भवाय रूपाणि दधद् युगे युगे।।२४२।।

अहो अलं श्लाघ्यतमं यदो: कुलमहो अलं पुण्यतमं मधोर्वनम्।
यदेष पुंसामृषभ: श्रिय: पति: स्वजन्मना चङ्क्रमणेन चाञ्चति।।२४३।।

अहो बत स्वर्यशसस्तिरस्करी कुशस्थली पुण्ययशस्करी भुव:।
पश्यन्ति नित्यं यदनुग्रहेषितं स्मितावलोकं स्वपतिं स्मयत्प्रजा:।।२४४।।

नूनं व्रतस्नानहुतादिनेश्वर: समर्चितो ह्यस्य गृहीतपाणिभि:।
पिबन्ति यास्तस्य रदच्छदामृतं व्रजाङ्गना: संमुमुहुर्यदाशया:।।२४५।।

या वीर्यशुक्लेन हृता: स्वयंहरे प्रमथ्य चैद्यप्रमुखान् हि शुष्मिण:।
प्रद्युम्नसाम्बाम्बसुतादयोऽपरा याश्चाहृता भौमवधे सहस्रश:।।२४६।।

एता: परं स्त्रीत्वमपास्तपेशलं निरस्तशौचं बत साध्वकुर्वत।
येषां गृहात् पुष्करलोचन: पतिर्न जात्वपैदाहृतिभिर्हृदि स्पृशन्।।२४७।।

य उच्चकाशे धवलोदरो दरो उरुक्रमस्याधरशोणशोणिमा।
दाध्मायमान: करकञ्जसम्पुटे स मां सदा रक्षतु सर्वतो भयात्।।२४८।।

यः पूर्णकामो निजलाभेन नित्यम् आत्मारामो नन्दयिता गुरुश्च।
पिता सुहृद् बान्धवो निर्निमित्तः तं देवदेवं शरणं प्रपद्ये॥२४९॥

नताः स्म ते नाथ सदाऽङ्घ्रिपङ्कजं विरिञ्चिवैरिञ्च्यसुरेन्द्रवन्दितम्।
परायणं क्षेममिहेच्छतां परं न यत्र कालः प्रभवेत्परः प्रभुः॥२५०॥

भवाय नस्त्वं भवविश्वभावन त्वमेव माताऽथ सुहृत्पतिः पिता।
त्वं सद्गुरुर्नः परमञ्च दैवतम्, यस्यानुवृत्त्या कृतिनो बभूविमम्॥२५१॥

अहो सनाथा भवता स्म यद्वयं त्रैविष्टपानामपि दूरदर्शनम्।
प्रेमस्मितस्निग्धनिरीक्षणाननं पश्येम रूपं हृदि सर्वसौभगम्॥२५२॥

यर्ह्यम्बुजाक्षापसरत्यहो भवान् मनःपथान्नः कुकृतस्य वैभवात्।
तत्राब्दकोटिप्रतिमः क्षणो भवेत् संपश्यतां त्वां विरहव्यथावताम्॥२५३॥

श्रीनिवासः परं यस्य वक्षोवरं यन्मुखं पानपात्रं दृशां दुर्लभम्।
बाःहवो लोकपालाश्रया यत्पदं भक्तचेतःश्रयं संश्रये तं हरिम्॥२५४॥

यः सितेनातपत्रेण संवारितः चामराभ्यामुभाभ्याम्मुहुर्वीजितः।
वर्षितः पुष्पवर्षैर्यदून्मोदयन् मोदमानस्सदा पातु मां केशवः॥२५५॥

य एवं शशीवासविद्युद्गणैः संवृतामब्दमालां मुहुर्वञ्चयन्।
मोदयन् माधवीसक्तमत्तभ्रमद् भ्रामरश्रेणिदीर्घैः कटाक्षैर्मुदा॥२५६॥

उन्नतं राजकं नामयन् प्रेक्षितैः सन्नतञ्चोन्नयन् सस्मितैर्वीक्षितैः।
हर्षयत् सात्वतान्मादयन् यादवान् पातु मां केशवः पातु मां केशवः॥२५७॥

यो नृपाणां क्षितेर्भारभूतात्मनां पातनैर्भीषणैर्वृद्धतेजोजुषाम्।
संविधायाशु वैरं महाभारतं जन्यमाभावयत्तं श्रयेऽहं हरिम्॥२५८॥

उद्दामभावपिशुनामलवल्गुहासव्रीडावलोकनिहतो मदनोऽपि यासाम्।
सम्मुह्य चापमजहात् प्रमदोत्तमास्ता यस्येन्द्रियं विमथितुं कुहकैर्न शेकुः॥२५९॥

यो ह्यसंगोऽप्रि संगीव संदृश्यते, यो ह्यकर्मा सकर्मेव संमन्यते।
यो ह्यमायोऽपि मायीव संदृश्यते तं हरिं संश्रये संसृतेः पारगम्॥२६०॥

मातृगर्भे गतो यं परीक्षित्पुरा, दह्यमानोऽस्त्रतेजोऽग्निना सर्वतः।
भ्रामयन्तं गदां पीतवासाभृतं स्वर्णकेयूरकं स्वर्णमौलिं प्रभुम्।।२६१।।

श्याममङ्गुष्ठमात्रं परं पूरुषं श्रीचतुर्दोषमसृग्दृशं शङ्करम्।
कुण्डले विभ्रतं मण्डले सञ्चरं भ्रामयन्तं गदां पालयन्तं पुरः।।२६२।।

संददर्श स्थितं संनिकर्षे गदाघातवेगेन विध्वस्ततेजोनुदम्।
तं सदा सात्वतां मानसे संश्रितं संश्रयेऽहं हरिं संश्रयेऽहं हरिम्।।२६३।।

गतस्वार्थं देहमिमं विरक्ता मुक्ताशया गतिमज्ञापयन्तः।
स्वकात्परेभ्योऽप्यथवा विषादं लब्ध्वा गृहात्प्रव्रजन्तश्च धीराः।।२६४।।

स्वान्ते कृत्वा यमपरित्यजन्तो वनं गता यतयः पूर्णकामाः।
अकिञ्चनाः फलमूलाम्बुभक्षाः तं देवानां दैवतं संप्रपद्ये।।२६५।।

यस्य सर्वं जगत्तन्त्रगं वर्तते लोकपालाः सपाला बलिं कुर्वते।
योजयत्याशु भूतानि भूतेश्वरो यो वियुक्तानि कुर्वन् सदा वर्तते।।२६६।।

यथा गावो नसि स्यूतास्तु तन्त्या कण्ठे बद्धा दामभिर्दीर्घदीर्घैः।
वहन्ति गन्त्रीमीशितुः स्वार्थसिद्ध्यै पराधीनास्स्तोत्रकैस्ताड्यमानाः।।२६७।।

तथा जीवा नामभिर्बद्धकाया वक्त्रे च वाक्तन्ति सूत्रेण नद्धाः।
यस्यै बलिं प्राभृतं संनयन्ते तं देवदेवं शरणं संप्रपद्ये।।२६८।।

यथा क्रीडोपस्करा क्रीडितुस्ते कान्त्या योगं संवियोगं भजन्ते।
तथा जीवा यस्य लीलानुबद्धा वियुज्यन्ते संयवं प्राप्नुवन्ति।।२६९।।

तमकेमीशं भगवन्तमाद्यमनन्तरं स्वदृशं चान्तरञ्च।
स्वमायया बहुधा भासमानं भूतात्मभूतं शरणं प्रपद्ये।।२७०।।

यमम्बुभक्षा उपशान्तचित्ता निवृत्ततर्षा जितपादबन्धाः।
जितेन्द्रिया निर्जितवायुवर्गाः पश्यन्ति तं शरणं संप्रपद्ये।।२७१।।

यं भावनाध्वस्तरजस्तमोमला विज्ञानमात्मानमहो परेऽमले।
विलापयन्तो विबुधा उपासते तमात्मभूतं शरणं प्रपद्ये।।२७२।।

यं ध्वस्तमायागुणकर्मकाला निरुद्धसर्वेन्द्रियवृत्तिबीजाः।
निवर्तिताशेषफलोपभोगा उपासते तं हरिमानतोऽस्मि॥२७३॥

क्षेमाय लोकस्य भवाय भूतये गोब्राह्मणानां परमङ्गलाय।
यस्यावताराः सुकृतां हिताय तमाद्यमीशं शरणं प्रपद्ये॥२७४॥

यत्पादशुश्रूषणमुख्यकर्मणा सत्यादयो द्व्यष्टसहस्रयोषितः।
निर्जित्य संख्ये त्रिदशांस्तदाशिषो हरन्ति वज्रायुधवल्लभोचिताः॥२७५॥

यद्बाहुदण्डाभ्युदयानुजीविनो यदुप्रवीरा ह्यकुतोभया मुहुः।
विचक्रमुश्चाङ्घ्रिभिराहृतां बलात् सभां सुधर्मां सुरसत्तमोचिताम्॥२७६॥

यत्संश्रयाद् द्रुपदगेहमुपागतानां राज्ञां स्वयंवरमुखे स्मरदुर्मदानाम्।
तेजोहृतं खलु तथाऽभिहतश्च मत्स्यः सज्जीकृतेन धनुषा किल फाल्गुनेन॥२७७॥

यत् संश्रयादधिगतोरुबलः किरीटी दाहाय खाण्डववनं किल वह्नयेऽदात्।
इन्द्रश्च सामरगणं तरसा विजित्य लब्धा सभा मयकृताऽद्भुतशिल्पमाया॥२७८॥

यत्तेजसा नृपशिरोऽङ्घ्रिमहन्मखार्थे भीमः पुरा किल गजायुतसत्त्ववीर्यः।
तेनाहृताः प्रमथनाथमखाय भूपा यन्मोचितास्तदनयन् बलिमध्वरे ते॥२७९॥

यो द्रौपद्याः कबरं दुष्टशीलैर्द्यूते स्पष्टं कितवैः सत्समाजे।
विकीर्य पादे पतिताया रुदन्त्या दृष्ट्वा व्यधात् तत्स्त्रियो मुक्तकेशाः॥२८०॥

पार्थान् जुगोप वनमेत्य दुरन्तकृच्छ्राद् दुर्वाससोऽरिविहितादयुताग्रभुग्यः।
शाकान्नशिष्टमुपयुज्य यतस्त्रिलोकीं तृप्ताममस्त सलिले विनिमग्नसंघः॥२८१॥

यत्तेजसा च भगवान् युधि शूलपाणिर्विस्मापितोऽस्त्रमददात् किल फाल्गुनाय।
यत्तेजसैव स गतो वपुषाऽमुनैव प्राप्तो महेन्द्रभवने महदासनार्धम्॥२८२॥

तत्रैव संविहरतो भुजदण्डयुग्मं गाण्डीवलक्षणमरातिवधाय देवाः।
सेन्द्राः श्रिता यदनुभावितमद्य तस्य पादाब्जगोयुगमहं शरणं श्रयामि॥२८३॥

यद् बान्धवः कुरुबलाब्धिमनन्तपारमेको रथेन ततरे किल पाण्डवेयः।
प्रत्याहृतं बहुधनञ्च विजित्य संख्ये तेजोहृतं मणिमयं द्विषतः शिरःस्थम्॥२८४॥

यो भीष्मकर्णगुरुशल्यचमूष्वदभ्रराजन्यवर्यरथमण्डलमण्डितासु।
अग्रेचर: किल विभू रथयूथपानामायुर्मनांसि च दृशा सह ओज आर्च्छत्।।२८५।।

पार्थं पदाश्रितमहो गुरुभीष्मकर्णद्रौणित्रिगर्तशलसैन्धववाह्लिकाद्यै:।
अस्त्राण्यमोघमहिमानि निरूपितानि नोपस्पृशुर्नृहरिदासमिवासुराणि।।२८६।।

सौत्ये वृत: कुमतिनाऽऽत्मद ईश्वरो यो यत्पादपद्ममभवाय भजन्ति भव्या:।
संश्रान्तवाहमरयो रथिनस्तु पार्थं न प्राहरन् यदनुभावनिरस्तचित्ता:।।२८७।।

तद्वै धनुस्त इषव: स रथो हयास्ते पार्थो रथी नृपतयो यत आमनन्ति।
सर्वं क्षणेन तद्भूदसदेव यस्य कारुण्यकस्य विरहे तमहं नतोऽस्मि।।२८८।।

सारथ्यपारिषदसेवनसख्यदौत्यवीरासनानुगमनस्तवनप्रणामा:।
स्निग्धेषु पाण्डुषु जगत्प्रणतिश्च विष्णोर्भक्तिं सदा विदधते चरणारविन्दे।।२८९।।

ज्ञानं विरक्ति: स्मृतिरार्जवञ्च दयाशौचे सत्यसंतोषकौ च।
क्षान्तिस्त्याग: साम्यतेजोबलानि शौर्यं धैर्यं कौशलं मार्दवञ्च।।२९०।।

शमो दम: प्रश्रय: शीलमोज: श्रुतं तितिक्षोपरतिश्च यस्मिन्।
कान्ति: स्थैर्यं कीर्तिमानप्रगल्भा: सहो भगोऽनन्यतन्त्रत्वमैश्यम्।।२९१।।

गम्भीर भावानहंकारभावौ तप: श्रद्धा न वियुक्ता भवन्ति।।२९२।।

एतैर्गुणैरितरैश्चैव रम्यै: संभासमानं सततं श्रीनिवासम्।
भक्तान् दीनान् वीक्षणैर्हर्षयन्तं प्रेक्षातर्षं जनयन्तं तमीडे।।२९३।।

ब्रह्मादयो बहुतिथं यदपाङ्गमोक्षकामास्तप: समचरन् भगवत्प्रपन्ना:।
सा: श्रीस्ववासमरविन्दवनं विहाय यत्पादसौभगभलं भजतेऽनुरक्ता।।२९४।।

तस्याहमब्जकुलिशाङ्कुशकेतुकेतै: श्रीमत्पदैर्भगवत: समलङ्कृताङ्गीम्।
भूमिं व्रजस्य सततं श्रयमाण आर्त: संमार्गयन् हरिपदान्यनिशं चरेयम्।।२९५।।

भूमेर्भरं प्रसभमासुरवंशजानामक्षौहिणीशतमपानुददात्मतन्त्र:।
धर्मं तथोनपदमात्मनि पौरुषेण संपादयन् यदुषु रम्यमविभ्रदङ्गम्।।२९६।।

को वा सहेत विरहं पुरुषोत्तमस्य प्रेमावलोकरुचिरस्मितवल्गुजल्पैः।
स्थैर्यं समानमहरन्मधुमानिनीनां रोमोद्गमो भुवि यदङ्घ्रिविटङ्कितायाम्।।२९७।।

ब्रह्मावर्ते यन्तु यजन्ति यज्ञैर्यज्ञेश्वरं यज्ञवितानविज्ञाः।
यस्मिन् हरिर्भगवान् इज्यमान इज्यामूर्तिर्यजतां शं तनोति।।२९८।।

कामानमोघान् स्थिरजङ्गमानामन्तर्बहिर्वायुरिवैष आत्मा।
तं देवानां दैवतं ब्राह्मणानां मूर्तं तपः शरणं सम्प्रपद्ये।।२९९।।

द्रौण्यस्त्रतः प्लुष्टगात्रोऽपि गर्भे मृतो न चार्तो यदनुग्रहेण।
परीक्षितो ब्रह्मकोपापसृष्टात् सर्पान्न बिभ्ये किल तक्षकाह्वात्।।३००।।

न संमुमुहोरुभयाच्च मृत्योः प्राणप्रयाणे भगवत्यर्पितात्मा।
सङ्गं हित्वा सर्वतो वर्तमानो गाङ्गे कूले शुकशिष्यो महात्मा।।३०१।।

वैयासकेः प्राप्य समाधियोगं शृण्वन् कथामुत्तमश्लोकबद्धाम्।
जहौ शरीरं नश्वरं यत्पदाब्जे स्मरन् धीरः शरणं तं प्रपद्ये।।३०२।।

नोत्तमश्लोकवार्तानां जुषतां तत्पदाम्बुजम्।
स्यात्संभ्रमोऽन्तकालेऽपि स्मरतां तत्पदाम्बुजम्।।३०३।।

भीष्मद्रोणतटा जयद्रथजला गान्धारनीलोत्पला,
शल्यग्राहवती कृपेण गहना कर्णेन वेलाकुला।

अश्वत्थामविकर्णघोरमकरा दुर्योधनावर्तिनी।
सोत्तीर्णा खलु पाण्डवै रणनदी कैवर्तकः केशवः।।३०४।।

नानुद्वेष्यः कलिर्भक्तैः सारङ्गैः सारभोजिभिः।
कुशलान्याशु सिध्यन्ति नेतराणि कृतानि यत्।।३०५।।

को नाम तृप्येद् रसवित्कथायां महत्तमैकान्तपरायणस्य।
नान्तं गुणानामगुणस्य जग्मुर्योगेश्वरा ये भवपाद्ममुख्याः।।३०६।।

कुतः पुनर्गुणतो नाम तस्य महत्तमैकान्तपरायणस्य।
योऽनन्तशक्तिर्भगवाननन्तो महागुणत्वाद्यमनन्तमाहुः।।३०७।।

एतावताऽलं ननु सूचितेन गुणैरसाम्यानतिशायनस्य।
हित्वेतरान् प्रार्थयतो विभूतिर्यस्याङ्घ्रिरेणुं जुषतेऽनभीप्सो:॥३०८॥

अथापि यत्पादनखावसृष्टं जगद्विरिञ्चोपहृतार्हणाम्भ:।
सेशं पुनात्यन्यतमो मुकुन्दात् को नाम लोके भगवत्पदार्थ:॥३०९॥

यत्रानुरक्ता: सहसैव धीरा व्यपोह्य देहादिषु सङ्गमोऽहम्।
व्रजन्ति तत्पारमहंस्यमन्त्यं यस्मिन्नहिंसोपशम: स्वधर्म:॥३१०॥

अहं हि भीत: कृतकर्मभि: स्वै: संस्तौमि आत्माऽवगमोऽत्र यावान्।
नभ: पतन्त्यात्मसमं पतत्त्रिण: तथा समं विष्णुगतिं विपश्चित:॥३११॥

रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तम:स्पृशे।
अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नम:॥३१२॥

यावन्निरञ्जनमजं पुरुषं जरन्तं संचिन्तयामि निखिले जगति स्फुरन्तम्।
तावद् बलात् स्फुरति हन्त हृदन्तरे मे गोपस्य कोऽपि शिशुरञ्जनपुञ्जमञ्जु:॥३१३॥

क्षीरसारमपहृत्य शङ्कया स्वीकृतं यदि पलायनं त्वया।
मानसे मम नितान्ततामसे नन्दनन्दन कुतो न लीयसे॥३१४॥

वंशीविभूषितकरान्नवनीरदाभात् पीताम्बरादरुणबिम्बफलाधरोष्ठात्।
पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रात् कृष्णात्परं किमपि तत्त्वमहं न जाने॥३१५॥

यं योगिनो द्वीपिकृतौ निषण्णा: शान्ता निरुद्धेन्द्रियवृत्तिभेदा:।
प्राणं मनोबुद्धिमसारयन्त उपारता मीलितदृग्विभागा:॥३१६॥

स्थानत्रयादपरं पारमाप्ता: अविक्रिया ब्रह्मभूता निरीहा:।
जटाकीर्णा रौरवं संवसाना उपासते तं हरिमाश्रयेऽहम्॥३१७॥

यत्सेवका विप्रलब्धा दुरीहै: तिरस्कृता वाक्शरैर्वाऽपि तष्टा:।
शप्ता हता विक्रियां नाश्रयन्ते तं देवानां दैवतं सम्प्रपद्ये॥३१८॥

यस्योल्लसच्छ्रीतुलसीविमिश्रपादाब्जरेण्वभ्यधिकाम्बुनेत्री।
पुनाति लोकानुभयत्र सेशान् कस्तं न सेवेत मरिष्यमाणः।।३१९।।

यदङ्घ्र्यनुध्यानपरा मुनिव्रता ह्यनन्यभावाः परिमुक्तसंगाः।
प्रायेण तीर्थापगमापदेशैः स्वयं हि तीर्थानि पुनन्ति सन्तः।।३२०।।

अत्रिर्वशिष्ठश्च्यवनः शरद्वान् अरिष्टनेमिर्भृगुरङ्गिराश्च।
पराशरो गाधिसुतोऽथ राम उतथ्य इन्द्रप्रमदेध्मवाहौ।।३२१।।

मेधातिथिर्देवल आर्ष्टिषेणो भरद्वाजो गौतमः पिप्पलादः।
मैत्रेय और्वः कवषः कुम्भयोनिर्द्वैपायनो भगवान्नारदश्च।।३२२।।

अन्ये च देवर्षिविप्रर्षिवर्या राजर्षिवर्या अरुणादयश्च।
नानार्षेयप्रवराः समेता यशो गृणन्तः पदमापुरिष्टम्।।३२३।।

तं देवानां दैवतं ब्राह्मणानां मूर्तं तपो भक्तिभाजां बुधानाम्।
भवाटवीभ्रमणश्रान्तखिन्नो देवं श्रये सर्वदुःखापवर्गम्।।३२४।।

ममाशु भूयाद् भगवत्यनन्ते रतिः प्रसङ्गश्च तदाश्रयेषु।
महत्सु यां यामुपयामि योनिं मैत्र्यस्तु सर्वत्र नमो द्विजेभ्यः।।३२५।।

यः सर्वात्मा भगवानादिदेवो हरिः परेशः कीर्तितव्योऽनुगीतः।
श्रोतव्यो यश्चेच्छतां मुक्तिमग्र्यां स्मर्तव्यं तं पुरुषं संप्रपद्ये।।३२६।।

यावज्जीवं सांख्ययोगानुयाताः स्वं स्वं धर्मं श्रद्धया संश्रयन्तः।
अन्ते परं पुरुषं यं स्मरन्तो विमुच्यन्ते पुरुषं तं नतोऽस्मि।।३२७।।

विधेर्निषेधाद् विनिवृत्तचित्ता नैर्गुण्यमास्थाय सदा रमन्तः।
गुणाननन्तान् परिकीर्तयन्तो हृष्यन्ति तं पुरुषं संप्रपद्ये।।३२८।।

यमन्तकाले पुरुषाः स्मरन्तो देहे च गेहे च निवृत्ततर्षाः।
असंगता बान्धवैश्चेतरैश्च समागतं मृत्युभयं त्यजन्तः।।३२९।।

गेहाद् व्रजन्तः सहसैव धीराः पुण्येषु तीर्थेषु समाप्लवन्तः।
शुचौ देशे संनिविष्टाश्च रम्ये अभ्यस्यन्तो मनसा ब्रह्मवर्णम्।।३३०।।

जितश्वासा ब्रह्मबीजं स्मरन्तः सर्वानक्षान् विषयान् वारयन्तः।
मनः चेष्टावासनाभिर्विधावद् यस्यैकाङ्के धारयन्तोऽतितर्षाः॥३३१॥

तदप्यङ्कं सहसा विस्मरन्तो मनोवृत्तीस्तरसा रोधयन्तः।
यस्यास्पदं परमं तद्विशन्तो मोदन्ते तं शरणं यामि दीनः॥३३२॥

पातालमेतस्य हि पादमूलं पठन्ति पार्ष्णिप्रपदे रसातलम्।
महातलं विश्वसृजोऽथ गुल्फौ तलातलं वै पुरुषस्य जङ्घे॥३३३॥

द्वे जानुनी सुतलं विश्वमूर्तेरुरुद्वयं वितलं चातलञ्च।
महीतलं तज्जघनं महत्स्थितं नभस्तलं नाभिसरो गृणन्ति॥३३४॥

उरःस्थलं ज्योतिरनीकमस्य ग्रीवामहर्वदनं वै जनोऽस्य।
तपो रराटीं विदुरादिपुंसः सत्यं तु शीर्षाणि सहस्रशीर्ष्णः॥३३५॥

इन्द्रादयो बाहव आहुरुस्राः कर्णौ दिशः श्रोत्रममुष्य शब्दः।
नासत्यदस्रौ परमस्य नासे घ्राणोऽस्य गन्धो मुखमग्निरिद्धः॥३३६॥

द्यौरक्षिणी चक्षुरभूत् पतङ्गः पक्ष्माणि विष्णोरहनी उभे च।
तद्भ्रूविजृम्भः परमेष्ठिधिष्ण्यमापोऽस्य तालू रस एव जिह्वा॥३३७॥

छन्दांस्यनन्तस्य शिरो गृणन्ति दंष्ट्रा यमः स्नेहकला द्विजानि।
हासो जनोन्मादकरी च माया दुरन्तसर्गो यदपाङ्गमोक्षः॥३३८॥

व्रीडोत्तरोष्ठोऽधर एव लोभो धर्मः स्तनोऽधर्मपथोऽस्य पृष्ठः।
कस्तस्य मेढ्रं वृषणौ च मित्रौ, कुक्षिः समुद्रा गिरयोऽस्थिसंघाः॥३३९॥

नद्योऽस्य नाड्योऽथ तनूरुहाणि महीरुहा विश्वतनोः स्मृतानि।
अनन्तवीर्यः श्वसितं मातरिश्वा गतिर्वयः कर्मगुणप्रवाहः॥३४०॥

ईशस्य केशान् विदुरम्बुवाहान् वासस्तु संध्यां कुरुवर्यभूम्नः।
अव्यक्तमाहुर्हृदयं मनश्च स चन्द्रमाः सर्वविकारकोशः॥३४१॥

विज्ञानशक्तिं महिमामनन्ति सर्वात्मनोऽन्तःकरणं गिरित्रम्।
अश्वाश्वतर्युष्ट्रगजा नखानि सर्वे मृगाः पशवः श्रोणिदेशे॥३४२॥

वयांसि तद्व्याहरणं विचित्रं मनुर्मनीषा मनुजो निवासः।
गन्धर्वविद्याधरचारणाप्सरः स्वरान् स्मृतीरस्य समामनन्ति।।३४३।।

सुरारिसैन्यं बलमस्य चाहुः ब्रह्म ननं क्षत्रभुजो महात्मा।
विडूरुरङ्घ्रिश्रितकृष्णवर्णः, न नाभिधामीज्यगणोपपन्नः।।३४४।।

द्रव्यात्मकः कर्मवितानयोगः, इयानसावीश्वरविग्रहस्य।
यः संनिवेशः कथितः पुराणे तं धारयेऽस्मिन् वपुषि स्थविष्ठे।।३४५।।

नातः परं किञ्चिदपीह लोके यद्गृह्यते विविधैरक्षजातैः।
तं सत्यमानन्दनिधिं भजेऽहं नान्यत्र सज्जे यत आत्मपातः।।३४६।।

अहं स्वदेहे हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम्।
चतुर्भुजं कञ्जरथाङ्गशङ्खगदाधरं धारणया स्मरामि।।३४७।।

प्रसन्नवक्त्रं नलिनायतेक्षणं कदम्बकिञ्जल्कपिशङ्गवाससम्।
लसन्महारत्नहिरण्मयाङ्गदं स्फुरन्महारत्नकिरीटकुण्डलम्।।३४८।।

उन्निद्रहृत्पङ्कजकर्णिकालये योगेश्वरस्थापितपादपल्लवम्।
श्रीलक्ष्मणं कौस्तुभरत्नकन्धरमम्लानलक्ष्म्या वनमालया चितम्।।३४९।।

विभूषितं मेखलयाऽङ्गुलीयकैर्महाधनैर्नूपुरकङ्कणादिभिः।
स्निग्धामलाकुञ्चितनीलकुन्तलैर्विरोचमानाननहासपेशलम्।।३५०।।

अदीनलीलाहसितेक्षणोल्लसद्भ्रूभङ्गसंसूचितभूर्यनुग्रहम्।
इक्षेमीक्षामयमेनमीश्वरं यावन्मनो धारणयाऽवतिष्ठते।।३५१।।

एकैकशोऽङ्गानि धियाऽनुभावये पादादियावद् हसितं गदाभृतः।
जितं जितं स्थानमपोह्य धारये परं परं शुध्यति धीर्यथा यथा।।३५२।।

यावन्न जायेत परावरेऽस्मिन् विश्वेश्वरे द्रष्टरि भक्तियोगः।
तावत् स्थवीयः पुरुषस्य रूपं क्रियावसाने प्रयतः स्मरामि।।३५३।।

सस्मिताननसरोजमङ्गणे रिङ्गमाणमतिलोलकुन्तलम्।
रोचनोल्लसितभालमस्तु मे केशवं मनसि शैशवं वपुः।।३५४।।

नेदं नभोमण्डलमम्बुराशिर्नेमाश्च तारा नवफेनभङ्गाः।
नायं शशी कुण्डलितः फणीन्द्रो नायं कलङ्कः शयितो मुरारिः॥३५५॥

रे चित्त चिन्तय चिरं चरणौ मुरारेः पारं गमिष्यसि ततो भवसागरस्य।
पुत्राः कलत्रमितरे नहि ते सहाया व्यर्थं विलोकय सखे मृगतृष्णिकाभम्॥३५६॥

नैवात्मजा न गृहिणी न च बन्धुवर्गो नैवेतरे सहचराः सह यान्ति जन्तोः।
संसारमुल्वणमसारमवाप्य बुद्धं सारोऽयमीश्वरपदाम्बुरुहस्य सेवा॥३५७॥

न यत्र शोको न जरा न मृत्युर्नार्तिर्न चोद्वेग ऋते कुतश्चित्।
यच्चित्ततोदं कृपयाऽनिदं विदां दुरन्तदुःखप्रभवानुदर्शनात्॥३५८॥

तद्धामकामः शरणं प्रपद्ये योगीश्वरान्तःकृतपादपद्मम्।
मुकुन्दमीशानमनन्तमाद्यं स्वदासदुःखार्तिमधिक्षिपन्तम्॥३५९॥

अधःसरसिजद्वयं तदुपरि च नालद्वयं
तदुपरि च दीर्घिका तदुपरि कपाटं बृहत्।
तदुपरि च कम्बुकः तदभितोऽर्गलो व्यायते
तदुपरि विराजते नलिनमेचकश्चन्द्रमाः॥३६०॥

तदुपरि घनावलीं वककुलाकुलां
पश्यतस्तडिद्गणगुणैर्मुहुर्मनसि मोदमाविभ्रतः।
प्रयान्तु दिवसाः सदा मम मुदा हृदा हृष्यतो
विधेर्विलसितागतं सकृदथाशनं कुर्वतः॥३६१॥

यः सर्वात्मा सर्वभावेषु गूढो द्रष्टा दृश्यैर्दृश्यते बुद्धिभेदैः।
स श्रोतव्यः कीर्तितव्यश्च नित्यं स्मर्तव्योऽसौ भगवान् वासुदेवः॥३६२॥

पिबन्ति ये भगवत आत्मनः सता[१] कथामृतं श्रवणपुटेषु संभृतम्।
पुनन्ति ते विषयविदूषिताशयं व्रजन्ति तच्चरणसरोरुहान्तिकम्॥३६३॥

---

१. सता संभृतमिति योजना।

योऽकामा मोक्षकामा उदाराः सर्वान् कामान् प्रार्थयन्तोऽथवा ये।
ते भक्तियोगेन परेण पुंसां परं पुमांसं यं यजन्तस्तु सिद्धाः॥३६४॥

ज्ञानं यदा प्रतिनिवृत्तगुणोर्मिचक्रमात्मप्रसाद उत यत्र गुणेष्वसङ्गः।
कैवल्यसंमत पथस्त्वथ भक्तियोगः कस्तत् कथासु पुरुषोऽनुरतिं न कुर्यात्॥३६५॥

राजा महाभागवतः पाण्डवेयः परीक्षितोऽसौ बाललीलां वितन्वन्।
यस्य क्रीडा विदधे स्वानुरूपास्तं देवानां दैवतं संप्रपद्ये॥३६६॥

वैयासकिर्भगवान् यस्य लीला गुणोदारा विविधाः संप्रगायन्।
परीक्षितं तक्षकभीतमावत् तं देवानां दैवतं सम्प्रपद्ये॥३६७॥

आयुः पुंसां हरते देवचक्षुः प्रोद्यन्नस्तं यत्त्वसौ तिग्मरश्मिः।
ततो भीता उत्तमश्लोकवार्ता वितन्वतः सुहृदः संनतोऽस्मि॥३६८॥

ये जीवन्तो हरिवार्ताविहीनास्ते मे बुद्धौ तरवः सन्ति दीनाः।
भस्त्रा अहं तान् श्वसतोऽपि मन्ये श्रोत्रे न येषां शृणुतोऽजधर्मान्॥३६९॥

खादन्ति मेहन्ति हदन्ति नित्यं न चोत्तमश्लोककथानुरक्ताः।
तान् मन्दकान् पौरपशूँस्तु मन्ये यदूत्तमे ये मनसा न सक्ताः॥३७०॥

श्वविड्वराहोष्ट्रखरैः समस्तान् पशूँस्तु मन्ये पुरुषान् प्रमत्तान्।
गदाग्रजः कर्णपथं प्रयातो न जातु येषां सदसि प्रगीतः॥३७१॥

बिले वतोरुक्रमविक्रमान् ये न शृण्वतः कर्णपुटे नरस्य।
जिह्वा सती दार्दुरिकीव वित्ता न चोपगायत्युरुगायगाथाः॥३७२॥

भारः परं पट्टकिरीटजुष्टमप्युत्तमाङ्गं न नमेन्मुकुन्दम्।
शावौ करौ नो कुरुतः सपर्यां हरेर्लसत्काञ्चनकङ्कणौ वा॥३७३॥

बर्हायिते ते नयने नराणां लिङ्गानि विष्णोर्न हि पश्यतो ये।
पादौ नृणां तौ द्रुमजन्मभाजौ क्षेत्राणि नानुव्रजतो हरेर्यौ॥३७४॥

जीवञ्छरो भागवताङ्घ्रिरेणुं न जातु मर्त्योऽभिलभेत यस्तु।
श्रीविष्णुपद्या मनुजस्तुलस्याः श्वसञ्छवो यस्तु न वेद गन्धम्॥३७५॥

तदश्मसारं हृदयं बतेदं यद् गृह्यमाणैर्हरिनामधेयैः।
न विक्रियेताथ यदा विकारो नेत्रे जलं गात्ररुहेषु हर्षः॥३७६॥

यस्मिन् सतीं मतिमुत्तरासुतः प्रधार्य देहे सुतदारगेहे।
पशौ धने बन्धुषु नित्यरूढं जहौ स्नेहं शरणं तं प्रपद्ये॥३७७॥

नमः परस्मै पुरुषाय भूयसे सदुद्भवस्थाननिरोधलीलया।
गृहीतशक्तित्रितयाय देहिनामन्तर्भवायानुपलक्ष्यवर्त्मने॥३७८॥

भूयो नमः सद्वृजिनच्छिदेऽसतामसंभवायाखिलसत्त्वमूर्तये।
पुंसां पुनः पारमहंस्य आश्रमे व्यवस्थितानामनुमृग्यदाशुषे॥३७९॥

नमो नमस्तेऽस्त्वृषभाय सात्वतां विदूरकाष्ठाय मुहुः कुयोगिनाम्।
निरस्तसाम्यातिशयेन राधसा स्वधामनि ब्रह्मणि रंस्यते नमः॥३८०॥

यत्कीर्तनं यत्यस्मरणञ्च वन्दनं यदर्हणं यच्छ्रवणञ्च दर्शनम्।
लोकस्य सद्यो विधुनोति कल्मषं तस्मै सुभद्रश्रवसे नमो नमः॥३८१॥

विचक्षणा यच्चरणोपसादनात्सङ्गं व्युदस्योभयतोऽन्तरात्मनः।
विदन्ति हि ब्रह्मगतिं गतक्लमास्तस्मै सुभद्रश्रवसे नमो नमः॥३८२॥

तपस्विनो दानपरा यशस्विनो मनस्विनो मन्त्रविदः सुमङ्गलाः।
क्षेमं न विन्दन्ति विना यदर्पणं तस्मै सुभद्रश्रवसे नमो नमः॥३८३॥

किरातहूणान्ध्रपुलिन्दपुल्कसा आभीरकङ्का यवनाः खसादयः।
येऽन्ये च पापा यदुपाश्रयाश्रयाः शुध्यन्ति तस्मै प्रभविष्णवे नमः॥३८४॥

स एष आत्माऽऽत्मवतामधीश्वरस्त्रयीमयो धर्ममयस्तपोमयः।
गतव्यलीकैरजशङ्करादिभिर्वितर्क्यलिङ्गो भगवान् प्रसीदतात्॥३८५॥

श्रियःपतिर्यज्ञपतिः प्रजापतिर्धियां पतिर्लोकपतिर्धरापतिः।
पतिर्गतिश्चान्धकवृष्णिसात्वतां प्रसीदतां मे भगवान् सतां पतिः॥३८६॥

यदङ्घ्र्यनुध्यानसमाधिधौतया धियाऽनुपश्यन्ति हि तत्त्वमात्मनः।
वदन्ति चैतत्कवयो यथारुचं स मे मुकुन्दो भगवान् प्रसीदतात्॥३८७॥

प्रचोदिता येन पुरा सरस्वती वितन्वताऽजस्य सतीं स्मृतिं हृदि।
स्वलक्षणा प्रादुरभूत् किलास्यतः स मे ऋषीणामृषभः प्रसीदतु॥३८८॥

भूतैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते यदमूषु पुरुषः।
भुङ्क्ते गुणान् षोडश षोडशात्मकः सोऽलंकृषीष्ट भगवान् वचांसि मे॥३८९॥

तस्मै नमो भगवतेऽमिततेजसे मे द्वैपायनाय ससुताय महामहिम्ने।
यद्वक्त्रसरसमधुस्त्रुतिपानमत्ता मोमुद्यमानमनसो हरिमाप्नुवन्ति॥३९०॥

य आत्मनीदं निजमाययाऽर्पितं भूतव्रजं भावयतेऽविकारः।
स्वयं न तैर्यः परिभूतिमाप्तः तं मे सदा ध्यायतु धीर्मुकुन्दम्॥३९१॥

न यत्परं नापरमस्ति किञ्चित् कुतः समं सगुणं निर्गुणस्य।
यः सर्गकामः तप उग्रं व्यधत्त पराशङ्कां जनयन् देव एकः॥३९२॥

यः सर्वज्ञः सर्ववित् सर्वकायः सर्वस्याऽऽत्मा विश्रुतः सर्वनाथः।
तं देवानां दैवतं दीनबन्धुं दयासिन्धुं शरणं संप्रपद्ये॥३९३॥

येन विश्वं स्वरोचिभिरारोचितं रोचयन्त्यग्निभास्वद् ग्रहास्तारकाः।
वासुदेवाय तस्मै नमस्कुर्महे देवदेवाय देवाधिपायात्मने॥३९४॥

यस्मादन्ये द्रव्यकर्मस्वभावाः कालो जीवो नैव चार्थोऽस्ति किञ्चित्।
तं वासुदेवं परमं ब्रह्मशुद्धं धियो धिष्ण्यं धामधाम प्रपद्ये॥३९५॥

सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति।
सर्वे देवा यस्य कायात्प्रसूताः सर्वान् लोकान् यत्परान् संगिरन्ते॥३९६॥

सर्वे मखा यत्पराः शास्त्रदृष्टाः सर्वो योगो यत्परो गीत आर्यैः।
सर्वं ज्ञानं यत्र देवे समाप्तं तद् गन्तव्यं परमं धाम पद्ये॥३९७॥

यस्य कूटस्थितस्याखिलात्मप्रभोर्द्रष्टुरीक्षावशाद् विश्वसर्गे विधिः।
संप्रवृत्तः सृजत्येव न श्राम्यति श्रान्तचित्तो भवभ्रान्तितस्तं श्रये॥३९८॥

सत्त्वं रजस्तम इति प्रथिता गुणा ये सर्गस्थितिप्रलयहेतव उग्रगीर्याः।
तान् मायया परिगृहीतवतः परस्य पुंसः स्मरामि चरणौ भवभङ्गहेतोः॥३९९॥

यं नित्ययुक्तं पुरुषं गुणास्ते द्रव्यक्रियाज्ञानमुपाश्रयन्तः।
विश्वस्य कर्तृत्वमुपादधाना बध्नन्ति तं मायिनं संप्रपद्ये॥४००॥

मुखं ब्रह्म क्षत्रमाहुश्च दोषा उरुद्वयं यस्य वैश्यान् वदन्ति।
पद्भ्यां शूद्रो यस्य जातः पुराऽसौ देवो बुद्ध्या शुभया संयुनक्तु॥४०१॥

भूर्लोकोऽयं कल्पितो यस्य पद्भ्यां भुवर्लोकः कल्पितो नाभिदेशात्।
स्वर्लोकं यद् हृदयं संस्मरन्ति महर्लोको वक्षसि यस्य वित्तः॥४०२॥

यद् ग्रीवायां जनलोकः प्रसिद्धः स्तनद्वयाल्लोकमाहुस्तपश्च।
यन्मूर्धभिः सत्यलोकस्य चर्चा सनातनं ब्रह्मलोकं यमाहुः॥४०३॥

यत्कट्यां चाततं क्लृप्तमार्यै उरुभ्यां वितलं यस्य चाहुः।
जानुभ्यां सुतलं शुद्धमुक्तं तलातलं यस्य जङ्घे वदन्ति॥४०४॥

गुल्फद्वयं यस्य महातलन्तु रसातलं प्रपदे आमनन्ति।
पादद्वयाधस्तलतः प्रसूतं पातालमाहुः किल यस्य विज्ञाः॥४०५॥

क्षोणीलोकं यस्य पादौ गिरन्ते भुवर्लोकं नाभितः कल्पितन्तु।
मूर्ध्ना स्वर्गः कल्पितो यस्य विज्ञैः तं सर्वलोकात्मकमीशमीडे॥४०६॥

वाचां वह्नेः प्रभवो यस्य वक्त्रं छन्दांसि यद्धातुतः सम्भवन्ति।
हव्यं कव्यं चामृतं यस्य जिह्वा सर्वे रसाः पुरुषं तं प्रपद्ये॥४०७॥

सर्वे प्राणा वायवश्चैव सर्वे नासारन्ध्रे संचरन्तोऽनुयान्ति।
यस्य घ्राणो दस्रयोरोषधीनां स्थानं मोदो वर्तते च प्रमोदः॥४०८॥

रूपं तेजः सकलं यस्य चक्षुः दिवो रवेश्चाक्षिणी स्थानमाहुः।
तीर्थान्याशाः श्रवसी यस्य वित्ते श्रोत्रं नभः शब्दयोः संश्रयञ्च॥४०९॥

वस्तुसाराणि यद् गात्रमाहुर्बुधा भाजनं सौभगस्य स्मृतं सर्वदा।
यत्त्वचः स्पर्शवायू विवर्तान् बुधाः सर्वमेधान् वदन्तः परं विस्मिताः॥४१०॥

या उद्भिज्जा जातयो यज्ञमूलं ता रोमाणि प्रथितान्यस्य वेदे।
शिलालोहं वैद्युतं चाभ्रसंघः केशश्मश्रु प्रणखान्यस्य चाहुः॥४११॥

यस्य दोषः सदा लोकपालाश्रयाः विक्रमो भूर्भुवः स्वश्च सन्त्याहताः।
यस्य पादद्वयं क्षेमरक्षाश्रयं सर्वकामास्पदं तं भजे पूरुषम्॥४१२॥

यस्य शिश्नः सदाऽपां प्रजापाश्रयः[1] सर्गवीर्याब्दकानां तथा संश्रयः।
यस्य तिष्ठन्नुपस्थः प्रजातेः सदा निर्वृतेः कारणं नन्दनः सम्मतः॥४१३॥

यस्य पायुर्यमस्याश्रयः कीर्तितः मित्रमोक्षौ सदा पायुके तिष्ठतः।
निर्ऋतेर्नारकस्याश्रयो यद् गुदो यत्र हिंसा सदा मृत्युदेवः परः॥४१४॥

पृष्ठं सदा निकृतेः स्थानमाहुः सदाऽधर्मो वर्तते यस्य पश्चात्।
तमश्च घोरं पश्चिमे यस्य काये तं देवानां दैवतं संप्रपद्ये॥४१५॥

नदा नद्यो यस्य नाडीप्रसूताः अस्थ्नां संघाद् गिरयो यस्य जाताः।
यस्योदरं प्रकृतेः षड्रसानां तथाब्दीनां निधनस्यास्पदञ्च[3]॥४१६॥

हृदयं पुंसो मनसः स्थानमाहुः कुमारधर्मेश्वर नारदानाम्।
अजञ्च यत्प्रभवं प्राहुरार्याः तमीशमीड्यं पुरुषं संप्रपद्ये॥४१७॥

विज्ञानसत्त्वे आत्मभूते परस्य भवो विधिर्नारदाद्याः सुताश्च।
सुरासुरा नरनागाः खगाश्च, सरीसृपा मृगजातेर्विशेषाः॥४१८॥

रक्षोयक्षा भूतगणोरगाश्च गन्धर्वा अप्सरसः पितृसिद्धाः।
विद्याधराः पशवश्चारणाश्च द्रुमा अन्ये विविधा जीवजाताः॥४१९॥

जले स्थले गगने संसरन्तो ग्रहा ऋक्षाः केतवः तारकाश्च।
तडिद्गणाश्चपला वारिवाहा भूतं भव्यं यद् भवच्चैव सर्वम्॥४२०॥

नारायणः पुरुषो नास्ति चान्यत् तेनावृतं विश्वमेतेन भूम्ना।
विश्वं वृत्वा योऽध्यतिष्ठद् वितस्तिं तं देवानां दैवतं संप्रपद्ये॥४२१॥

यथा सूर्यः प्रतपन् स्वस्य धिष्ण्यं बहिर्लोकान् प्रतपत्येव देवः।
एवं विभुः प्रतपन् वै विराजं बहिश्चान्तः प्रतपत्येव सर्वम्॥४२२॥

---

१. प्रजापः प्रजापतिः; २. नरकाणां समूहो नारकम्।

३. चकारो भिन्नक्रमः, निधनपदोत्तरं द्रष्टव्यः।

सोऽमृतस्याभयस्येश्वरः सर्वदा मर्त्यमन्नं व्यतीतो य ऊर्ध्वं व्ययात्।
ब्रह्मणस्तस्य विश्वं हि वैवर्तकं यद् दुरापं तथा दुर्गमं दुर्जनैः॥४२३॥

परस्य पुंसो महिमा ह्येष गीतः पदेषु सर्वं भूतभव्ये भवच्च।
दुरत्ययो यः कामकर्मानुबद्धैः मायासूत्रग्रथितैः पापपुंभिः॥४२४॥

अमृतं क्षेममभयं यत् त्रिमूर्ध्नो बहिस्त्रिलोक्या मूर्धसु संधृतं प्राक्।
पादत्रयं तदा श्रमा अप्रजानाम् अन्तस्त्रिलोक्या अपरो गार्हमेधः॥४२५॥

सृती विष्वक् प्रसृते ये उभे ते, सरन् जीवो बध्यते मुच्यतेऽयम्।
साशानाशे विद्ययाऽविद्यया च नान्यः पन्था विद्यते योऽयनाय॥४२६॥

विद्याऽविद्यासंश्रयस्यादिपुंसः कामाद्दण्डं संप्रजातं ततोऽभूत्।
विराड्देवो गुणभूताक्षरूपो विश्वं द्रव्यं योऽत्यगाद्गोभिरुग्रैः॥४२७॥

तत्राभिजान्नलिनात् संप्रजातो विधिर्न जज्ञे पुरुषाङ्गकान्यत्।
यज्ञस्य संभारमनीक्षमाणस्तान्येव यज्ञार्थमकल्पयत्सः॥४२८॥

एधांसि जातास्तरवो यज्ञसिद्धौ मेध्या अभूवन् पशवस्ते हवींषि।
कुशाभूताः प्रस्तरायोपयुक्ता इयं भूमिर्देवसदोऽभिजाता॥४२९॥

कालश्चायं यजनायोपयुक्तो भेदैर्गुणैर्बहुधा वर्तमानः।
स्नेहा ग्रहा ओषधयो रसाश्च मृत्स्ना जलं लोहकञ्चैव सर्वम्॥४३०॥

चातुर्होत्रं चर्गयजुःसामवर्गो यमा मन्त्रा दक्षिणा नामधेयम्।
कल्पस्तन्त्रं देवताऽनुक्रमश्च सङ्कल्पा ये गतयो बुद्धयश्च॥४३१॥

प्रायश्चित्तं कर्मणामर्पणं यत् संभारा ये पुरुषाङ्गैर्विमृष्टाः।
तैरेवाङ्गैः पुरुषं ब्रह्मयोनिं ब्रह्माऽयजद् यं तमहं नतोऽस्मि॥४३२॥

यस्मिन् देवे भगवति वासुदेवे विश्वं ह्येतत् संश्रितं सर्वकाले।
योऽसौ पुमानगुणोऽपि स्वभावाद् मयागुणैश्चेष्टते तं नतोऽस्मि॥४३३॥

न भारती मे ह्यमृषोपलभ्यते न वै क्वचिन्मे मनसोऽमृषा गतिः।
न मे हृषीकाणि पतन्ति सत्पथे मया न चित्ते विधृतो यतो हरिः॥४३४॥

सोऽहं समाम्नायतपोविहीनः प्रजापतीनामभिनन्दितः पशुः।
नास्थाय योगं निपुणं समाहितस्तं नाध्यगच्छं यत आत्मसंभवः॥४३५॥

नतोऽस्म्यहं तच्चरणं समीयुषां भवच्छिदं स्वस्त्यनं सुमङ्गलम्।
यो ह्यात्ममायाविभवं न पर्यगाद् यथा नभः स्वान्तमथापरे कुतः॥४३६॥

नाऽहं न चान्ये यदृतां गतिं विदुर्न वामदेवः किमुतापरे सुराः।
तन्मायया मोहितबुद्धयस्त्विदं विनिर्मितं चात्मसमं विचक्षमहे॥४३७॥

यस्य वृत्तानि गायन्ति विध्यादयो नैव जानन्ति तत्त्वेन तस्मै नमः।
यः सृजत्यत्ति शश्वद् विभर्त्यव्ययस्तं परेशं परं पूरुषं संस्तुमः॥४३८॥

यत्केवलं ब्रह्मविशुद्धबोधं प्रत्यक् सदा सम्यगवस्थितञ्च।
सत्यं विभुं पूर्णमनाद्यनन्तं नित्यं तथा विगुणञ्चाद्वयञ्च॥४३९॥

वदन्ति यद् ऋषयः शान्तचित्ता जितेन्द्रिया आशयशुद्धिवित्ताः।
यल्लुप्यते तर्कशतैरपार्थैस्तद् ब्रह्म गोपाङ्गणगं नतोऽस्मि॥४४०॥

विधिर्भवो यज्ञ इमे प्रजेशा दक्षादयो ये भगवत्प्रधानाः।
स्वर्लोकपालाः खगलोकपाला नृलोकपालास्तललोकपालाः॥४४१॥

गन्धर्वविद्याधरचारणेशा ये यक्षरक्षो भुजगाधिनाथाः॥४४२॥

ये वा ऋषीणामृषभाः पितॄणां दैत्येन्द्रसिद्धेश्वरदानवेन्द्राः।
अन्ये च ये प्रेतपिशाचभूतकूष्माण्डयादोमृगपक्ष्यधीशाः॥४४३॥

यत् किञ्च लोके भगवन्महस्वदोजः सहस्वद्बलवत् क्षमावत्।
श्रीह्रीविभूत्यात्मवदद्भुतार्णं तत्त्वं परं रूपवदस्वरूपम्॥४४४॥

प्राधान्यतो यान् ऋषयो वदन्ति लीलावतारान् पुरुषस्य भूम्नः।
आपीयतां कर्णकषायशोषान् अनुक्रमिष्ये रुचिरान् सुवृत्तान्॥४४५॥

यश्चोद्यतः क्षितितलोद्धरणाय विभ्रत्क्रौडीं तनुं सकलयज्ञमयीमनन्तः।
अन्तर्महार्णव उपागतमादिदैत्यं तं दंष्ट्रयाऽद्रिमिव वज्रधरो ददार॥४४६॥

जातो रुचेरजनयत्सुयमान् सुयज्ञ आकूतिसूनुरमरानथ दक्षिणायाम्।
लोकत्रयस्य महतीमहरद्यदार्तिं स्वायम्भुवेन मनुना हरिरित्यनुक्तः।।४४७।।

जज्ञे च कर्दमगृहे किल देवहत्यां स्त्रीभिः समं नवभिरात्मगतिं स्वमात्रे।
ऊचे ययाऽऽत्मशमलं गुणसङ्गपङ्कमस्मिन् विधूय कपिलस्य गतिं प्रपेदे।।४४८।।

अत्रेरपत्यमभिकाङ्क्षत आह तुष्टो दत्तो मयाऽहमिति यद् भगवान् स दत्तः।
यत्पादपङ्कजपरागपवित्रदेहा योगर्धिमापुरुभयीं यदुहैहयाद्याः।।४४९।।

तप्तं तपो विविधलोकसिसृक्षयाऽजेनादौ विलोक्य तपसः स चतुःसनोऽभूत्।
प्राक्कल्पसंप्लवविनष्टमिहात्मतत्त्वं सम्यग् जगाद मुनयो यदचक्षतान्तः।।४५०।।

धर्मस्य दक्षदुहितर्यजनिष्ट मूर्त्यां नारायणो नर इति स्वतपःप्रभावः।
दृष्ट्वाऽऽत्मनो भगवतो नियमावलोपं देव्यस्त्वनङ्गपृतना घटितुं न शेकुः।।४५१।।

कामं दहन्ति कृतिनो ननु रोषदृष्ट्या रोषं दहन्तमुत ते न दहन्त्यसह्यम्।
सोऽयं यदन्तरमलं प्रविशन् विभेति कामः कथं न पुनरस्य मनः श्रयेत।।४५२।।

विद्धः सपत्न्युदितपत्रिभिरन्तिराज्ञो बालोऽपि सन्नुपगतस्तपसे वनानि।
तस्मा अदाद् ध्रुवगतिं गृणते प्रसन्नो दिव्याः स्तुवन्ति मुनयो यदुपर्यधस्तात्।।४५३।।

तद् वेनमुत्पथगतं द्विजवाक्यवज्रविप्लुष्टपौरुषभगं निरये पतन्तम्।
त्रात्वाऽऽर्तितो जगति पुत्रपदं प्रपेदे दुग्धा वसूनि वसुधा सकलानि येन।।४५४।।

नाभेरसावृषभ आस च मेरुदेव्यां यो वै चचार समदृग् जडयोगचर्याम्।
यत्पारहंस्यमृषयः पदमामनन्ति स्वस्थः प्रशान्तकरणः परिमुक्तसङ्गः।।४५५।।

सत्रे विधेः समभवद् भगवान् हयास्यः साक्षात्स यज्ञपुरुषस्तपनीयवर्णः।
छन्दोमयो मखमयोऽखिलदेवतात्मा वाचो बभूवुरमृषाः किल यस्य नस्तः।।४५६।।

मत्स्यो युगान्तसमये मनुनोपलब्धः क्षीणीमयो निखिलजीवनिकायकेतः।
विसंस्रितानुरुमये सलिले विधातुर्यानास्यतः समवयन् विजहार वेदान्।।४५७।।

क्षीरोदधावमरदानवयूथपानामुन्मथ्नताममृतलब्धय आदिदेवः।
पृष्ठेन कच्छपवपुर्विदधार गोत्रं निद्राक्षणोऽद्रिपरिवर्तविशान्तकण्डूः।।४५८।।

त्रैविष्टपोरुभयहासनृसिंहरूपं कृत्वा भ्रमद्भ्रुकुटिदंष्ट्रकरालवक्त्रम्।
दैत्येन्द्रमाशु गदयाऽभिपतन्तमाराद्दूरे निपात्य विददार नखैः स्फुरन्तम्॥४५९॥

अन्तः सरस्युरुबलेन पदे गृहीतो ग्राहेण यूथपतिरम्बुजहस्त आर्तः।
आहेदमादिपुरुषाखिललोकनाथ तीर्थश्रवः श्रवणमङ्गलनामधेय॥४६०॥

श्रुत्वा हरिस्तं मरणार्थिनमप्रमेयश्चक्रायुधो पतगराजभुजाधिरूढः।
चक्रेण नक्रवदनं विनिपाट्य तस्माद् हस्ते प्रगृह्य भगवान् कृपयोज्जहार॥४६१॥

ज्यायान् गुणैरवरजोऽप्यदितेः सुतानां लोकान् विचक्रम इमान् यदथाधियज्ञः।
क्ष्मां वामनेन जगृहे त्रिपदच्छलेन याच्ञामृते पथि चरन् प्रभुभिर्न चाल्यः॥४६२॥

नार्थो बलेरयमुरुक्रमपादशौचं नीरं शिखासु दधतो विबुधाधिपत्यम्।
यो वै प्रतिश्रुतमृते न चिकीर्षदन्यदात्मानमङ्गशिरसा हरयेऽभिमेने॥४६३॥

यो नारदाय च भृशं भगवान् विवृद्धभावेन साधु परितुष्ट उवाच योगम्।
ज्ञानञ्च भागवतमात्मसतत्त्वदीपं यद्वासुदेवशरणा विदुरञ्जसैव॥४६४॥

चक्रञ्च दिक्ष्वविहतं दशसु स्वतेजो मन्वन्तरेषु मनुवंशधवो विभर्ति।
दुष्टेषु राजसु दमं व्यदधात् स्वकीर्तिं सत्ये त्रिपृष्ठ उशतीं प्रथयँश्चरित्रैः॥४६५॥

धन्वन्तरिश्च भगवान् स्वयमेव कीर्तिर्नाम्ना नृणां पुरुरुजां रुज आशु हन्ति।
यज्ञे च भागममृतायुरवाप देव आयुश्च वेदमनुशास्त्यवतीर्य लोके॥४६६॥

क्षत्रं क्षयाय विधिनोपकृतं महात्मा ब्रह्मध्रुगुज्झितपथं नरकार्तिलिप्सुः।
उद्धन्त्यसावनिकण्टकमुग्रवीर्यस्त्रिःसप्तकृत्व उरुधार परश्वधेन॥४६७॥

देवप्रसादसुमुखः कलयाकलेश
इक्ष्वाकुवंशतरणिः स्वगुरोर्निदेशे।
तिष्ठन् वनं सदयितानुज आविवेश
यस्मिन् विरुध्य दशकन्धर आर्तिमार्च्छत्॥४६८॥

यस्मा अदादुदधिरूढभयाङ्गवेपोमार्गं सपद्यरिपुरं हरवद् दिधक्षोः।
दूरे सुहृद् व्यथितरोषसुशोणदृष्ट्या तातप्यमानमकरोरगमक्रचक्रः॥४६९॥

वक्षःस्थलाहतिविरुग्णमहेन्द्रवाहदन्तैर्विडम्बितककुब्जुष उरुहासम्।
सद्योऽसुभिः सह निनाय सदारहर्तुर्विस्फूर्जितैर्धनुष उच्चरतोऽधिसैन्ये॥४७०॥

भूमेः सुरेतरवरूथविमर्दितायाः क्लेशव्ययाय कलया सितकृष्णकायः।
जातः किलाकृत जनानुपलक्ष्यमार्गः कर्माणि चात्ममहिमोपनिबन्धनानि॥४७१॥

तोकेन जीवहरणं यदुलूकिकायास्त्रैमासिकस्य च पदा शकटोऽपवृत्तः।
यद् रिङ्गताऽन्तरगतेन दिवि स्पृशोर्वा उन्मूलनं त्वितरथाऽर्जुनयोर्न भाव्यम्॥४७२॥

यद् वै व्रजे व्रजपशून् विषतोय-
पीतान् पालैस्त्वजीवयदनुग्रहदृष्टिवृष्ट्या।
तच्छुद्धयेऽतिविषवीर्यविलोलजिह्व-
मौच्चाटयद् यदुरगं विहरन् ह्रदिन्याम्॥४७३॥

तत्कर्मदिव्यमिव यन्निशि निःशयानं दावाग्निना शुचिवने परिदह्यमाने।
प्रापौहयद् व्रजमतोऽवसितान्तकालं नेत्रे पिधाय सबलोऽनधिगम्यवीर्यः॥४७४॥

आदत्त यद् यदुपबन्धममुष्य माता
शुल्वं सुतस्य न तु तत्तदमुष्य माति।
यद् जृम्भतोऽस्य वदने भुवनानि गोपी
संवीक्ष्य शङ्कितमनाः प्रतिबोधिताऽऽसीत्॥४७५॥

नन्दं व्यमोचयदसौ वरुणस्य पाशाद्
गोपान् विलेषु पिहितान् मयसूनुना च।
अह्न्यापृतं निशि शयानमतिश्रमेण
वैकुण्ठ-लोकमनयत् किल गोकुलं यः॥४७६॥

गोपैर्मखे प्रतिहते व्रजविप्लवाय देवेऽभिवर्षति [१]पशून् कृपया रिरक्षुः।
दध्रे शिलीन्ध्रमिव सप्तदिनानि सप्तवर्षो महीध्रमनघैककरे सलिलम्॥४७७॥

---

१. पशूनित्यस्य अभिवर्षतीत्यनेन सम्बन्धः।

क्रीडन् वने निशिनिशाकररश्मिगौर्यां रासोन्मुखः कलपदायतमूर्च्छितेन।
उद्दीपितस्मररूजां व्रजभृद्वधूनां हर्तुर्जहार च शिरो धनदानुगस्य।।४७८।।

ये च प्रलम्बरवरदर्दुरकेश्यरिष्ट-
मल्लेभकंसयवनाः कुजपौण्ड्रकाद्याः।
अन्ये च शाल्वकपिबल्वलदन्तवक्त्र-
सप्तोसशम्बरविदूरथरुक्मिमुख्याः।।४७९।।

ये मृधे समितिशालिन आत्तचापाः काम्बोजमत्स्यकुरुकैकयसृञ्जयाद्याः।
याता अदर्शनमलं बलपार्थभीमव्याजाह्वयेन हरिणा निलयं तदीयम्।।४८०।।

कालेन मीलितधियामवमृश्य नृणां स्तोकायुषां स्वनिगमं वत दूरपारम्।
आविर्हितस्तत्वनुयुगं किल सत्यवत्यां वदे द्रुमं विटपशो विविनक्ति विद्वान्।।४८१।।

देवद्विषां निगमवर्त्मनि निष्ठितानां पूर्तिर्भयेन विहिताभिरदृश्यदूर्मिः।
लोकान् घ्नतां मतिविमोहमतिप्रलोभं वेषं विधाय वदति स्म विरुद्धधर्मान्।।४८२।।

यर्ह्यालयेष्वपि सतां न हरेः कथाः स्युः
पाखण्डिनो द्विजजना वृषला नृदेवाः।
स्वाहा स्वधा वषडिति स्म गिरो न यत्र
शास्ता भविष्यति कलेर्भगवान् युगान्ते।।४८३।।

सर्गे तपोविधिरहो ऋषयः प्रजेशाः स्थाने च धर्ममखमन्वमरावनीशाः।
अन्ते त्वधर्महरमन्युवशा सुराद्या मायाविभूतय इमाः पुरुशक्तिभाजः।।४८४।।

विष्णोर्नु वीर्यगणनां कतमोऽर्हतीह यः पार्थिवान्यपि रजांसि कविर्विमाति।
यो रंहसाऽप्रतिहतेन दधौ त्रिपृष्टमस्मात्[१] त्रिसाम्यवदनादुरुकम्पमानम्।।४८५।।

नान्तं विदाम्यहममी मुनयोऽग्रजाश्च
मायाबलस्थ पुरुषस्य कुतोऽपरे ये।
गायन् गुणान् दशशतानन आदिदेवः
शेषोऽधुनाऽपि समवस्यति नास्य पारम्।।४८६।।

---

१. अस्माद् बुद्धिस्थात्। त्रिसाभ्यं प्रकृतिस्तदेव वदनं मुखम् इति कर्मधारयः सत्यलोकस्य तदुद्गतत्वात्।

येषां स एव भगवान् दययेदनन्तः[१]
सर्वात्मनाऽऽश्रितपदो यदि निर्व्यलीकम्।
ते दुस्तरामतितरन्ति च देवमायां
नैषां ममाहमिति धीः श्वशृगालभक्ष्ये।।४८७।।

नाहं तु वेद्मि परमस्य हि योगमायामन्ये विदुर्भवविधिश्रुवनारदाद्याः।
पत्नी मनोः स च मनुश्च तदात्मजाश्च प्राचीनबर्हिर्ऋभुरङ्ग उतासुरेशः।।४८८।।

इक्ष्वाकुरैलमुचुकुन्दविदेहगाधिरघ्वम्बरीषसगरागयनाहुषाद्याः।
मान्धात्रलर्कशतधन्वनुरन्तिदेवा देवव्रतो बलिरमूर्तरयो दिलीपः।।४८९।।

सौभर्युतङ्कशिविदेवपिप्लादसारस्वतोद्धवपराशरभूरिषेणाः।
येऽन्ये विभीषणहनूमदुपेन्द्रपार्थार्ष्टिषेणविदुरश्रुतदेववर्याः।।४९०।।

ते वै विदन्त्यतितरन्ति च देवमायां स्त्रीशूद्रहूणशबरा अपि पापजीवाः।
यद्यद्भुतक्रमपरायणशीलशिक्षाः तिर्यग् जना अपि किमु श्रुतधारणा ये।।४९१।।

शश्वत् प्रशान्तमभयं प्रतिबोधमात्रं शुद्धं समं सदसतः परमात्मतत्त्वम्।
शब्दो न यत्र पुरुकारकवान् क्रियार्थो मायापरेत्यभिमुखे च विलज्जमाना।।४९२।।

तद्वै पदं भगवतः परमस्य पुंसो ब्रह्मेति यद् विदुरजस्रसुखं विशोकम्।
सध्र्यङ् पराप्ययतयो यमभीतिहेतिं संतत्यजुः प्रभुरिवासिरवनित्रकाद्यम्।।४९३।।

स श्रेयसामपि विभुर्भगवान् यतोऽस्य भावस्वभावविहितस्य सतः प्रसिद्धिः।
देहे स्वधातुविगमेऽनुविशीर्यमाणे व्योमेव तत्र पुरुषो न विशीर्यतेऽजः।।४९४।।

नाथ प्रार्थनया कया नहि मया भूयो भवानर्थितः
कस्यां वा भवतां कृपां कलयतानालस्यमध्यासितम्।
निर्लज्जोऽस्मि तथाप्यनन्यशरणः श्रीमन्तमभ्यर्थये
कालव्यालमुखारालपतितं गोपाल मां पालय।।४९५।।

---

१. दययेदिति नामधातुः। दयां कुर्यादित्यर्थः।

मुञ्चाञ्चलं चञ्चल पश्य लोकं बालोऽसि वैदग्ध्यविवर्जितोऽसि।
भावं न जानासि विलासिनीनां गोपाल गोपालनपण्डितोऽसि॥४९६॥

श्यामाभीमा सरणिरसमा पन्नगाः पादपिष्टाः
कल्लोलिन्यः कुपथचलिता वारिदा वारिलग्नाः।
त्वत्संपर्कात् स्वयमपि विसस्मार जानाति नान्यः
कस्ते ब्रूयात् सपदि मथुरानाथ तत्साहसिक्यम्॥४९७॥

यस्य मायां सदा वर्णयन् पुरुषः तच्च संश्रद्धयाऽऽकर्णयन् पूरुषः।
यत्समाकर्ण्य मोदं वहन् पूरुषो मुच्यते संसृतेस्तं हरिं संस्तुमः॥४९८॥

यस्य शृण्वन् कथाः श्रद्धया पूरुषो यस्य संश्रावयन् चेष्टितं पूरुषः।
नातिदीर्घेण कालेन संप्रेक्षते स्वात्मसंस्थं हरिं तं सदा संश्रये॥४९९॥

यः सात्वतानां कर्णरन्ध्रेण देवः संशृण्वतां मानसं संप्रविष्टः।
धुनोति सर्वं शमलं वासुदेवस्तं देवानां दैवतं संप्रपद्ये॥५००॥

यद्वृत्तसम्यक्श्रवणेन पूतस्वान्तः पुमान् मुञ्चति नास्यपादौ।
तं सर्वसंक्लेशविमुक्तिहेतुं केतुं सृतेः शरणं संप्रपद्ये॥५०१॥

उद्घाट्य योगकलया हृदयाब्जकोशं धन्यैश्चिरादपि यथारुचि गृह्यमाणः।
यः प्रस्फुरत्यविरतं परिपूर्णरूपः श्रेयः स मे दिशतु शाश्वतिकं मुकुन्दः॥५०२॥

अङ्गनामङ्गनामन्तरा माधवो माधवं माधवं चान्तरेणाङ्गनाः।
इत्थमाकल्पिते मण्डले मध्यगो वेणुना संजगौ देवकीनन्दनः॥५०३॥

यः समष्टिर्विराड्देहभाजां प्रभुर्यः समष्टिर्जडस्याऽखिलस्येश्वरः।
यस्य देहाङ्गकैर्विश्वमेतत् कृतं पद्मनाभं श्रये शेषशय्याशयम्॥५०४॥

यस्मिन् देवे स्वप्रकाशे चिदात्मन्येते भावा मायया संविमाताः।
गुणेष्वस्या रममाणो ममाहं यो मन्यते पुरुषं तं प्रपद्ये॥५०५॥

यः स्वे महिम्नि परमे वर्तमानः कालं मायां संत्यजन् नष्टमोहः।
त्यक्त्वोभयं समुदास्ते समाधौ तं कृष्णभूतं गुरुमाश्रयेऽहम्॥५०६॥

यो ब्रह्मणे दर्शयन् रूपमग्र्यं व्रतेनादौ निर्व्यलीकेन तुष्टः।
विधित्सवे सर्गविधिं तपोऽदिशत् तमाश्रयेऽकिञ्चनगोचरं हरिम्॥५०७॥

दिव्यं सहस्राब्दममोघदर्शनो जिताऽनिलात्मा विजितोभयेन्द्रियः।
अतप्यत स्माखिललोकसर्गकृत् तपो यदुक्तं तमुपाश्रयेऽहम्॥५०८॥

योऽसौ स्वलोकं भगवान् सभाजितः संदर्शयामास विधिं न यत्परम्।
व्यपेतसंक्लेशविमोहसाध्वसं स्वंदृष्ट्वद्भिर्विबुधैरभिष्टुतम्॥५०९॥

प्रवर्तते यत्र रजस्तमस्तयोः सत्त्वञ्च मिश्रं न च कालिवक्रमः।
न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः॥५१०॥

श्यामावदाताः शतपत्रलोचनाः पिशङ्गवस्त्राः सुरुचः सुवेशसः।
सर्वे चतुर्बाहव उन्मिषन्मणिप्रवेकनिष्काभरणाः सुवर्चसः॥५११॥

प्रवालवैदूर्यमृणालवर्चसः परिस्फुरत्कुण्डलमौलिमालिनः।
भ्राजिष्णुभिर्यः परितो विराजते लसद्विमानावलिभिर्महात्मनाम्॥५१२॥

विद्योतमानः प्रमदोत्तमाग़णैः सविद्युदभ्रावलिभिर्यथा नभः।
श्रीर्यत्र रूपिण्युरुगायपादयोः करोति मानं बहुधा विभूतिभिः॥५१३॥

प्रेङ्खं श्रिता या कुसुमाकरानुगैर्विगीयमाना प्रियकर्म गायति।
तमीश्वरञ्चाखिलसात्वतां पतिं श्रियःपतिं यज्ञपतिं जगत्पतम्॥५१४॥

सुनन्दनन्दप्रबलार्हणादिभिः स्वपार्षदैः संपरिसेवितं विभुम्।
भृत्यप्रसादाभिमुखं दृगासवं प्रसन्नहासारुणलोचनाननम्॥५१५॥

किरीटिनं कुण्डलिनं चतुर्भुजं पीताम्बरं वक्षसि लाञ्छितं श्रिया।
अध्यर्हणीयासनमास्थितं परं वृतं चतुःषोडशपञ्चशक्तिभिः॥५१६॥

युक्तं भगैः स्वैरितरत्र दुर्लभैः स्व एव धाम्नि प्रमदेन संस्थितम्।
तच्चिन्तनाह्लादपरिप्लुतान्तरो हृष्यत्तनुः प्रेमभराश्रुलोचनः॥५१७॥

प्रणौमि पादाम्बुजमस्य दुर्भगो यत्पारहंस्येन पथाऽधिगम्यते।
विषण्णधीर्दुर्विषयैः सितीकृतो न किञ्चिदन्यत् शरणं विलोकयन्॥५१८॥

यत्पुराऽऽसीन्न वासीत् तदन्यत् परं यत्सतश्चासतश्चोभयस्मात्परम्।
यल्लये शिष्यते द्योतमानं रुचा तन्महश्चिन्तये स्वप्रकाशं हृदा।।५१९।।

[1]यस्याभासा सर्वमिदं विभाति यदन्वयात्सत्प्रियञ्चावभाति।
यस्मिन् दृष्टे दृश्यते नैव चान्यत् परायणं तत्परमं सम्भ्रपद्ये।।५२०।।

यतः सर्गो यत आसीद् विसर्गो यतः स्थानं[2] चोतयश्चैव यस्मात्।
यतो मुक्तिर्विविधा सन्निरोधो यतः श्रुतः पुरुषं तं प्रपद्ये।।५२१।।

यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीतम्।
विस्मापनं स्वस्य च सौभगर्धेः परं पदं भूषणभूषणाङ्गम्।।५२२।।

यद् धर्मसूनोर्बत राजसूये निरीक्ष्य दृक्स्वस्त्ययनं त्रिलोकः।
कात्स्न्र्येन चाद्येह गतं विधातुरर्वासृतौ कौशलमित्यमन्यत।।५२३।।

यस्यानुरागप्लुतहासरासलीलावलोकप्रतिलब्धमानाः।
व्रजस्त्रियो दृग्भिरनुप्रवृत्तधियोऽवतस्थुः किल कृत्यशेषाः।।५२४।।

स्वशान्तरूपेष्वितरैः स्वरूपैरभ्यर्थ्यमानेष्वनुकम्पितात्मा।
परावरेशो महदंशयुक्तो ह्यजोऽपि जातो भगवान् यथाऽग्निः।।५२५।।

मां खेदयत्येतदजस्य जन्मविडम्बनं यद् वसुदेवगेहे।
व्रजे च वासोऽरिभयादिव स्वयं पुराद् व्यवात्सीद् यदनन्तवीर्यः।।५२६।।

दुनोति चेतः स्मरतो ममैतद् यदाह पादावभिवन्द्य पित्रोः।
तातम्ब कंसादुरुशङ्कितानां प्रसीदतं नोऽकृतनिष्कृतीनाम्।।५२७।।

को वा अमुष्याङ्घ्रिसरोजरेणुं विस्मर्तुमीशः पुरुषो विजिघ्नन्।
यो विस्फुरद्भ्रूविटपेन भूमेर्भारं कृतान्तेन तिरश्चकार।।५२८।।

दृष्ट्वा समेतैर्ननु राजसूये चैद्यस्य कृष्णं द्विषतोऽपि सिद्धिः।
यां योगिनः संस्पृहयन्ति सम्यग् योगेन कस्तद्विरहं सहेत।।५२९।।

---

१. यस्य अतिशयितया भासा।

२. च ऊतयः।

तथैव चान्ये नरलोकवीरा य आहवे कृष्णमुखारविन्दम्।
नेत्रैः पिबन्तो नयनाभिरामं पार्थास्त्रपूताः पदमापुरस्य॥५३०॥

स्वयं त्वसाम्यातिशयस्त्र्यधीशः स्वराज्यलक्ष्म्याप्तसमस्तकामः।
बलिं हरद्भिश्चिरलोकपालैः किरीटकोष्ट्येडितपादपीठः॥५३१॥

तत्तस्य कैङ्कर्यमलं भृतां नो विग्लापयत्यङ्ग यदुग्रसेनम्।
तिष्ठन् निषण्णं परमेष्ठिधिष्ण्ये न्यबोधयद्देव निशामयेति॥५३२॥

अहो स्वकीयं स्तनकालकूटं जिघांसयाऽपाययदप्यसाध्वी।
लेभे गतिं धात्र्युचितां ततोऽन्यं कं वा दयालुं शरणं व्रजेम॥५३३॥

मन्येऽसुरान् भागवतान् त्र्यधीशे संरम्भमार्गाभिनिविष्टचित्तान्।
ये संयुगेऽचक्षत तार्क्ष्यपत्रमंसे सुनामायुधमापतन्तम्॥५३४॥

योऽवनेर्भारहाराय संयाचितोम ब्रह्मणा देवकीगर्भजातोऽप्यजः।
वासुदेवः पुरा कंसकारागृहे तं हरिं संश्रये सादरं सुन्दरम्॥५३५॥

यो हि नीतः सदा कंसतो बिभ्यता जातमात्रः शिशुर्नन्दगोपव्रजम्।
गूढवृत्तोऽवसाद् रौहिणेयानुजः शैववर्षाणि तं नन्दनन्दं भजे॥५३६॥

नाहं वन्दे तव चरणयोर्द्वन्द्वमद्वन्द्वहेतोः
कुम्भीपाकं गुरुमपि हरे नारकं नापनेतुम्।
रम्या रामा मृदुतनुलतानन्दनेनापि रन्तुं
भावे भावे हृदयभवने भावयेऽहं भवन्तम्॥५३७॥

यः कालिन्दीकूले विहरन् वत्सपसंघैर्वत्सगणान्।
चारयते स्म ननद् द्विजसंघैः सकुंलिताङ्घ्रिपङ्केऽतिमहान्॥५३८॥

यः कौमारीं दर्शयन् प्रेक्षणीयां चेष्टां बालोम नन्दगोपव्रजस्य।
हसन् गायन् प्ररुदन् बालसिंहालोको देवः शरणं तं प्रपद्ये॥५३९॥

योगो धनं सितवृषभं श्रीनिकेतं संचारयन्ननुगान्गोपवीरान्।
अरीरमद्वेणुरावैर्विचित्रैस्तं गोपवेषं हरिमाश्रयेऽहम्॥५४०॥

यो मायिनः कामरूपान् प्रयुक्तान् न्यहन् बालो भोजराजेन दैत्यान्।
लीलाखेलैरश्रमोऽवार्यावीर्यस्तं देवानां दैवतं सम्प्रपद्ये।।५४१।।

यः कालियं भुजंग भीषयित्वा संजीव्यापोऽपाययत्प्रमृता गाः।
ह्रदं कृत्वा निर्विषं शीततोयं तं देवानां दैवतं सम्प्रपद्ये।।५४२।।

योऽयाजयद् गोसवेन द्विजाग्र्यैर्गोपं भूपं महतः सञ्चयस्य।
अचीकरत् सद्व्ययं नन्दसुनुस्तं ब्रह्मणः शरणं सम्प्रपद्ये।।५४३।।

यः कोपतो वर्षतीन्द्रेऽतिवेगाद्भीते व्रजे विह्वे पीड्यमाने।
गोत्रं दध्रे लीलया छत्रकान्तं तं देवानां दैवतं सम्प्रपद्ये।।५४४।।

यः शरच्चन्द्रशीतांशुभिर्भासितं मानयन् यामिनीं कामिनीवक्त्रकम्।
गोपिकाण्डलं क्रीडयन् व्रीडयन् यो वनेऽरीरमत्तं हरिं संश्रये।।५४५।।

निमज्जता नाथ भवार्णवेऽस्मिन् मया भवान् इकूलमिवास्ति लब्धः।
त्वयापि लब्धं भगवन्निदानीमनुत्तमं पात्रमिदं दयायाः।।५४६।।

व्रजात्समागत्य पुरं स्वपित्रोश्चिकीर्षयांशं बलददेवसंयुतः।
नियात्यतुङ्गाद् रिपुयूथनाथं हतं व्यकर्षद् व्यसुमोजसोर्व्याम्।।५४७।।

त्रयीं विद्यां सावनीं प्राणविद्यां छन्दोगोक्तां काश्यसान्दीपिनोक्ताम्।
सकृत्प्रोक्तां गुरवे श्रावयित्वा मृतं पुत्रं दक्षिणां प्राहिणोद्यः।।५४८।।

तस्मै नमो भीष्मककन्यया ये श्रियः सवर्णां रुचिमावहन्त्यः।
समाहूता मिषतां मूर्ध्नि पादं तेषां दधद्यः स्वभागं समार्च्छत्।।५४९।।

ककुद्मतोऽविद्धनसःसुदम्य स्वयंवरे नाग्नजितीमुवाह।
तद्भग्नमानानपि गृह्यतोऽज्ञान् जघ्नेऽक्षतः शस्त्रभृतः स्वशस्त्रैः।।५५०।।

प्रियं प्रभुर्ग्राम्य इव पियाया विधित्सुरार्च्छद् द्युतरुं यदर्थे।
वज्र्याद्रव सगणो रुषाधः क्रीडामृगी नूनमयं वधूनाम्।।५५१।।

सुतं मृधे खं वपुषा ग्रसन्तं दृष्ट्वा सुनामोन्मथितंम धरित्र्या।
आमन्त्रितस्तत्तनयाय शेषं दत्त्वा तदन्तः पुरमाविवेश।।५५२।।

तत्राहृतास्ता नरदेवकन्याः कुजेत दृष्ट्वा हरिमार्तबन्धुम्।
उत्थाय सद्यो जगृहुः प्रहर्षव्रीडानुरागप्रहितावलोकैः॥५५३॥

तासां दिव्याभूषणभूषितानां यो ह्येकस्मिन् समये देव एकः।
स्वमायया बहुरूपोऽनुरूपः पाणीन् दध्रं दुर्लभं तं नतोऽस्मि॥५५४॥

यो रुन्धतः स्वपुरं मागधस्य सहायकान् कालशाल्वादिदैत्यान्।
अजीघसनत् पुरुषेषु स्वकेषु दिव्यं तेजो निदधत् स्वात्मतन्त्रः॥५५५॥

यः शम्बरं द्विविदं बल्वलञ्च बाणं मुरं दन्तवक्त्रादिदैत्यान्।
अघातयन्निपुणस्तैस्तैरुपायैस्तं देवानां दैवतम् सम्प्रपद्ये॥५५६॥

यः कर्णदुः शासनसौबलानां कुमन्त्रपाकेन हतप्रभायुषम्।
सुयोधनं सानुचरं शयानं भग्नोरुमुर्व्यां न ननन्द पश्यन्॥५५७॥

कियान् भुवोऽयं क्षपितो हि भारो यद्द्रोणभीष्मार्जुनभीममूलैः।
अष्टादशाक्षौहिणिको मदंशैरास्ते बलं दुर्विषहं यद्वनाम्॥५५८॥

मिथो यदैषां भविता विवादो माध्व्यामदात्ताम्रविलोचनानाम्।
नैषां वधोपाय इयानतोऽन्यो मय्युद्यतेऽन्तर्दधते स्वयं स्म॥५५९॥

य एवमीशः सुविचिन्त्यचित्ते निवेश्य राज्ये किल धर्मजञ्च।
आनन्दयत् सुहृदः साधुमार्गं दिनर्शयन् शरणं तं गतोऽस्मि॥५६०॥

दिवि वा भुवि वा रसातले वा नरके वा नरकान्तके प्रकामम्।
अवधीरितशारदारविन्दौ चरणौ ते मरणेऽपि चिन्तयामि॥५६१॥

येनोत्तरायामभिमन्युना धृतः पुरोस्तु वंशः कविभिर्निरूपितः।
द्रौण्यस्त्रसंप्लुष्टतरः पुनर्धृतः कस्तं न देवं शरणं श्रयेत॥५६२॥

योऽयाजयद् धर्मसुतं सुखेन त्रिभिर्विभुः क्रतुभिश्चाश्वमेधैः।
क्ष्मां रक्षन्तं भ्रातृभिः स्वानुचारं कस्तं देवं शरणं न श्रयेत॥६६३॥

यो विश्वात्मा लोकवेदानुयातः कामान् भेजे द्वारवत्यामसक्तः।
साख्यं ज्ञानं संश्रितः सर्वकालं मोमुह्यमानः शरणं तं प्रपद्ये॥५६४॥

स्निग्धैः स्मितैवीक्षया चारुभङ्ग्या वाचा सुधास्वादया निःसरन्त्या।
यो निर्दोषैश्चरितैः श्रीनिकेतं देहं श्रितो लोकमिमं चामुकञ्च॥५६५॥

यदून् सुतरां रमयन् यश्च रेमे स्त्रीभिः सार्धं विमलासु क्षपासु।
यो वर्षाणां रममाणो विरक्तो बहून् पूगान् शरणं तं प्रपद्ये॥५६६॥

योगेश्वरं पुरुषं सेवमानो दैवाधीनान् सेवते नैव कामान्।
दैवाधीनः पुरुषोऽभ्रान्तदृष्टिस्तं देवानां दैवतं सम्प्रपद्ये॥५६७॥

यः श्रीकेतः कृतकेतस्तु नद्यां सरस्वत्यां संवृणन् स्वं शरीरम्।
अकेतनः श्यामसुवर्णगात्रो रजोहीनः शान्तशान्तोऽरुणाक्षः॥५६८॥

दोर्भिश्चतुर्भिर्विदितः पीतवासा ऊरौ वामै दक्षिणं पादपद्मम्।
निवेश्य बाले पिप्पले संनिषण्णस्त्यक्ताशनोऽप्यकृशः सुप्रसन्नः॥५६९॥

भावानुरक्तश्च पुरःस्थितञ्च प्रमोदभावानतकन्धरञ्च।
आश्रावयन् मैत्रके यं मुनिं प्राग्हासानुरागस्मितवीक्षितेन॥५७०॥

विस्रम्भयन् उद्धवं सांख्ययोगौ प्रोवाच यद्भागवतं वदन्ति।
ज्ञानं परं तन्महिमावभासं तमीश्वरं शरणं सम्प्रपद्ये॥५७१॥

को न्वीश ते पादसरोजभाजां सुदुर्लभोऽर्थेषु चतुर्ष्वपीह।
तथापि नाहं प्रवृमोमि भूमन् भवत्पदाम्भोजनिषेवणोत्कः॥५७२॥

कर्माण्यनीहस्य भवोऽभस्य ते दुर्गाश्रयोऽथारिभयात्पलायनम्।
कालात्मनो यत् प्रमदायुताश्रयः स्वात्मारतेः खिद्यति धीर्विदामिह॥५७३॥

त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सका त्वमेव।
त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव॥५७४॥

मन्त्रेषु चैवोद्धवमाह यत्त्वमकुण्ठिताखण्डसदात्मबोधः।
पृच्छामि भो मुग्ध इवाप्रमत्तस्तन्नो मनो मोहयतीव देव॥५७५॥

ज्ञानं परं स्वात्मरहःप्रकाशं प्रोवाच यद् विधये तत्समग्रम्।
अपि क्षमं नो ग्रहणाय भर्तर्वदाञ्जसा यद् वृजिनं तरेम॥५७६॥

जनस्य यस्माद् विमुखस्य दैवादधर्मशीलस्य सुदु:खितस्य।
अनुग्रहायेन चरन्ति नूनं भूतानि भव्यानि तमाश्रयेऽहम्॥५७७॥

हे नाथ विष्णो दिश वर्त्म शं न: संराधितोऽमायया येन पुंसाम्।
हृदि स्थितो यच्छसि भक्तिपूते ज्ञानं सतत्त्वाधिगमं पुराणम्॥५७८॥

करोषि कर्माणि कृतावतारो यान्यात्मतन्त्रो भगवान् अधीश:।
ससर्जिथाप्यग्र इदं निरीह: संस्थाप्य वृत्तिं जगतो विधत्से॥५७९॥

यथा पुन: स्वे ख इदं निवेश्य शेषे गुहायां विनिवृत्तवृत्ति:।
देवेश्वराधीश्वर कृष्ण चैवदनुप्रविष्टो बहुधा यथाऽऽसी:॥५८०॥

क्रीडन् विधत्से द्विजगोसुराणां क्षेमाय कर्माण्यवतारभेदै:।
मनो न तृप्यत्यपि शृण्वतां न: सुश्लोकमौलेश्चरितामृतानि॥५८१॥

यैस्तत्त्वभेदैरधिलोकनाथ लोकानलोकान् सह लोकपालान्।
अचीक्लृपो यत्र हि सर्वसत्त्वनिकायभेदोऽधिकृत: प्रतीत:॥५८२॥

येन प्रजानामखिलात्मकर्मरूपाभिधानाञ्च भिदां व्यधत्था:।
नारायणो विश्वसृडात्मयोनिरेतत्समं वर्णय नाथ मह्यम्॥५८३॥

परावरेषां भगवन् व्रतानि श्रुतानि मे विदुषां वल्गुवक्त्रात्।
अतृप्नुमक्षुल्लसुखावहानां तेषामृते ते चरितामृतौघात्॥५८४॥

कस्तृप्नुयात्ते चरिताभिधानात्सत्रे सदा सूरिभिरीड्यमानात्।
यत्कर्णनाडीं पुरुषस्य याते भवप्रदां गेहरतिं छिनत्ति॥५८५॥

मुनिर्विवक्षुर्भवतो गुणानां द्वैपायनो भारतमाह कृष्ण:।
यस्मिन्नृणां ग्राम्यसुखानुवादैर्मतिर्गृहीता नु हरे: कथायाम्॥५८६॥

सा श्रद्दधानस्य विवर्धमाना विरक्तिमन्यत्र करोति पुंस:।
हरे पदानुस्मृतिनिर्वृतस्य समस्तदु:खात्ययमाशु धत्ते॥५८७॥

शोचामि तानविद: शोच्यशोच्यान् हरे: कथातो विमुखानघेन।
क्षिणोति देवोऽनिमिषस्तु येषामायुर्वृथावादगतिस्मृतीनाम्॥५८८॥

त्वमेव लोकस्य हि सर्मदाता हरेः कथामेव कथासु सारम्।
उद्धृत्य पुष्पेभ्य इवार्तबन्धो शिराय नः कीर्तय तीर्थतीर्थम्।।५८९।।

त्वं विश्वजन्मस्थितिसंयमार्थे कृतावतारः प्रगृहीतशक्तिः।
चकर्थ कर्माण्यतिपूरुषाणि यानीश [१]तन्नाथ वदाशु मह्यम्।।५९०।।

त्वं सर्गादौ भगवन्नेक आसीरसुप्तदृक् सप्तशक्तिः परात्मा।
द्रष्टा दृश्य[२]मविदनेनकराजो भवान् मेनेऽसन्तमात्मानमीश।।५९१।।

तदात्मकामानुगतौ प्रजातो भवानात्मा बहुधा दृश्यमानः।
या सा शक्तिः सदसद्रूपिणी ते माया तया निर्मितं विश्वमेतत्।।५९२।।

त्वं मायायां गुणमय्यां महेशः संक्षोभितायां कालशक्त्याऽऽत्मतन्त्रः।
सङ्कल्पं स्वं वीर्यमादावधत्थास्ततस्त्वं महदाख्यं बभूव।।५९३।।

स्वदेहस्थं विश्वमेतद्विचित्रमव्यक्तं यद् व्यञ्जयँस्तत्तमोऽरिः।
वक्तोऽप्यसौ गुणकालात्मरूपः सूक्ष्मः परो भवता दृष्टिदृष्टः।।५९४।।

आत्मानं स व्यकरोद् आत्मरूपो विधित्सया चरकस्याचरस्य।
विकुर्वतो महतः संप्रभूतमहं तत्त्वं यत्त्रिधा गीयते ज्ञैः।।५९५।।

कार्यं हेतुः कर्तृरूपं विभक्तं मनो भूतानीन्द्रियाण्यत्र चाहुः।
अहङ्कारस्त्रिविधः संविभक्तो वैकारिकस्तैजसस्तामसश्च।।५९६।।

अहङ्काराद्विकृतात् संप्रजातं कार्यं मनो वैकृताश्चैव देवाः[३]।
अर्थव्यक्तेः साधनं सप्रभूतमेतत्सर्वं गूढतत्त्वं गुहायाम्।।५९७।।

रजोगुणादुभयानीन्द्रियाणि ज्ञानं येभ्यः कर्म येभ्यो वदन्ति।
तमोगुणाद् भूतसूक्ष्मादिजातं स्वं लिङ्गं यदात्मनः संगिरन्ते।।५९८।।

यस्तङ्कल्पात् कालमायांशयुक्ताद् विकृतं खं स्पर्शवन्तं प्रसूते।
वायुं देवं प्राणभूतं प्रजानां तं देवानां दैवतं सम्प्रपद्ये।।५९९।।

---

१. सर्वमित्यध्याहर्तव्यम्; २. न विदन् अविदन्।
३. देवा इन्द्रियाधिष्ठितारः।

वायुर्देवो विकृतः स्वस्य शक्त्या बलं लब्ध्वा रूपतन्मात्रमग्निम्।
ससर्ज यद्विक्षितो लोकच[१]क्षुस्तं देवानां दैवतं सम्प्रपद्ये॥६००॥

यद्वीक्षितं ज्योतिरग्रे विकुर्वद् वा[२]य्वन्वितं कालमायां शयुक्तम्।
आधत्ताम्भो रसवद् भूतसूक्ष्मं तं देवानां दैवतं सम्प्रपद्ये॥६०१॥

अम्भोऽग्निना निविष्टं विकुर्वद् यद् वीक्षितं गन्धगुणं प्रसूते।
महीं सूक्ष्मां कालमायांशयोगात् तं देवानां दैवतं सम्प्रपद्ये॥६०२॥

एतान् देवान् कालमायांशलिङ्गान् यस्यांशांशान् सूरयः सङ्गिरन्ते।
असंहतान् स्वक्रियाऽनीशभावान् तं देवानां दैवतं सम्प्रपद्ये॥६०३॥

नमामि ते देव पदारविन्दं प्रपन्नतापोपशमातपत्रम्।
यन्मूलके तापतपोऽञ्जसोरुसंसारदुःखं बहिरुत्क्षिपन्ति॥६०४॥

धातर्यदस्मिन् भव ईश जीवास्तापत्रयेणोपगता न शर्म।
आत्मन् लभन्ते भगवँस्तवाङ्घ्रिच्छायां स विद्यामत आश्रयेम॥६०५॥

मार्गन्ति यत्ते मुखपद्मनीडैश्छन्दःसुपर्णैर्ऋषयो विविक्ते।
यस्याघमर्षादसरिद्वरायाः पदं पदं तीर्थपदः प्रपन्नाः॥६०६॥

यच्छ्रद्धया श्रुतवत्या च भक्त्या संसृज्यमाने हृदयेऽवधाय।
ज्ञानेन वैराग्यबलेन धीरा व्रजेम तत्तेऽङ्घ्रिसरोजपीठम्॥६०७॥

विश्वस्य जन्मस्थितिसंयमार्थे कृतावतारस्य पदाम्बुजं ते।
व्रजेम सर्वे शरणं यदीश स्मृतं प्रयच्छत्यभयं स्वपुंसाम्॥६०८॥

यत्सानुबन्धेऽसति देहगेहे ममाहमित्यूढदुराग्रहस्य।
पुंसः सुदूरं वसतोऽपि पुर्यां भजेम तत्ते भगवन् पदाब्जम्॥६०९॥

ते वै ह्यसद्वृत्तिभिरक्षिभिर्ये पराहृतान्तर्मनसः परेश।
पदं न पश्यन्त्युरुगाय तत्ते नूनं पदन्यासविलासलक्ष्म्याः॥६१०॥

पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये।
वैराग्यसारं प्रतिलभ्यबोधं यथाऽञ्जसाऽन्वीयुरकुण्ठधिष्ण्यम्॥६११॥

---

१. लोकचक्षुरित्यग्निविशेषणम्; २. इदमग्रिमञ्च ज्योतिर्विशेषणम्।

तथाऽपरे चात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम्।
त्वामेव धीराः पुरुषा विशन्ति तेषां श्रमः स्यान्न तु सेवया ते॥६१२॥

त्वं नो नराणामसि सान्वयानां कूटस्थ आद्यः पुरुषः पुराणः।
त्वं देशशक्त्या गुणकर्मयोनौ रेतस्त्वजायां कविरादधेऽजः॥६१३॥

ततो वयं नृप्रमुखा यदर्थे बभूविमात्मन् करवाम किं ते।
त्वं नः स्वचक्षुः परिदेहि शक्त्या देव क्रियार्थे त्वदनुग्रहाणाम्॥६१४॥

यः कालसंज्ञां दधदात्मशक्तिं गणं त्रयोविंशतितत्त्वकानाम्।
समाविशन् ऐरयत् कार्यहेतोस्तमाद्यमीशं पुरुषं सम्प्रपद्ये॥६१५॥

योऽनुप्रविष्टो भगवान् चेष्टयाऽऽद्यो गणं भिन्नं योजयामास सुप्तम्।
प्रबोधयन् कर्म तेषां दिनादौ संसर्गहेतोः पुरुषं तं प्रपद्ये॥६१६॥

येनेरितो विशता विश्वसृक्को गणः क्षुभ्यन् पुरुषं तं ससर्ज।
हिरण्मयं सुरुचं यत्र लोकाश्चराचराः शरणं तं प्रपद्ये॥६१७॥

य आण्डकोशं पुरुषं विश्वयोनिं देवक्रियात्मानमचिन्त्यरूपम्।
व्यभक्त देवो दशधा चैकधा च त्रिधा गर्भं शरणं तं प्रपद्ये॥६१८॥

यः साध्यात्मः साधिदेवश्च देवस्त्रिधाभूतः साधिभूतः पुराऽभूत्।
विराट् प्राणो दशधा वर्तमानो हृदा चैकः शरणं तं प्रपद्ये॥६१९॥

य ईश्वरो विश्वसृजान्तु दीनां विज्ञापनां संस्मरन्नादिदेवः।
सृष्ट्यै देवं प्रातपद् वै विराजं स्वतेजसा पुरुषं तं प्रपद्ये॥६२०॥

यस्याभितप्तस्य परस्य तेजसा भिन्नं सुखं प्राविशच्चाग्निरिद्धः।
स्वांशेन वाचा परिवर्तमानो विज्ञापयन्नर्थजातं प्रजानाम्॥६२१॥

भिन्नं तालु वरुणो लोकपालोऽविशद् हरेर्जिह्वयांऽशेन यस्य।
परावृतः स्वादु चास्वादु सर्वं विज्ञापयन् पुरुषं तं प्रपद्ये॥६२२॥

भिन्ने नासे यस्य देवस्य देवौ वैभाकरौ धाम धिष्ण्यं प्रपन्नौ।
घ्राणेन चांशेन विवर्तमानौ विज्ञापयन्तौ गन्धजातं प्रजाभ्यः॥६२३॥

निर्भिन्ने अक्षिणी लोकपालस्त्वष्टा देवो ह्यविशद् यस्य विष्णोः।
दृष्ट्यांशकेनाशु विवर्तमनो रूपाणि विज्ञापयिता जनेभ्यः॥६२४॥

यस्य भिन्नानि चर्माणि देवः पुरा लोकपालोऽनिलः प्राविशत् सर्वतः।
वर्तमानोंऽशतः प्राणरूपैः सदा स्पर्शजातं विजानाति जीवो मुदा॥६२५॥

यस्य कर्णौ विभिन्नौ स्वधिष्ण्यं दिशः प्राविशन् श्रोत्रकेणांशकेनामलाः।
शब्दसिद्धिं यतो जानते जन्तवस्तं प्रपद्ये हरिं सादरं सुन्दरम्॥६२६॥

यस्य भिन्नां त्वचं प्राविशन् वीरुधो धिष्ण्यमंशेन रोमव्रजैर्वैकृताः।
यैर्जनाः कण्डुकां जानते सम्भृतास्तं प्रपद्ये हरिं सादरं सुन्दरम्॥६२७॥

यस्य मेढ्रं विनिर्भिन्नमादौ स्वकं धिष्ण्यमीशः पुरा प्राविशत्को मुदा।
रेतसांऽशेन येनासकौ सम्भृतः शं परापद्यते पूरुषः प्राकृतः॥६२८॥

यस्य पुंसो मुदं भिन्नमादौ पुरा मित्रदेवोऽविशल्लोकपालो मुदा।
पायुनांशेन येनासकौ निर्वृतः संविसर्गं करोत्येव जीवो मुदा॥६२९॥

यस्य हस्तौ विभिन्नौ पुरा स्वःपतिर्देव इन्द्रोऽविशद्वार्तया स्वांशतः।
वृत्तिमिष्टं विचिन्वन् यया पूरुषः प्राप्नुते तां सदा निर्वृतो निर्वृतः॥६३०॥

यस्य पादौ पुरा पिण्डतो निर्गतौ विष्णुरीशो विभुर्लोकपालोऽविशत्।
स्वांशतो यानतो यद्गतः पूरुषः प्राप्यमिष्टं सदा पद्यते पद्यते॥६३१॥

यस्य भिन्नं हृदब्जं पुरं चन्द्रमा देव ईशोऽविशन्मोदमानः पुरा।
स्वांशतो मानसेनासकौ विक्रियां यत्प्रभावाद् जनश्चापि संपद्यते॥६३२॥

यस्य बुद्धिं विनिर्भेदमाप्तां पुरा लोकपालोऽभि[१]मानोऽविशत्तत्पदम्।
कर्मणांशेन येनासकौ पूरुषः कार्यजातं विनिश्चित्य संप्राप्नुते॥६३३॥

यस्य सत्त्वं विनिर्भिन्नमादौ महान् पूरुषो धिष्ण्यमीशः स्वकं प्राविशत्।
चित्तकांशेन येनासकौ पद्यते ज्ञानविज्ञानके केवलं तं नुमः॥६३४॥

---

१. अभिमानो रुद्रः।

चन्द्रमा मनसो जातः शीर्ष्णो द्यौः समवर्तत।
पद्भ्यां भूमिर्दिशः श्रोत्राद् गगनं नाभितोऽभवत्।।६३५।।

वदनाद् ब्रह्मपुरुषस्य प्रजातं यत्तून्मुखत्वात् सर्ववर्णस्य मुख्यम्।
बाहुभ्योऽवर्तत चास्य भूपस्तं क्षत्रिया: सर्व एवानुयाता:।।६३६।।

ये त्रायन्ते वर्णकानाश्रमाँश्च नरान् वीराः कण्टकेभ्यः परेभ्यः।
तेषां परस्ताद् वणिजोऽनुयाता ऊरुद्वयाद् लोकवृत्तीर्वहन्त:।।६३७।।

पद्भ्यां जज्ञे वासुदेवस्य शूद्रस्तुर्यो वर्णो धर्मसिद्ध्यै प्रजानाम्।
शुश्रूषणं धर्म एतस्य चाभूद् वृत्त्यै तया तुष्यति चोरुगाय:।।६३८।।

एते वर्णा धर्ममनुश्रयन्तः स्वं स्वं सर्वे वासुदेवं यजन्ते।
हरिं देवं श्रद्धया स्वात्मशुद्ध्यै यतः प्रजाताः सह वृत्तिप्रभेदैः।।६३९।।

एकान्तवादं वचसो नु पुंसां सुश्लोकमौलेर्गुणवादमाहुः।
श्रुतेश्च विद्वद्भिरुपाकृतायां कथासुधायामुपसंप्रयोगम्।।६४०।।

तं यतोऽप्राप्य वाचस्तथेदं मनः संन्यवर्तन्त दूराद् विकुण्ठाशयाः।
अप्यहं चान्य एते सुरा व्यापृता वासुदेवाय तस्मै नमो मे सदा।।६४१।।

चिन्मात्ररूपे भगवत्यनन्ते कूटस्थके सर्वविकारशून्ये।
विनिर्गुणे यत्र गुणाः क्रियाश्च भवन्ति मायावशतो नमोऽस्मै।।६४२।।

यस्मिन् परे चाद्वये चैव कामश्चिक्रीडिषा क्रीडने चोद्यमो वा।
स्वतस्तृप्ते विनिवृत्ते जडेभ्यो मायाकृताः पूरुषं तं नतोऽस्मि।।६४३।।

यो मायया गुणमय्या महेशो विश्वं पुरा प्रासृजद् विश्वरूपः।
संस्थापयत्यखिलं चैषमो यो लये चेदं लापयिता तं नतोऽस्मि।।६४४।।

यो देशतः कालतो वाप्यवस्थाभेदैः स्वतः परतो वाऽपि देवः।
अलुप्तबोधो ह्यपरिच्छिन्न एकस्तं मायया भिद्यमानं प्रपद्ये।।६४५।।

शक्तिर्माया यस्य वेदेषु गीता नानाशक्तिर्बहुधा चिन्त्यमाना।
अप्यद्भुताऽनिर्वचनीयरूपा जगत्सृजत्यखिलं तं प्रपद्ये।।६४६।।

न विद्यते यस्य च जन्म कर्म वा न नामरूपे गुण ऐश्वरो वा।
तनूषु सर्वासु सदाप्यवस्थितं तं क्लेशहीनं सुभगं संप्रपद्ये॥६४७॥

परं रूपं मनसो गोचरं ते दिदृक्षुमीशा ज्ञानपङ्के विपन्नम्।
प्रबोधय प्रागुदकश्मलं मे महद्भरे शिरसा त्वां नतोऽस्मि॥६४८॥

यस्येश्वरस्य सततं तव निर्वृतस्य कार्यमुक्तमृषिभिः खलु बन्धनं वा।
मायाकृतं तदिति देव हृदाऽवधार्य त्वां सर्वभूतशरणं शरणं गतोऽस्मि॥६४९॥

अर्थं विना भवति पुंस ऊरुक्रमेयमात्मन्यनात्मविषया किल दुर्मतिर्या।
तां मे सदा हर विभो शरणं गतस्य देवाधिदेव सततं भवते नमोऽस्तु॥६५०॥

स्वप्ने यथा स्वशिरसश्छिदिरीश दृष्टा कम्पोऽम्भसि प्रतिगतस्य यथैव चेन्दोः।
एवं त्वयि प्रतिगते मनसि प्रकामं संदृश्यते खलु विभो सकलोऽप्यनर्थः॥६५१॥

अनर्थजालं सकलं यदात्मनि प्रकल्पितं शश्वद् विद्यया विभो।
निवर्तते तत्तु तवानुकम्पया निवृत्तिधर्मेण तवेश भक्तितः॥६५२॥

यदेन्द्रियाणां विषयेष्वसङ्गिनां निरोध आत्मन्युपजायते त्वयि।
निवर्तते क्लेशगणस्तदोल्वणो निशि प्रसुप्तस्य यथा दुरत्ययः॥६५३॥

हरे मुरारे मधुकैटभारे गुणानुवादश्रवणं तवैव।
अशेषसंक्लेशशमं विधत्ते तथा भवत्पादसरोजसेवा॥६५४॥

नैते ह्यर्था आत्मनः साधु दृष्टा यद्यप्येते प्रत्ययं यान्ति तत्र।
तं प्रत्ययं भवतः पादसेवा सुखेनाहं प्रणुदे मुक्तिकामः॥६५५॥

सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम्।
सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः॥६५६॥

यत् पादयोः सेवया रूढभक्त्या सञ्जायते रतिरासो हि तस्मिन्।
विपद्विमर्दः परमः प्रहर्षः तं वासुदेवं शरणं प्रपद्ये॥६५७॥

यद् वर्त्मसु स्वल्पपुण्यैर्दुराया सेवा जनैर्गीयते यत्र देवः।
योगेश्वरो योगिभिर्ध्यानगम्यो रविप्रभासं पुरुषं तं प्रपद्ये॥६५८॥

यः सृष्ट्वाऽग्रे महदादीन् विकारान् अनुक्रमात्तेभ्य उद्धृत्य देवः।
विराजमीशं पुरुषं प्राविशद् द्राग् निरञ्जनं पुरुषं तं प्रपद्ये॥६५९॥

यमाहुराद्यं पुरुषं विश्वयोनिं सहस्रपादोरुभुजाननञ्च।
यत्रेमे विश्वके लोकपालाः सहैव लोकैः सविकासं वसन्ति॥६६०॥

यस्मिन् प्राणा दशधा संविभक्ताः सहेन्द्रियार्थाः सहितेन्द्रियाश्च।
त्रिवृत्कृतो भूतसंघश्च सर्वः तातं ततं तस्य विभुं नतोऽस्मि॥६६१॥

सत्सेवनीया बत पूरुवंशो यल्लोकपालो भगवत्प्रधानः।
बभूव लोकेऽजितकीर्तिमालां पदे पदे नूतनयन्त्रभीक्ष्णम्॥६६२॥

सोऽहं नृणां क्षुल्लसुखाय दुःखं महद्गतानां विरमाय तस्य।
प्रवर्तये भागवतं स्तवं यं जगाद साक्षाद् भगवानृषिभ्यः॥६६३॥

आसीनमुर्व्यां भगवन्तमाद्यं सङ्कर्षणं देवमकुण्ठबोधम्।
विवित्सवस्तत्त्वमतः परस्य कुमारमुख्या यमुनान्वपृच्छन्॥६६४॥

स्वमेव धिष्ण्यं बहुमानयन्तं यं वासुदेवाभिधमामनन्ति।
प्रत्यग् धृताक्षाम्बुजकोशमीषदुन्मीलयन्तं विबुधोदयाय॥६६५॥

स्वर्धुन्युदार्द्रैः स्वजटाकलापैरुपस्पृशन्त्यश्चरणोपधानम्।
पद्मं यदर्चन्त्यहिराजकन्याः सप्रेमनानावलिभिर्वरार्थाः॥६६६॥

मुहुर्गृणन्तो वचसाऽनुरागस्खलत्पदेनास्य कृतानि तज्ज्ञाः।
किरीटसाहस्रमणिप्रवेकप्रद्योतितोद्दामफणासहस्रम्॥६६७॥

प्रोक्तं किलैतद्भगवत्तमेन निवृत्तिधर्माभिरताय तेन।
सनत्कुमाराय स चाह पृष्टः सांख्यायनायाङ्गधृतव्रताय॥६६८॥

एवं परिप्राप्तमिमं भवत्स्तवं परम्परातः समुपाश्रितं बुधैः।
अनाप्तपुण्योपचयैः सुदुर्लभं प्रवर्तये नाथ तव प्रसत्तये॥६६९॥

उदाप्लुतं विश्वमिदं तदासीद् यन्निद्रयाऽऽमीलितदृङ्न्यमीलयत्।
अहीन्द्रतल्पेऽधिशयान एकः कृतक्षणः स्वात्मरतौ निरीहः॥६७०॥

सोऽन्तः शरीरेऽर्पितभूतसूक्ष्मः कालात्मिकां शक्तिमुदीरयन् स्वाम्।
उवास तस्मिन् सलिले पदे स्वे यथाऽनलो दारुणि रुद्धवीर्यः॥६७१॥

चतुर्युगानां च सहस्रमप्सु स्वपन् स्वयं प्रेरितया स्वशक्त्या।
कालाख्ययाऽऽसादितकर्मतन्त्रो लोकानपीतान् [१]ददृशे स्वदेहे॥६७२॥

तस्यार्थसूक्ष्माभिनिविष्टदृष्टेरन्तर्गतोऽर्थो रजसस्तनीयान्।
गुणेन कालानुगतेन सिद्धो नाभिप्रदेशात् सहसोज्जगाम॥६७३॥

स पद्मकोशः सहसोत्थितः सन् कालेन कर्मप्रतिबोधनेन।
स्वरोचिषा तत् सलिलं विशालं व्यद्योतयत् सूर्य इवात्मयोनिः॥६७४॥

तल्लोकपद्मं स उ एव विष्णुः प्रावीविशत् सर्वगुणावभासम्।
तस्मिन् स्वयं वेदमयो विधाता स्वयं भुवं यं स्म वदन्ति सोऽभूत्॥६७५॥

तस्यां सत्त्वाम्भोरुहकर्णिकायामवस्थितो लोकमलोऽभिमानः।
परिक्रमन् व्योम्नि विवृत्तनेत्रश्चत्वारि लेभेऽनुदिशं मुखानि॥६७६॥

तस्माद् युगान्तश्च सनावघूर्णज्जलोर्मिचक्रात् सलिलाद् विरूढम्।
उपाश्रितः कञ्जमुलोकतत्त्वं नात्मानमद्धाऽर्दिददादिदेवः॥६७७॥

क एष योऽसावहमब्जपृष्ठ एतत्कुतो वाब्जमनन्यदप्सु।
अस्ति ह्यधस्तादिह किञ्चनैतदधिष्ठितं यत्र सतानुभाव्यम्॥६७८॥

स एवमुद्वीक्ष्य तदब्जनालनाडीभिरन्तर्जलमाविवेश।
नार्वाग्गतस्तत्खरनालनालनाभिं विचिन्वँस्तदविन्दताजः॥६७९॥

तमस्य पारे तत आत्मसर्गं विचिन्वतोऽभूत्सुमहाँस्त्रिणेमिः।
यो देहभाजां भयमाशु कुर्वन् परिक्षिणोत्यायुरजस्य हेतिः॥६८०॥

ततो निवृत्तोऽप्रतिलब्धकामः स्वधिष्ण्यमासाद्य पुनः स देवः।
शनैर्जितश्वासनिवृत्तचित्तो न्यषीददारूढसमाधियोगः॥६८१॥

---

१. भवानिति शेषः (स ददर्श देहे)।

कालेन सोऽजः पुरुषायुषाऽभिप्रवृत्तयोगेन विरूढबोधः।
स्वयं तदन्तर्हृदयेऽवभातं ददर्श यन्नैक्षत जातु पूर्वम्॥६८२॥

मृणालगौरायतशेषभोगपर्यङ्क एकं पुरुषं शयानम्।
फणातपत्रायुतमूर्धरत्नद्युभिर्हतध्वान्तयुगान्ततोये॥६८३॥

प्रेक्षां क्षिपन्तं हरितोत्पलाद्रेः सन्ध्याभ्रनीवेरुरुरुक्ममूर्ध्नः।
रत्नोदधावौषधिपौष्यकीयवनस्रजो वेणुभुजाङ्घ्रिपाङ्घ्रेः॥६८४॥

आयामतो विस्तरतः [1]स्वमानदेहेन लोकत्रयसंग्रहेण।
विचित्रदिव्याभरणांशुकानां कृतश्रियोपाश्रितवेषदेहम्॥६८५॥

पुंसां स्वकामाय विविक्तमार्गैरभ्यर्चतां कामदुघाङ्घ्रिपद्मम्।
प्रदर्शयन्तं कृपया नखेन्दुमयूखभिन्नाङ्गुलिचारुपात्रम्॥६८६॥

मुखेन लोकार्तिहरोऽस्मि तेन परिस्फुरत् कुण्डलमण्डितेन।
शोणायितेनाधरबिम्बभाषा प्रत्यर्पयन्तं सुनसेन सुभ्रुवा॥६८७॥

कदम्बकिञ्जल्कपिशङ्गवाससा स्वलंकृतं मेखलया नितम्बे।
हारेण चानन्तघनेन कण्ठे श्रीवत्सवक्षःस्थलवल्लभेन॥६८८॥

परार्घ्यकेयूरमणिप्रवेकपर्यस्तदोर्दण्डसहस्रशाखम्।
अव्यक्तमूलं भुवनाङ्घ्रिपेन्द्रमहीन्द्रभोगैरधिवीतवल्शम्[2]॥६८९॥

चराचरौ को भगवन्महीध्रमहीन्द्रबन्धुं सलिलोपगूढम्।
सूर्येन्दुवाय्वग्न्यगमं निधामभिः परिक्रमत्प्राधनिकैर्दुरासदम्॥६९०॥

तर्ह्येव यो नाभिसरः सरोजमात्मानमम्भः श्वसनं वियच्च।
ददर्श देवो जगतो विधाता तं देवदेवं शरणं गतोऽस्मि॥६९१॥

सकर्मबीजं रजसोपरक्तः प्रजाः सिसृक्षन्नियदेव इष्ट्वा।
यं प्राणवत्सर्गपरस्तमीड्यमव्यक्तवर्त्मानमभिप्रपद्ये॥६९२॥

---

१. सु अमानेति छेदः।

२. वलशा अवयवाः।

ज्ञातोऽसि मेऽद्य सुचिरान्ननु देहभाजां न ज्ञायते भगवतो गतिरित्यवद्यम्।
नान्यत्त्वदस्ति भगवन्नपि तन्न शुद्धं मायागुणव्यतिकरं यदुरुर्विभाति।।६९३।।

रूपं यदेतदवबोधरसोदयेन शश्वन्निवृत्तमनस: सदनुग्रहाय।
आदौ ग्रहीतमवतारशतैकबीजं यन्नाभिपद्मभवनाद् विधिराविरासीत्।।६९४।।

नात: परं परमयद् भवत: स्वरूपमानन्दमात्रमविकल्पमविद्धवर्च:।
पश्यामि विश्वसृजमेकमविश्वमात्मन् भूतेन्द्रियात्मकमदस्तदुपाश्रितोऽस्मि।।६९५।।

तद्वा इदं भुवनमङ्गलमङ्गलाय ध्याने निदर्शितमहो त उपासकानाम्।
तस्मै नमो भगवते प्रकरोमि तुभ्यं यो नादृतो नरकभाग्भरसत्प्रसङ्गै:।।६९६।।

ये तु त्वदीयचरणाम्बुजकोशगन्धं जिघ्रन्ति कर्णविवरै: श्रुतिवातनीतम्।
भक्त्या गृहीतचरण: परया च तेषां नापैषि नाथ हृदयाम्बुरुहात् स्वपुंसाम्।।६९७।।

तावद् भयं द्रविणगेहसुहृन्निमित्तं शोक: स्पृहापरिभवो विपुलश्च लोभ:।
तावन्ममेत्यसदवग्रह आर्तिमूलं यावन्न तेऽङ्घ्रिमभयं प्रवृणोति लोक:।।६९८।।

दैवेन ते हतधियो भवत: प्रसङ्गात् सर्वाशुभोपशमनाद् विमुखेन्द्रिया ये।
कुर्वन्ति कामसुखलेशलवाय दीना लोभाभिभूतमनसोऽकुशलानि शश्वत्।।६९९।।

क्षुत्तृट्त्रिधातुभिरिमान् मुहुरर्द्यमानान् शीतोष्णवायुभिरहो इतरे परस्मात्।
कामाग्निनाऽच्युतरुषा च सुदुर्भरेण संपश्यतो मन उरुक्रमनाथ ते मे।।७००।।

यावत्पृथक्त्वमिदमात्मन इन्द्रियार्थे मायाबलं भगवतो जन ईश पश्येत्।
तावन्न संसृतिरसौ विरमत्यपार्था शश्वद्धि दु:खनिवहं ददती क्रियार्था।।७०१।।

अह्न्यावृतत्रिकरणा निशिनि:शयाना नानामनोरथधिया क्षणमग्ननिद्रा:।
दैवा हृतार्थरचना ऋषयोऽपि देव युष्मत्प्रसङ्गविमुखा इह संसरन्ति।।७०२।।

त्वं भावयोगपरिशोधितहृत्सरोजे आस्से श्रुते क्षितिपथो ननु नाथ पुंसाम्।
यद् यद् धिया त उरुगाय विभावयन्ति तत्तद्वपु: प्रणयसे सदनुग्रहाय।।७०३।।

नातिप्रसीदति तथोपचितोपचारैराराधित: सुरगणैर्हृदि बद्धकामै:।
यद्वत्तु भूतदययाऽसदलभ्ययैको नानाजनेष्ववहित: सुहृदन्तरात्मा।।७०४।।

का चिन्ता मम जीवने यदि हरिर्विश्वम्भरो गीयते
नो चेदर्भकजीवनाय जननीस्तन्यं कथं नि:सरेत्।
इत्यालोच्य मुहुर्मुहुर्यदुपते लक्ष्मीपते केवलं
त्वत्पादाम्बुजसेवनेन सततं कालो मया नीयते॥७०५॥

पुंसामतो विविधकर्मभिरध्वरोधे दीनेन चोग्रतपसा व्रतचर्यया च।
आराधनं भगवतस्तव स क्रियाऽर्थो धर्मोऽर्पितो भवति यस्य फलं न बन्ध:॥७०६॥

शश्वत् स्वरूपमहसैव निपीतभेदमोहाय बोधधिषणाय नम: परस्मै।
विश्वोद्भवस्थितिलयेषु निमित्तलीलारासाय ते नम इदं विदधे[1] भवाय॥७०७॥

यस्यावतारगुणकर्मविडम्बनानि नामानि येऽसुविगमे विवशा गृणन्ति।
तेऽनेकजन्मशमलं सहसैव हित्वा संयान्त्यपावृतमृतं तमजं प्रपद्ये॥७०८॥

यो वा विधिश्च गिरिशश्च विभु: स्वपञ्चस्थित्युद्भवप्रलयहेतव आत्ममूलम्।
भित्त्वा त्रिपाद् ववृध एक ऊरुप्ररोहस्तस्मै नमो भगवते भुवनद्रुमाय॥७०९॥

लोको विकर्मनिरत: कुशले प्रमत्त: कर्मण्ययं त्वदुदिते भवदर्चने स्वे।
यस्तावदस्य बलवानिह जीविताशं सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै॥७१०॥

यस्माद् विभेति च विधिर्द्विपरार्धधिष्ण्यमध्यासित: सकललोकनमस्कृतं यत्।
तेपे तपो बहुसवोऽवरुरुत्समानस्तस्मै नमो भगवतेऽधिमखाय तुभ्यम्॥७११॥

तिर्यङ्मनुष्यविबुधादिषु जीवयोनिष्वात्मेच्छयाऽऽत्मकृतसेतुपरीप्सया य:।
रेमे निरस्तरतिरप्यवरुद्धदेहस्तस्मै नमो भगवते पुरुषोत्तमाय॥७१२॥

योऽविद्ययाऽनुपहतोऽपि दशार्धवृत्त्या
निद्रामुवाह जठरीकृतलोकयात्र:।
अन्तर्जले हि कशिपौ मनसोऽनुकूलां
भीमोर्मिमालिनिजनस्य सुखं विवृण्वन्॥७१३॥

---

१. विपूर्वकाद् दधातेर्लडुत्तमैकवचनम्।

यन्नाभिपद्मभवनाद् विधिरास पूर्वं लोकत्रयोपकरणो यदनुग्रहेण।
तस्मै नमस्त उदरस्थभवाय योगनिद्रावसानविकसन्नलिनेक्षणाय।।७१४।।

सोऽयं समस्तजगतां सुहृदेक आत्मा सत्त्वेन यं मृडयते भगवान् भगेन।
तेनैव मे दृशमनुस्पृशताद् यथाऽहं शक्ष्यामि बोद्धुमिदमार्तजनप्रियोऽसौ।।७१५।।

एष प्रसन्नवरदो रमयाऽऽत्मशक्त्या
यद्यच्चकार सुगृहीतगुणावतारः।
तस्मिन् स्वविक्रममिदं सृजतोऽपि चेतो
युञ्जीय कर्मशमलञ्च यथा विजह्याम्।।७१६।।

नाभिह्रदादिह सतोऽम्भसि यस्य पुंसो विज्ञानशक्तिरसकौ विधिराविरासीत्।
रूपं विचित्रमिदमस्य विवृण्वतो मे नैवोपराममधिगच्छतु वाग्विसर्गः।।७१७।।

सोऽसावदभ्रकरुणो भगवान् विवृद्ध-
प्रेमस्मितेन नयनाम्बुरुहं विजृम्भन्।
उत्थाय विश्वविजयाय च नो विषादं
माध्व्या गिराऽपनयतात् पुरुषः पुराणः।।७१८।।

यद् विद्यया तपसा चैव धीराः पश्यन्ति लोकान् हृदयप्रतिष्ठान्।
लोकेषु चैवात्मनि भक्तियुक्तास्तं देवदेवं शरणं प्रपद्ये।।७१९।।

यं सर्वभूतेषु समास्थितं विभुं दारुष्विवाग्निं विततं निरीक्ष्य।
मुञ्चन्ति शोकं हृदि शल्यमर्पितं तं देवदेवं शरणं प्रपद्ये।।७२०।।

यर्हि जीवः परेणात्मना संयुतं स्वस्वरूपं विहीनं गुणैराशयैः।
इन्द्रियैर्भूतसंघैः समुद्वीक्षते तर्हि यं प्रेक्षते तं प्रभुं संश्रये।।७२१।।

य आत्मनामात्मरूपो महीयान् प्रेष्ठश्च यः प्रेयसामादिदेवः।
तस्मिन् सदा परमे मे रतिश्च प्रीतिर्भक्तिर्नुवतः सन्नतिश्च।।७२२।।

पूर्तैस्तपोभिः क्रतुभिर्भूरिदानैर्नानाविधैर्योगसमाधिभिश्च।
आराधितः पुरुषैर्यं प्रसीदत्यहं परं पुरुषं तं प्रपद्ये।।७२३।।

यः सर्ग्यशक्तिमुरुधोच्छ्वसयन् स्वशक्त्या पुंसो भ्रमो यदि विधावति भूतभेदः।
कालाख्यगुणमयं क्रतुभिर्वितन्वन् तस्मै बलिं हरत वत्सरपञ्चकाय॥७२४॥

यो दिनान्ते महासंप्लवे संस्थितोऽनन्तके भोगशय्यागतो माधवः।
योगनिद्रानिमीलद् दृगब्जो जनावासिभिः स्तूयमानो हरिं तं श्रये॥७२५॥

पद्मः कल्पः सौकरश्चापि कल्पः कल्पावेतौ द्विपरार्धं यमाहुः।
अव्यक्तस्यानन्तकस्याप्यनादिर्निमेषमेकं सततं तं नतोऽस्मि॥७२६॥

योऽयं कालो मुनिभिः प्रोक्त एवं परास्वादिर्द्विपरार्धावसानः।
नैवेश्वरो यस्य सर्वस्य यन्ता तं देवानां दैवतं संप्रपद्ये॥७२७॥

यो विकारैर्विशेषादिभिः प्रावृतो योऽर्बुदार्धेन मानेन चैवायतः।
यत्र चान्तर्गताः कोटिशो ह्याणुकास्तत् परं ब्रह्म विश्वस्य बीजं भजे॥७२८॥

यत्परं ज्योतिरीशं सदाऽधोक्षजं सर्वभूतेषु बुद्धौ गुहायां स्थितम्।
विन्दते तापसेनाञ्चितेनाञ्जसा[1] तं प्रपद्ये हरिं सादरं सुन्दरम्॥७२९॥

यः पुरा रोचिषा स्वात्मसंस्थं जगद् भासयन् व्यञ्जयामास तस्मै नमः।
स प्रजा धर्मतः सर्वदा वर्तयन् पातु मां पातु मां पातु मां सर्वतः॥७३०॥

श्रुतस्य पुंसां सुचिरश्रमस्य नन्वञ्जसा सूरिभिरीडितोऽर्थः।
यत्तद्गुणानुश्रवणं मुकुन्दपादारविन्दं हृदयेषु येषाम्॥७३१॥

येषां न तुष्टो भगवान् यज्ञलिङ्गो जनार्दनः सुकृतैः कर्मभिः स्वैः।
तेषां क्रियाः सकला नैव सार्था यतो नात्मा संस्तुतस्तैर्विमूढैः॥७३२॥

उत्क्षिप्तबालः खचरः कठोरः सदा विधुन्वन् खररोमशत्वक्।
खुराहताभ्रः सितदंष्ट्र ईक्षाज्योतिर्य आसीत् स हि पातु भीतेः॥७३३॥

घ्राणेन पृथ्व्याः पदवीं विजिघ्नन् यः क्रोडरूपः स्वयमध्वराङ्गः।
करालदंष्ट्रोऽप्यकरालदृग्भ्यामुद्वीक्ष्य विप्रान् गृणतोऽविशत् कम्॥७३४॥

---

१. तापसेन-तपःसमूहेन। अञ्चितेन पूजितेन।

यत् कूटाङ्गनिपातवेगो विशीर्णकुक्षिः स्तनयन्नुदन्वान्।
उत्सृष्टदीर्घोर्मिभुजैरिवार्तश्चुक्रोश यज्ञेश्वर पाहि मेति॥७३५॥

खुरैः क्षुरप्रैर्दरयंस्तदाप यत्पारपारं बुबुधे रसायाम्।
ददर्श गां तत्र सुषुप्सुरग्रे यां जीवधानीं स्वयमभ्यधत्त॥७३६॥

स्वदंष्ट्रयोद्धृत्य महीं निमग्नां स उत्थितः संरुरुचे रसायाः।
तत्रापि दैत्यं गदयाऽऽपतन्तं सुनाभसन्दीपिततीव्रमन्युः॥७३७॥

जघान रुन्धानमसह्यवेगं सलीलयेभं मृगराडिवाप्सु।
तद्रक्तपङ्काङ्कितगण्डतुण्डो यथा गजेन्द्रो जगतीं विभिन्दन्॥७३८॥

तमालनीलं सितदन्तकोट्या क्ष्मामुत्क्षिपन्तं गजलीलयाऽङ्ग।
प्रज्ञाय बद्धाञ्जलयोऽनुवाकैर्विरिञ्चिमुख्या उपतस्थुरीशम्॥७३९॥

जितं जितं तेऽजितयज्ञभावन त्रयीं तनुं स्वां परिधुन्वते नमः।
यद्रोमगर्तेषु विलिल्युरध्वरास्तस्मै नमः कारणसूकराय ते॥७४०॥

रूपं तवैतन्ननु दुष्कृतात्मनां दुर्दर्शनं देव यदध्वरात्मकम्।
बर्हींषि रोमस्वथ यस्य वेदास्त्वचि स्थिता अक्षिणि यस्य चाज्यम्॥७४१॥

आध्वर्यवं कर्म चतुष्कमङ्घ्र्योर्द्वये द्वये नाथ समाश्रितं ते।
स्रुक् तुण्ड आसीत् स्रुव ईश नासे इडोदरे चमसाः कर्णरन्ध्रे॥७४२॥

प्राशित्रभास्ये [१]ग्रसने ग्रहास्तु यच्चर्वणं तद् भवतोऽग्निहोत्रम्।
दीक्षाऽभिजन्मोपसदः शिरोधरं त्वां प्रायणीयोदयनीयदंष्ट्रः॥७४३॥

जिह्वा प्रवर्ग्यस्तव शीर्षकं क्रतोः सभ्यावसथ्यं चितयोऽसवो हिते।
सोमस्तु रेतः सवनान्यवस्थितिः संस्थाविभेदास्तव देव धातवः॥७४४॥

सत्राणि सर्वाणि शरीरसन्धिस्त्वं सर्वयज्ञक्रतुरिष्टिबन्धः।
नमो नमस्तेऽखिलमन्त्रदेवता द्रव्याय सर्वक्रतवे क्रियात्मने॥७४५॥

---

१. ग्रसने कण्ठे! ग्रहा यज्ञपात्राणि।

नमो मुरारे मधुकैटभारे नमो नृसिंहाय नमो नमस्ते।
वैराग्यभक्त्यात्मजयानुभावितज्ञानाय विद्यागुरवे नमो नमः।।७४६।।

दंष्ट्राग्रकोट्या भगवन् त्वया धृता विराजते भूधरभूः सभूधरा।
यथा जलाग्निः सरतोयतो धृता मतङ्गजेन्द्रस्य सपत्रपद्मिनी।।७४७।।

त्रयीमयं रूपमिदं च सौकरं भूमण्डलेनाथ तथाधृतेन ते।
चकास्ति शृङ्गोदघनेन भूयसा कुलाचलेन्द्रस्य यथैव विभ्रमः।।७४८।।

संपालयैनां जगतां सतस्थुषां लोकाय पत्नीमपि मातरं पिता।
विधेम चास्यै नम इह सह त्वया यस्यां स्वतेजोऽग्निमिवारणा वधाः।।७४९।।

कः श्रद्दधीतान्यतमस्तव प्रभो रसां गताया भुव उद्विवर्हणम्।
न विस्मयोऽसौ त्वयि विश्वविस्मये यो माययेदं ससृजेऽतिविस्मयम्।।७५०।।

विधुन्वता वेदमयं निजं वपुर्जनस्तपःसत्यनिवासिनः सुराः।।
सटाशिखोद्धूतशिवाम्बुबिन्दुभिर्विमृज्यमाना भृशमीशपाविताः।।७५१।।

स वै बत भ्रष्टमतिस्तवैषते[1] यः कर्मणां पार[2]मपारकर्मणः।
यद् योगमायागुणयोगमोहितं विश्वं समस्तं भ[3]गवन् विधेहि शम्।।७५२।।

य एवमेतं हरिमेधसो हरेः स्तवं सुभद्रं कथनीयमायिनः।
शृण्वीत भक्त्या श्रवणेन सत्कथो जनार्दनोऽस्याशु हृदि प्रसीदति।।७५३।।

तस्मिन् प्रसन्ने सकलाशिषां प्रभौ किं दुर्लभं ताभिरलं लवात्मभिः।
अनन्यदृष्ट्या भजतां गुहाशयः स्वयं विधत्ते स्वगतिं परः पराम्।।७५४।।

को नाम लोके पुरुषार्थसारवित् पुराकथानां भगवत्कथासुधाम्।
आपीय कर्णाञ्जलिभिर्भवापहामहो विरज्येत विना नरेतरम्।।७५५।।

यत्कथामृत्युपाशप्रजातान्यहो गीतमौत्तानपादिर्यथा प्रारुहत्।
मृत्युमूर्धन्युपन्यस्य पादं निजं यत्पदं तं हरिं संश्रये [4]सादरम्।।७५६।।

---

१. एषते-अन्वेषते इत्यर्थः। धातूनामनेकार्थत्वात्। एषतेर्भौवादिकस्य लटि रूपम्।
२. विविदिषति इति शेषः; ३. स त्वमिति शेषः।
४. एकत्र पक्षे-आदरपदम्, अपरत्र अदरपदम्।

यत्प्रसादादिदं सम्प्रसीदत्यहो यस्य भासा च विश्वं समाभासते।
स स्वभासा समाभासमानो विभुः संप्रसीदत्वनन्तोऽन्तको यद्वशे॥७५७॥

यत्तोषतो भागवतो महात्मा महानुभावो महतां महिष्ठः।
प्रवृद्धभक्त्या ह्यनुभाविताशयः प्रह्लाद आसीत् स हरिस्तु मे गतिः॥७५८॥

अलम्पटः शीलधरो गुणाकरो हृष्टः परर्द्धर्याऽऽर्तिमितेषु चार्तः।
अभूत शत्रुर्जनशोकहर्त्ता कदा भविष्यामि तवानुभावात्॥७५९॥

अन्तर्बहिश्चामलमब्जनेत्रं स्वपूरुषेच्छानुगृहीतवेषम्।
द्रक्ष्याम्यहं श्रीललनाभिरामं कदा स्फुरत्कुण्डलमण्डितास्यम्॥७६०॥

यः सर्वभूतान्तरवस्थितोऽसौ दीनस्य मे दैन्यमपाकरोतु।
यो देवदेवो जगतो विधाता लोकान् सपालान् परिपाति शश्वत्॥७६१॥

विज्ञानवीर्याय नमो नमस्ते स्वमाययेदं सृजते नमस्ते।
अव्यक्तयोने भगवन्नमस्ते गृहीतगौणाय[1] नमो नमस्ते॥७६२॥

येऽनन्यभावेन भजन्ति सन्ततं पुरातनं त्वां पुरुषं पुराविदः।
निजात्मनि प्रोतभवं तमः परं सताऽसता विग्रहतो निरूपितम्॥७६३॥

सुपक्वयोगैर्जितवायुधीन्द्रिया उपाश्रितास्त्वच्चरणोपधानकाः।
लभन्ति नैवेश कुतश्चिदप्यहो पराभवं भावतया जितक्लमाः॥७६४॥

यस्य वाचा प्रजाः सर्षिका यन्त्रितास्तन्त्रिकाभिर्यथा गाव उन्मत्तिकाः।
संहरन्ते बलिं यत्नतः श्रद्धया तं प्रपद्ये हरिं श्रद्धयाऽश्रद्धया॥७६५॥

शं नो भगवन् [2]भूमरूपो विधत्तां तमोगुणैर्लुप्तसर्वक्रियाणाम्।
अदभ्रया दयया संप्रयुक्तो दृष्ट्येक्षितुं चार्हसि नो विपन्नान्॥७६६॥

यो वैकुण्ठे निलये स्वे निलीनः सर्वैर्लोकैरर्हणीयो विशोके।
सत्त्वं बिभ्रद् विरजस्कं विधूमं स्वान् मोदयत्यरणं तं प्रपद्ये॥७६७॥

---

१. गुणानां समूहो गौणम्।

२. भवानिति शेषः।

यत्रारण्यं नैर्वृतं नाम चान्ते युतं द्रुमैः कामदोहैः सुकल्पैः।
सर्वार्तवश्रीभिरुपेतरूपं कैवल्यमूर्तिं दधदप्रमेयम्॥७६८॥

वैमानिकाः सललनाश्चरितानि यत्र
गायन्ति लोकशमलक्षपणानि भर्त्तुः।
अन्तर्जलेऽनुविकसन् मधुमाधवीनां
गन्धेन खण्डितधियोऽप्यनिलं क्षिपन्तः॥७६९॥

पारावतान्यभृतसारसचक्रवाकदात्यूहहंसशुकतित्तिरिबर्हिणां यः।
कोलाहलो विरमते चिरमात्रमुच्चैर्भृङ्गाधिपे हरिकथामिव गायमाने॥७७०॥

मन्दारकुन्दकुरवोत्पलचम्पकार्णपुंनागनागवकुलाम्बुजकल्पकानाम्।
गन्धेऽर्चिते तुलसिकाभरणेन यस्मिन् तस्मिन् तपः सुमनसो बहु मानयन्ति॥७७१॥

यत्संकुलं हरिपदानतिमात्रदृष्टैर्वैदूर्यमारकतहेममयैर्विमानैः।
येषां बृहत्कटितटाः स्मितशोभिमुख्याः कृष्णात्मनां नरवरा आदधुरुत्स्मयाद्यैः॥७७२॥

श्रीरूपिणी विदधती चरणारविन्दं लीलाम्बुजेन हरिसद्मनि मुक्तदोषा।
संलक्ष्यते स्फटिककुड्य उपेतहेम्नि संमार्जतीव यदनुग्रहणेऽन्ययत्नः॥७७३॥

वापीषु विद्रुमतरास्वमलामृताप्सु प्रैष्यान्विता निजवने तुलसीभिरीशम्।
अर्चन्त्यहो स्वलकमुन्नसमैक्ष्यवक्त्रमुच्छेषितं भगवतेऽतिश्रमान्यतच्छ्रीः॥७७४॥

यत्र व्रजन्त्यघभिदो रचनानुवादाच्छृण्वन्ति येऽन्यविषयाः कुकथा मतिघ्नीः।
यास्तु श्रुता हतभगैर्नृभिरात्तसारास्तांस्तान् क्षिपन्त्यशरणेषु तमःसु हन्त॥७७५॥

येऽभ्यर्थितामपि च नो नृगतिं प्रपन्ना ज्ञानञ्च तत्त्वविषयं न हि धर्मवद्ये।
नाराधनं भगवतो विदधत्यमुष्य संमोहिता विततया बत मायया ते॥७७६॥

यच्च व्रजन्त्यनिमिषेशवरानुवृत्त्या दूरे यमा ह्युपरि नः स्पृहणीयशीलाः।
भर्तुर्मिथः सुयशसः कथनानुरागवैक्लव्यवाष्पकलया पुलकीकृताङ्गाः॥७७७॥

तद् विश्वगुर्वधिकृतं भुवनैकवन्द्यं दिव्यं विचित्रविबुधाढ्यविमानशोभम्।
संप्राप्य चेतसि परां मुदमाप्य योगमायाबलादशरणं शरणं प्रपद्ये॥७७८॥

तस्मिन्नतीत्य च परेशदयानुभावात् षट्कक्षिकाः सवयसावथ सप्तमायाम्।
द्रक्ष्ये कदा नु पुरुषौ प्रगृहीतवेत्रौ केयूरकुण्डलकिरीटविटङ्कवेषौ।।७७९।।

मत्तद्विरेफवनमालिकया निवीतौ विन्यस्तयाऽसितचतुष्टयबाहुमध्ये।
वक्त्रं भ्रुवा कुटिलया स्फुटनिःश्वसेन रक्तेक्षणेन च मनागरभसं दधानौ।।७८०।।

द्वार्येतयोर्हि मिषतोर्विविन्नपृष्ट्वा वेत्रेण वारितगतिर्धृतदण्डपूतः।
द्रक्ष्ये कदा नु सुहृदं पितरं जगत्याः संप्रार्थनाशतमतान्तरनुप्रवेशः।।७८१।।

यत्रान्तरं भगवतीह समस्तकुक्षावात्मानमात्मनि नभो नभसीव नैव।
पश्यन्ति धीरपुरुषा बत तं शरण्यं सर्वात्मनाऽहमरणं शरणं प्रपद्ये।।७८२।।

एवं तदैव भगवानरविन्दनाभः स्वं मां विबुध्य दययाऽश्रुपरिप्लुताक्षः।
योऽन्वेषणीयचरणो महतां मुनीनां स संविधास्यति कदानतके करौ मे।।७८३।।

तं प्राप्तमाप्तपुरुषैः स्वसमानवेषैः संसेव्यमानमनिशं स्वसमाधिभाग्यम्।
हंसश्रियोर्व्यजनयोः शिववायुलोलच्छुभ्रातपत्रशशिकेसरशीकराम्बुम्।।७८४।।

कृत्स्नप्रसादसुभगं स्पृहणीयधामस्नेहावलोककलया हृदि संस्पृशन्तम्।
श्यामे पृथावुरसि संश्रितया श्रिया स्वश्चूडामणिं सुभगयन्तमिवात्मधिष्ण्यम्।।७८५।।

पीतांशुके पृथुनितम्बिनि विस्फुरन्त्या काञ्च्याऽलिभिर्विरुतया वनमालया च।
वल्गुप्रकोष्ठवलयं विनतासुतांसे विन्यस्तहस्तमितरेण धुनानमब्जम्।।७८६।।

विद्युत्क्षिपन्मकरकुण्डलमण्डनार्हगण्डस्थलोन्नसमुखं मणिमत् किरीटम्।
दोर्दण्डखण्डविवरे हरतापराध्यहारेण कन्धरगतेन च कौस्तुभेन।।७८७।।

यत्रोपसृष्टममितं स्मितमिन्दिरायाः स्वानां धिया विरचितं बहुसौष्ठवाढ्यम्।
मह्यं भवस्य भजता च मुदं ददानं संवीक्ष्य सन्नतशिरा नु कदा भवेयम्।।७८८।।

तस्यारविन्दनयनस्य पदारविन्दं किञ्जल्कमिश्रतुलसीमकरन्दवायुः।
अन्तर्गतः खविवरेण कदा करिष्यत्यन्तश्चलं गुणविहीनजुषाऽपि मञ्जुः।।७८९।।

काले कदाऽस्य वदनाऽसितपद्मकोशमुद्वीक्ष्य सुन्दरतराधरकुन्दहासम्।
लब्ध्वाऽऽशिषः पुनरवेक्ष्य तदीयमङ्घ्रिद्वन्द्वं नखारुणमणिश्रयणं श्रयिष्ये।।७९०।।

पुंसां गतिं मृगयतामिह योगमार्गैर्ध्यानास्पदं बहुमतं नयनाभिरामम्।
पौंस्नं वपुः परमहो परमस्य पुंसः पश्यन् कदा नुतिपरः शरणं प्रपत्स्ये॥७९१॥

योऽन्तर्हितो हृदि गतोऽपि दुरात्मनां त्वां सोऽद्यैव नो नयनमूलमनन्तराद्धः।
यर्ह्येव कर्मविवरेण गुहां गतो नः पित्राऽनुवर्णितरहो भवदाश्रितेन॥७९२॥

तत्ते विधाम भगवन् परमात्मतत्त्वं सत्त्वेन संप्रतिरतिं रचयत् समेषाम्।
यत्तेऽनुतापविदितैर्दृढभक्तियोगैरुद्ग्रन्थयो हृदि विदुर्मुनयो विरागाः॥७९३॥

नात्यन्तिकं विगणयन्त्यपि ते प्रसादं किन्त्वन्यदर्पितभयं भ्रुव उन्नयैस्ते।
येऽङ्ग त्वदङ्घ्रिशरणा भवतः कथायाः कीर्तन्यतीर्थयशसः कुशला रसज्ञाः॥७९४॥

कामं भवः स्ववृजिनैर्निरयेषु नस्तच्चेतोऽलिवद्यदि नु ते पदयो रमेत।
वाचश्च नस्तुलसिवद् यदि तेऽङ्घ्रिशोभाः पूर्येत ते गुणगणैर्यदि कर्णरन्ध्रः॥७९५॥

प्रादुष्कृतं च यदिदं पुरुहूतरूपं तेनेशनिर्वृतिमवापुरलं दृशो नः।
तस्मा इदं भगवते नम [१]इद् विदध्मो योऽनात्मनां दुरुदयो भगवान् प्रतीतः॥७९६॥

यस्यामलामृतयशःश्रवणावगाहः सद्यः पुनाति जगदाश्वपचाद् विकुण्ठः।
सोऽसौ महद्भ्य उपलब्धसुतीर्थकीर्तिर्मां पावयत्वनुदिनं प्रतिकूलवृत्तिम्॥७९७॥

त्वत्पादपद्मपरिचिन्तनपूतचित्तं सद्यः क्षताखिलमलं प्रतिलब्धशीलम्।
सन्तो न मां जहति सोऽयमधीश्वरो मे दीनस्य दैन्यमतुलं सततं दुनोतु॥७९८॥

न त्वं तथाऽत्सि यजमानहविर्विताने श्चोतद्घृतप्लुतमदन्हुतभुङ्मुखेन।
यद् ब्राह्मणस्य मुखतश्चरतोऽनुघासं त्वय्यर्पितैर्निजकृतैः परिलब्धतुष्टेः॥७९९॥

येषां बिभर्षि भगवँस्त्वमखण्डयोग-
मायाविभूतिरमलाङ्घ्रिरजःकिरीटैः।
विप्राँस्तु को न विसहेत यदर्हणाम्भः
सद्यः पुनाति सह चन्द्रललामलोकम्॥८००॥

ये ते तनूर्द्विजवरान् दुहतीस्तु कामान्
भूतान्यलब्धशरणानि च भेदबुद्ध्या।
द्रक्ष्यन्त्यघक्षतदृशो ह्यहिमन्यवस्तान्
गृध्ना रुषा तव कुषन्त्यधिदण्डनेतुः॥८०१॥

---

१. एति भगवन्तं प्राप्नोति इति इद्—इदं नम इत्यस्य विशेषणम्।

ये ब्राह्मणान् त्वयि धिया क्षिपतोऽर्चयन्त-
स्तुष्यद्धृदः स्मितसुधोक्षितपद्मवक्त्राः।
वाण्यानुरागकलयाऽऽत्मजवद् गृणन्तः
संबोधयन्ति ननु तुष्यसि नाथ तेषाम्॥८०२॥

यं वै विभूतिरुपयात्यनुवेलमन्यै-
रर्थार्थिभिः स्वशिरसा धृतपादरेणुः।
धन्याऽर्पिताङ्घ्रितुलसीनवदामधाम्नो
लोकं मधुव्रतपतेरिव कामयन्ती॥८०३॥

यस्तां विविक्तचरितैरनुवर्तमानां
नाथानुयासि नहि भागवतप्रसक्तः।
सत्त्वं द्विजानुपथपुण्यरजःपवित्रः
श्रीवत्सलक्ष्म किमु धारयते हि कण्ठे॥८०४॥

धर्मस्य ते भगवतस्त्रियुगे त्रिभिः स्वैः
पद्भिश्चराचरमिदं द्विजदेवतार्थम्।
नूनं भृतं तदभिघाति रजस्तमश्च
सत्त्वेन नो वरद तद्वपुषा निरस्य॥८०५॥

न त्वं द्विजोत्तमकुलं यदिहात्मगोप्ता-
समर्हणयुतेन न तु सूनृतेन।
तर्ह्येव नङ्क्ष्यति शिवस्तव देव पन्था
लोकोऽग्रहीष्यदिह ते चरणं प्रमाणम्॥८०६॥

तत्तेऽनभीष्टमिव सत्त्वनिधेर्विधित्सोः
क्षेमं जनाय निजशक्तिभिरुद्धृतोरः।
नैतावता त्र्यधिपतेर्बत विश्वभर्तु-
स्तेजः क्षतं त्ववनतस्य स ते विनोदः॥८०७॥

विश्वस्य यः स्थितिलयोद्भवहेतुराद्यो
योगेश्वरैरपि दुरत्यययोगमायः।
श्रेयो विधास्यति स नो भगवांस्त्र्यधीश-
स्तत्रास्मदीयविमृशेन कियानिहार्थः॥८०८॥

नमो नमस्तेऽखिलयज्ञतन्तवे स्थितौ गृहीतामलसत्त्वमूर्तये।
दिष्ट्या हतोऽसौ जगतामरुन्तुदस्त्वत्पादभक्त्या वयमीश निर्वृताः॥८०९॥

यो वै हिरण्याक्षमसह्यविक्रमं संस्थाप्य देवो हरिरादिसूकरः।
जगाम लोकं स्वमखण्डितोत्सवं तं दीनबन्धुं शरणं प्रपद्ये॥८१०॥

ग्राहग्रस्तं यो गजेन्द्रं पुराऽपाद् ध्यायन्तं तत्पादपद्मं हृदब्जे।
क्रोशन्तीनां करिणीनां दुरापो योऽमोचयत् शरणं तं गतोऽस्मि॥८११॥

सुखाराध्यं सरलैर्मानवैस्तं दुराराधं दुर्जनैर्दुष्टचित्तैः।
को न प्रभुं सेवेत तत्कृतज्ञो यो दीनानां विपदं संदुनोति॥८१२॥

यो वै हिरण्याक्षवधं महाद्भुतं विक्रीडितं कारणसूकरात्मनः।
शृणोति गायत्यनुमोदतेऽञ्जसा विमुच्यते ब्रह्मवधादपि द्विजाः॥८१३॥

एतन्महापुण्यमलं पवित्रं धन्यं यशस्यं पदमायुराशिषम्।
प्राणेन्द्रियाणां युधि शौर्यवर्धनं नारायणोऽन्ते गतिरङ्ग शृण्वताम्॥८१४॥

यो लोकानां क्लिश्यमानाशयानां नानाविधैः स्वकृतैः कर्मजालैः।
एको देवः क्लेशनाथस्य हेतुस्तं क्लेशदं विमुखानां प्रपद्ये॥८१५॥

मद्ध्यानगो भवताद् विश्वरूपो रविप्रभो विरजाः पीतवासाः।
श्रीवासुदेवः सितपद्मोत्पलस्रक् स्निग्धैर्नीलैरलकैर्वीतवक्त्रः॥८१६॥

किरीटिनं कुण्डलिपूर्णकर्णं शंखं चक्रं गदिकामादधानम्।
श्वेतोत्पलक्रीडनकप्रहस्तं शस्तं सुरैः शरणं यामि दीनः॥८१७॥

मनः स्पर्शस्मितवीक्षाभिरामं विन्यस्तपादाम्बुजमंसदेशे।
गरुत्मतो मे दहराकाशसंस्थं प्रभुं प्रपद्ये परमाकाशकाशम्॥८१८॥

ये मायया ते हतमेधसस्त्वत्पादारविन्दं भवसिन्धुपोतम्।
उपासते कामलवाय तेषां राशीश कामान्निरयेऽपि ये स्यु:।।८१९।।

अहं तु नाथ त्वयि बद्धभावो गार्हस्थ्यभारं परिवोढुकाम:।
उपेयिवान् मूलमशेषमूलं दुराशय: कामदुघाङ्घ्रिपस्य।।८२०।।

प्रजापतेस्ते वचसाऽधीश तन्व्या लोक: किलायं कामहतोऽनुबद्ध:।
अहं च लोकानुगतो वहामि बलिं च शुक्लानिमिषाय तुभ्यम्।।८२१।।

लोकाँश्च लोकानुगतान् पशूँश्च हित्वा श्रितास्ते चरणातपत्रम्।
परस्परं त्वद्गुणवादसीधुपीयूषनिर्यापितदेहधर्मा:।।८२२।।

न तेऽजराक्षभ्रमिरायुरेषां[1] त्रयोदशारं त्रिशतात्षष्टिपर्व।
षण्नेम्यनन्तच्छदि यत् त्रिणाभिकरालस्त्रोतो जगदाच्छिद्य धावन्।।८२३।।

एक: स्वयं सञ्जगत: सिसृक्षया द्वितीययाऽऽत्मन्यधियोगमायया।
सृजस्यद: पासि पुनर्हरिष्यसे यथोर्णनाभिर्भगवन् स्वशक्तिभि:।।८२४।।

नैतद् बताधीशपदं तवेप्सितं यन्मायया नस्तनुषे भूतसूक्ष्मम्।
अनुग्रहायास्त्वयि यर्हि मायया लसत्सुदाम्ना वपुषा विलक्षित:।।८२५।।

तं त्वानुभूत्योपरतक्रियार्थं स्वमायया वर्तितलोकतन्त्रम्।
नमाम्यभीक्ष्णं नमनीयपादसरोजमल्पीयसि कामवर्षम्।।८२६।।

इत्यव्यलीकं प्रणुतोऽब्जनाभो मा[2] मा बभाषे वचसाऽमृतेन।
सुपर्णपक्षोपरि रोचमान: प्रेमस्मितोद्वीक्षणविभ्रमद्भ्रू:।।८२७।।

विप्रब्रुवाऽहं तव चैत्तमेतत् सर्वं विदित्वा मनसा पुरैव।
अयूयुजं ते मनसोऽनुरूपं यदर्थमात्मा नियमै: क्षतस्ते।।८२८।।

न जातु भूदेवसमर्हणं मम त्वया कृतं स्यात् फललोपि सादरम्।
न च प्रहातुं प्रणयात् समीयुष: कदाचिदीशे ननु दुष्कृतोऽप्यहम्।।८२९।।

---

१. आयुरिति अध्याहृतस्य छिनत्ते: कर्म। काल: कर्ता।
२. अत्रापि पूर्ववत् लिट्प्रयोग:। मे इति च शेष:।

निरीक्षमाणस्य [१]ययावशेषसिद्धेश्वराभिष्टुतसिद्धमार्गः।
आकर्णयन् पत्ररथेन्द्रपक्षैरुच्चारितं स्तोममुदीर्णसाम॥८३०॥

यतोऽभवद् विश्वमिदं विचित्रं संस्थास्यते यत्र च वावतिष्ठते।
प्रजापतीनां पतिरेष मह्यं दिशत्वनन्तं कुशलं ह्यनन्तः॥८३१॥

यस्य रम्याः कथाः शृण्वतां ध्यायतां कुर्वतां कथाः स्नेहसिक्तात्मनाम्।
श्रद्धयाऽश्रुप्रवाहोद्वहच्चक्षुषां यान्ति यामाः सतां तं हरिं संश्रये॥८३२॥

यस्यासक्त्या गुणबाधास्तरन्ते क्लेशान् दिव्यान् मानुषान् मानसांश्च।
कायोद्भवान् भौतिकाँश्चैव सर्वान् तं भूतानां शरणं सम्प्रपद्ये॥८३३॥

यैस्तीर्थपादस्य पदं समाश्रितं नृभिः सदाऽसद्व्यसनार्णवात्ययम्।
तेषां दुरापं नहि विद्यते भवे हरेः प्रसादं परमभ्युपेयुषाम्॥८३४॥

या योगर्द्धिः कर्दमस्य प्रजाता स्वान्तग्रन्थ्युन्माथिनी शुक्लभक्तेः।
तां खिन्दते दीनदीनाय मह्यं दयासिन्धुर्दीनबन्धुर्ददातु॥८३५॥

यो मायया॒ऽवातरत् कर्दमस्य गेहेऽनादिः पुरुषो विश्वरूपः।
तं भूतानां शेवधिं देहमार्षं संविभ्रतं कपिलं संप्रपद्ये॥८३६॥

यो ज्ञानविज्ञानबलेन योगी हरन् जटाः कर्मणामुग्ररूपाः।
हिरण्यकेशः पद्ममुद्रापदाब्जो जातोऽब्जदृक् कपिलं तं प्रपद्ये॥८३७॥

त्वां सूरिभिस्तत्त्वबुभुत्सयाऽद्धः सदाऽभिवादार्हणपादपीठम्।
ऐश्वर्यवैराग्ययशोऽवबोधवीर्यश्रिया पूर्णमहं प्रपद्ये॥८३८॥

परं प्रधानं पुरुषं महान्तं कालं कविं त्रिवृतं लोकपालम्।
आत्मानुभूत्यानुगतप्रपञ्चं स्वच्छन्दशक्तिं कपिलं प्रपद्ये॥८३९॥

अहं तु याचेऽद्य पतिं प्रजानां बतावतीर्णार्ण उताप्तकामः।
परिव्रजत्पदवीं संदिश त्वां यया चरिष्ये हृदि युञ्जन् विशोकः॥८४०॥

---

१. अवश्यभविष्यत्त्वरूपं भूतत्वमादायायं लिट्प्रयोगः।

यस्य जन्म महनीयमद्भुतं तत्त्वसन्मतिफलं विपश्चिताम्।
आत्मदर्शनविधौ विनिश्चितं कार्दमिं श्रयत साधवो मुनिम्॥८४१॥

येनाऽव्यक्तः कालवेगेन नष्टः पराश्रितोऽध्यात्ममार्गो महीयान्।
प्रवर्तितः कर्दमाद् देहभाजा तं साधवः श्रयतासद्दुरापम्॥८४२॥

यस्मिन् धीराः कर्म संन्यस्य सर्वं सुदुर्जयं मृत्युमहो जयन्तः।
शान्ता भजन्त्यमृतत्वाय कामं सिद्धेश्वरं कपिलं तं प्रपद्ये॥८४३॥

यमात्मानं सर्वभूताशयस्थं स्वयं ज्योतिश्चात्मनाऽऽत्मन्यवेक्ष्य।
भयं तीर्णाः सम्भजन्ते विशोका ऋषिं कविं कपिलं तं प्रपद्ये॥८४४॥

मौनं व्रतं संश्रयन्तो ह्यसंगा आत्मारामा मुनयो मुक्तगेहाः।
अनग्नयो यत्र मनो दधाना महीं चरन्त्यरणं तं प्रपद्ये॥८४५॥

सतोऽसतश्चैव परे परस्मिन् गुणावभासे विगुणेऽपि भक्त्या।
विभाविते ब्रह्मणि बद्धभावा द्वन्द्वैर्विमुक्ता अनहंकृताश्च॥८४६॥

ममत्वहीनाः समदर्शिनो ये स्वदर्शिनः शान्तधियश्च दान्ताः।
प्रत्यक्स्वरूपे धिषणां दधानाः पश्यन्ति यं तं शरणं प्रपद्ये॥८४७॥

समागतस्त्वां शरणं शरण्यं स्वभृत्यसंसारतरोः कुठारम्।
जिज्ञासयाऽहं प्रकृतेः पूरुषस्य नमानि सद्धर्मविदां वरिष्ठम्॥८४८॥

सतां प्रसङ्गात्तव वीर्यसंविदो भवन्ति हृत्कर्णरसायनाः कथाः।
तज्जोषणादाश्वपवर्गवर्त्मनि श्रद्धारतिर्भक्तिरनुक्रमिष्यति॥८४९॥

भक्त्या पुमान् जातविराग ऐन्द्रियाद् दृष्टश्रुतात् त्वद्रचनानुचिन्तया।
चित्तस्य मत्तो ग्रहणे योगयुक्तो यतिष्यते ऋजुभिर्योगमार्गैः॥८५०॥

असेवयाऽयं प्रकृतेर्गुणानां ज्ञानेन वैराग्यविजृम्भितेन।
योगेन त्वय्यर्पितया च भक्त्या त्वां प्रत्यगात्मानमिवावरुन्धे॥८५१॥

नैकात्मतां ते स्पृहयन्ति केचित्त्वत्पादसेवाभिरतास्त्वदीहाः।
येऽन्येऽन्यतो भागवताः प्रसज्य सभाजयन्ते तव पौरुषाणि॥८५२॥

पश्यन्ति ते ते रुचिराणीश सन्तः प्रसन्नवक्त्रारुणलोचनानि।
रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहणीयां वदन्ति।।८५३।।

तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवल्गुसूक्तैः।
हृतात्मनां भक्तिरनिच्छतां ते परां प्रभो गतिमाण्वीं प्रयुङ्क्ते।।८५४।।

अथो विभूतिं तव मायाविनस्तामैश्वर्यमष्टाङ्गमनुप्रयुक्तम्।
श्रियं च भद्रां स्पृहयन्ति भद्राः परस्य ते तेऽश्नुवते च लोके।।८५५।।

न कर्हिचित् त्वत्पराः शान्तरूपा नङ्क्ष्यन्ति नो तेऽनिमिषो लेढि हेतिः।
येषां प्रभो प्रिय आत्मा सुतस्त्वं सखा गुरुः सुहृदो दैवमिष्टम्।।८५६।।

इमं लोकं परकञ्चैव लोकं स्वात्मानञ्चाप्युभयत्रानुयातम्।
आत्मानं येऽनुगता वित्तगेहा रायःसुताः पशवो ज्ञातयश्च।।८५७।।

विसृज्य सर्वा नितरांश्चैव भावान् त्वां देवमिष्टं विश्वतो वर्तमानम्।
भजन्ति भक्त्याऽनन्ययाऽनन्यचित्तास्तान्नो मृत्युर्भीषयत्युग्ररूपः।।८५८।।

त्वत्तोऽन्यतो नैवं भयं निवर्तते प्रधानकालेश्वरतोऽसतां भयात्।
यः सर्वभूतेषु समाश्रितः सखा धियो नियुङ्क्ते परमर्द्धिलब्धये।।८५९।।

यतो भीतो वाति वातः सदाऽयं सूर्यस्तपत्यनिशं यस्य भीतः।
मृत्युश्चरत्यखिलं लोकमश्नन् दहत्यग्निर्वर्षतीन्द्रोऽतिभीतः।।८६०।।

ज्ञानं भक्तिं परमं वै विरागं समाश्रिता योगिनो ह्यप्रमत्ताः।
क्षेमायते पादमूलं विशोकं प्रविश्य निर्वाणमुपाश्रयन्ति।।८६१।।

एतावान्परमोऽयं हि लोके पुंसामस्मिन्नुदयः श्रेयसोऽस्ति।
तीव्रां भक्तिं यत्समाश्रित्य शुद्धं मनोऽर्पयत्त्वय्यनन्ते परस्मिन्।।८६२।।

अनादिरात्मा पुरुषो निर्गुणो यः परः प्रकृत्याः परमो विश्वरूपः।
प्रत्यग्धामा स्वप्रकाशो निरीहस्तं देवानां दैवतं सम्प्रपद्ये।।८६३।।

यः सत्त्वानामन्तरस्मिन् निविष्टः परः पुमान् प्रोच्यते ह्यव्ययात्मा।
बहिश्च तिष्ठन् कालरूपेण भूमा स मे देवः संप्रसीदत्वनन्तः।।८६४।।

यं पौरुषं कालमेके प्रभावं यतो भयं श्वसतां नः समस्ति।
वदन्त्यन्ये चेष्टते येन विश्वं तं विश्वेषां कारणं सम्प्रपद्ये॥८६५॥

यः क्षुब्धायां प्रकृतौ दैवयोगात्[1] कालोऽव्ययः पुरुषो निर्विशेषः।
आद्यन्तवीर्यं प्रतिबिम्बं यतोऽभून्महत्तत्त्वं पुरुषं तं प्रपद्ये॥८६६॥

यो वै महान् पुरुषः सूक्ष्मरूपो यस्मिन्निदं विश्वमन्तर्निविष्टम्।
यो व्यञ्जयन् तमसा गूढमग्रेऽपिबत्तमः स्वापनं तं प्रपद्ये॥८६७॥

यत्तत्स्वच्छं सत्त्वगुणोपपन्नं पदं हरेर्जगतः कारणं यत्।
ब्रह्माणमीशं कमलासनस्थं चित्तं यमाहुर्ऋषयस्तं नतोऽस्मि॥८६८॥

यो वै विराजं पुरुषं ब्रह्मजातो ब्रह्माऽसृजद्भूतसंघप्रधानम्।
मनोऽक्षवत् सर्वतः पाणिपादं सहस्रकं तमहं सम्प्रपद्ये॥८६९॥

यं विश्वेऽस्मिन् प्रत्यगात्मानमन्तः स्थितं धिया योगतो वृत्तिमत्या।
विरक्तितो भक्तितो ज्ञानतो वा विचिन्वते पुरुषं तं नतोऽस्मि॥८७०॥

यः प्राकृतः पुरुषो निर्गुणत्वादविक्रियोऽकर्तृरूपः प्रशान्तः।
न लिप्यते प्राकृतैर्धर्मदोषैः सदा शुद्धं तमहं सम्प्रपद्ये॥८७१॥

यस्या दृष्ट्याऽहं क्रियामूढचेता अहं कर्त्ताऽनीश इत्यभ्युपेतः।
सांसारिकैर्बध्यते कर्मपाशैस्तं प्रत्यगात्मानमहं सम्प्रपद्ये॥८७२॥

सशंखचक्रं सकिरीटकुण्डलं सपीतवस्त्रं सरसीरुहेक्षणम्।
सहारवक्षस्थलकौस्तुभश्रियं नमानि विष्णुं शिरसा चतुर्भुजम्॥८७३॥

ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः।
केयूरवान् कटककुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः॥८७४॥

शनैश्चित्तं संप्रसक्तं ह्यमार्गे वशं नीत्वा तीव्रभक्त्या विरक्त्या।
यमादिभिर्योगपथैरनेकैः श्रद्धान्विता त्वयि भावेन बद्धाः॥८७५॥

---

१. दैवं = जीवादृष्टम्।

सत्येन त्वच्चरितानाञ्च श्रुत्या सर्वेषु भूतेषु समत्वदृष्ट्या।
निर्वैरिणासङ्गतो ब्रह्मचर्याद् मौनेन युक्ताः स्वस्य धर्मं चरन्तः॥८७६॥

यदृच्छया चोपलब्धेन तुष्टा मिताशना मुनयः शून्यसेवाः।
शान्ता मैत्राः करुणा आत्मवन्तो देहे चास्मिन् सानुबन्धे विरक्ताः॥८७७॥

पुंसः प्रकृत्याः परमन्वभेदं प्रपश्यन्तः सर्वतः सन्निवृत्ताः।
अद्वैतेन द्वैतबुद्धिं त्यजन्तः पश्यन्ति यं पुरुषं तं प्रपद्ये॥८७८॥

यथा जलस्थः स्वस्य चैवावभासः संदृश्यते स्थलसंस्थेन पुंसा।
यथा येनाहंकृतौ स्वावभासः संदृश्यते पुरुषं तं नतोऽस्मि॥८७९॥

यदा न योगोपचितासु चेतो मायासुसिद्धस्य विसज्जतेऽङ्ग।
अनन्यहेतुष्वथ ते गतिः स्यादात्यन्तिकी यत्र न मृत्युहासः॥८८०॥

शक्त्या स्वधर्माचरणेन नित्यं विधर्मतश्चैव निवर्तनेन।
दैवोपलब्धेन च तुष्टिरात्माभिज्ञस्य पुंसः चरणार्चनेन॥८८१॥

ग्राम्याच्च धर्माद् विनिवृत्तिमत्या मत्या सदा मेध्यमिताशनेन।
शश्वद् विविक्ताश्रमसेवया चाहिंसातपोभ्यां श्रुतशौचसत्त्वैः॥८८२॥

अस्तेयमौनासनदार्ढ्यवत्या प्राणस्य जित्या पुरुषार्चनेन।
सर्वेन्द्रियाणां विषयात्प्रतीपं प्रत्याहृतेः प्राणविधारणेन॥८८३॥

वैकुण्ठलीलास्मरणेन नित्यं समाधिना मनसोऽनारतेन।
यं वीक्षितुं पुरुषं संयतन्ते तं दीनबन्धुं शरणं प्रपद्ये॥८८४॥

प्राणस्य मार्गं परिशोधयन्तः पूरेण कुम्भेन च रेचकेन।
प्रतीपतो वा मनसः स्थिरत्वं संपादयन्तो जितवायुवेगाः॥८८५॥

दोषान् दहन्तः पवनस्य रोधैः पापानि सर्वाणि च धारणाभिः।
सङ्गञ्च सर्वेन्द्रियवृत्तिरोधाद् ध्यानेन दैन्यं प्रविहाय तुष्टाः॥८८६॥

ध्यायन्ति यं पुरुषं मुक्तकामाः स्वनासिकाग्रं प्रविलोकयन्तः।
सुनिश्चलाः संवृतास्याः प्रशान्तास्तं दीनबन्धुं शरणं प्रपद्ये॥८८७॥

प्रसन्नवक्त्राम्बुजमम्बुजेक्षणं　नवीननीलोत्पलकान्तिकान्तिकम्।
सशङ्खचक्रं करकौमुदीधरं प्रसादये त्वां पुरुषं पुरातनम्।।८८८।।

प्रफुल्लपद्मान्तरकोशसङ्गतप्रपीतकिञ्जल्कपिशङ्गवाससम्।
श्रीवत्सभृद्वक्षसमग्निविक्रमं प्रसादये त्वां पुरुषं पुरातनम्।।८८९।।

विभ्राजता कौस्तुभेनाढ्यकण्ठं वन्यां मालां मत्तभृङ्गां दधानम्।
परार्ध्यहाराङ्गदकङ्कणाद्यैर्विभूषितं　काञ्चनकाञ्चिकेद्धम्।।८९०।।

मदीयहृत्सद्मनि सन्निविष्टं शान्तं मनोनयनस्य प्रहर्षम्।
प्रभुं श्रये मणिमन्मौलिजुष्टं कैशोरके वर्त्मनि वर्तमानम्।।८९१।।

शयानमासीनमुत व्रजन्तं स्थितं विभुं प्रेक्षणीयाङ्गचेष्टम्।
संचिन्तये चेतसा निर्मलेन स्वभृत्यभीतं सुदृशा हरन्तम्।।८९२।।

सञ्चिन्तये भगवतश्चरणारविन्दं वज्राङ्कुशध्वजसरोरुहलाञ्छनाढ्यम्।
उत्तुङ्गरक्तविलसन्नखचक्रवालज्योत्स्नाभिराहतमहद्धृदयान्धकारम्।।८९३।।

यच्छौचनिःसृतसरित् प्रवरोदकेन
　　तीर्थेन मूर्ध्न्यधिकृतेन शिवः शिवोऽभूत्।
ध्यातुर्मनःशमलशैलनिसृष्टवज्रं
　　संचिन्तये चिरमहं भवतः पदाब्जम्।।८९४।।

जानुद्वयं जलजलोचनया जनन्या
　　लक्ष्म्याऽखिलस्य सुरवन्दितया विधातुः।
उर्वोर्निधाय करपल्लवरोचिषा यत्-
　　संलालितं हृदि विभोरभवस्य कुर्याम्।।८९५।।

उरुसुपर्णभुजयोरधिशोभमाना-
　　वोजोनिधी तुलसिकाकुसुमावभासौ।
व्यासक्तपीतवरवाससि लम्बमानात्
　　सत्कञ्चुकेन कलितौ परिचिन्तयामि।।८९६।।

नाभिह्रदं भुवनकोशगुहोदरस्थं
यत्रात्मयोनिधिषणाऽखिललोकपद्मम्।
व्यूढं हरिन्मणिनिभं स्तनयोरमुष्य
संचिन्तये द्वयमहं मणिहारगौरम्।।८९७।।

वक्षोऽधिवासमृषभस्य महाविभूतेः
पुंसां मनोनयननिर्वृतिमादधानम्।
कण्ठं च कौस्तुभमणेरधिभूषणार्थं
कुर्यां मनस्यखिललोकनमस्कृतस्य।।८९८।।

बाहूँश्च मन्दरगिरेः परिवर्तनेन
निर्णिक्तकङ्कणवरानधिलोकपालान्।
संचिन्तये दशशतारमसह्यतेजः
शङ्खञ्च तत्करसरोरुहराजहंसम्।।८९९।।

संचिन्तये भगवतो दयितां गदाञ्च
कौमोदकीं दितिजशोणितकर्दमेन।
लिप्तां मधुव्रतवरूथगिरोपघुष्टां
मालाञ्च तत्त्वममलं मणिमस्य कण्ठे।।९००।।

भृत्यानुकम्पितधियेह गृहीतमूर्तेः
संचिन्तये भगवतो वदनारविन्दम्।
यद्विस्फुरन्मकरकुण्डलवल्गितेन
विद्योतितामलकपोलमुदारनासम्।।९०१।।

यच्छ्रीनिकेतमलिभिः परिसेव्यमानं
भूत्या स्वया कुटिलकुन्तलवृन्दजुष्टम्।
मीनद्वयाश्रयमधिक्षिपदब्जनेत्रं
संचिन्तये हृदि सुतन्द्रितमुल्लसद्भ्रूः।।९०२।।

तस्यावलोकमधिकं कृपयाऽतिघोर-
तापत्रयोपशमनाय निसृष्टमक्ष्णोः।
स्निग्धस्मितानुगुणितं विपुलप्रसादं
संचिन्तये विपुलभावनया गुहायाम्॥१०३॥

हासं हरेरवनताखिललोकतीव्र-
शोकाश्रुसागरविशेषणमत्युदारम्।
संमोहनाय रचितं निजमाययाऽस्य
भ्रूमण्डलं मुनिकृते[1] मकरध्वजस्य॥१०४॥

ध्यानायनं प्रहसितं बहुलाधरोष्ठ-
भासाऽरुणायिततनुर्द्विजकुन्दपङ्क्तिः।
संचिन्तये स्वहृदये [2]प्रमितस्य विष्णो-
र्भक्त्याऽऽर्द्रयाऽर्पितमना न पृथग् विलोके॥१०५॥

एवं हरौ भगवति प्रतिलब्धभावो
भक्त्या द्रवद्धृदय उत्पुलकः प्रमोदात्।
औत्कण्ठ्यवाष्पकलया मुहुरर्द्यमानो
लोकैरलक्षितगतिर्भुवि संचरिष्ये॥१०६॥

मुक्ताश्रयं ह्यविषयं विषयाद् विरक्तं
निर्वाणमृच्छतु मनः सहसा यथाऽर्चिः।
आत्मानमव्यवहितं विनिवृत्तभेदं
वीक्षे कदा प्रतिनिवृत्तगुणप्रवाहः॥१०७॥

सोऽहं तया चरमया मनसो निवृत्त्या तस्मिन् महिम्न्यवसितः सुखदुःबाह्ये।
हेतुत्वमप्यसति कर्तरि [3]दुःखयोर्यत् त्यक्ष्यामि तत् समुपलब्धपरात्मकाष्ठः॥१०८॥

---

१. तपस्यतां मुनीनां कृते विघ्नकृतो मकरध्वजस्य सम्मोहनाय निजमायया रचितं भूमण्डलं सञ्चिन्तय इति योजना।

२. परिच्छन्नस्येत्यर्थः।

३. सुखमपि दुःखानुविद्धमिति दुःखमेवेति द्विवचनोपादानम्।

देहञ्च तं न चरमं स्थितमस्थितं वा
द्रक्ष्यामि चात्मनि निविष्टमना नितान्तम्।
दैवादुपेतमथ दैववशादपेतं
वासो यथा परकृतं मदिरामदान्धः॥९०९॥

देहोऽपि दैववशगः खलु कर्म यावत्
स्वारम्भकं प्रतिसमीक्षत एव सासुः।
तं सप्रपञ्चमधिरूढसमाधियोगः
स्वाप्नं पुनर्नहि भजे प्रतिबुद्धवस्तुः॥९१०॥

यथा पुत्रात् सञ्चिताच्चैव वित्तात् पृथङ् मर्त्यो ज्ञायते ह्यप्रबुद्धैः।
तथात्मत्वेनाभिमतात् स्वदेहात् पृथक् पुमान् चितिरूपोऽस्मि वित्तः॥९११॥

सर्वाणि भूतान्यपि आत्मनीक्षे स्वात्मन्यथो भूतमयं प्रपञ्चम्।
अनन्यभावो नहि मे द्वितीयस्त्वं मे [1]तवाऽहं[2] नहि नो विभागः॥९१२॥

यथा स्वयोनिष्वनलो निविष्टो नानारूपो भासते योनिभेदैः।
आत्मा तथा त्वं प्रकृतौ निविष्टो विज्ञायसे बहुधा भूतभेदैः॥९१३॥

तस्मादहं प्रकृतिं स्वां तु दैवीं शक्तिं चित्रां सदसद्रूपतत्त्वाम्।
दुरुच्छेदां संपराभाव्यबुद्ध्या त्वां मुक्तिकामः शरणं श्रयिष्ये॥९१४॥

लोकस्य मिथ्याऽभिमतेरचक्षुषश्चिरं प्रसुप्तस्य तमस्य पारे।
श्रान्तस्य कर्मस्वनुविद्धया धिया त्वं नाथ वित्तः किल योगभास्करः॥९१५॥

त्वां माधवैकं वरमीश याचे नान्या स्पृहास्ते हृदये मदीये।
भवद्गुणानां श्रवणैर्निरूढा भक्तिः सदा स्यान्मनसोऽनिरुद्धा॥९१६॥

यो भक्तियोगेन वरेण कर्मणा स्ववर्णधर्मेण दयावता सता।
स्वधिष्ण्यसंदर्शनपूजनादिभिः संप्राप्यते तं पुरुषोत्तमं नुमः॥९१७॥

---

१. कल्पितोंऽशी इति शेषः।
२. कल्पितोंऽश इति शेषः।

भूतेषु ते भावनया विशुद्धसत्त्वेन सङ्गस्य च वर्जनेन।
सत्सेवया दीनदयार्द्रदृष्ट्या मैत्र्या स्वतुल्येषु यमादिभिश्च॥९१८॥

आध्यात्मिकानुश्रवणाच्च नित्यं त्वन्नाम संकीर्तनतो विरक्त्या।
अप्यार्जवेनार्यसमागमेन स्वाहंक्रियायाः परिवर्जनेन॥९१९॥

एतैर्गुणैः संपरिशुद्धचित्ताः तव प्रियाः पुरुषाः पुण्यरूपाः।
त्वां प्राप्नुवन्त्याशु निवृत्ततर्षा हर्षाश्रुवर्षाः कृतकल्ककर्शाः॥९२०॥

यथा गन्धो वायुना संविभक्तो हित्वाऽऽधारं भजते घ्राणमद्धा।
एवं चेतो योगवेगेन नुन्नं हित्वाऽऽधारं भजते त्वां विशोकम्॥९२१॥

सर्वेषु भूतेषु वसन्तमाराद् हित्वा जने योऽर्चयतेऽर्चिकायाम्।
सोऽम्भःसमीपे प्रविहाय गाङ्गं विदूरमन्विच्छति मन्दबुद्धिः॥९२२॥

यावत्स्वकीये हृदये वसन्तं सर्वेषु भूतेष्वभिवर्तमानम्।
न वेद जन्तुर्दृढनिश्चयेन तावत्त्वमर्च्यः प्रतिमास्वबुद्धैः॥९२३॥

का चिन्ता मम जीवने यदि हरिर्विश्वम्भरो गीयते
नो चेदर्भकजीवनाय जननीस्तन्यं कथं निःसरेत्।
इत्यालोच्य मुहुर्मुहुर्यदुपते लक्ष्मीपते केवलं
त्वत्पादाम्बुजसेवनेन सततं कालो मया नीयते॥९२४॥

सर्वेषु भूतेषु कृतालयं त्वां दानैश्च मानैश्च समर्हयन्तः।
मैत्र्याऽऽत्मदृष्ट्या च विलोकयन्तो धन्यास्तु कालं परियापयन्ति॥९२५॥

न चास्ति कश्चिद् दयितो न चाप्रियो न बान्धवस्ते खलु कालरूपिणः।
त्वमप्रमत्तो विशसि प्रमत्तं जनं यथाऽऽखुं विलगं महार्हः॥९२६॥

ये मुक्तसङ्गा मुनयो न धर्मं दुहन्ति कामाय निवृत्ततर्षाः।
त्वय्यर्पिताशेषविधिक्रियार्थान् निरन्तराँस्तान् सततं नतोऽस्मि॥९२७॥

मूर्धन्यया त्वं पुरुषः प्रविष्टः सर्वेषु भूतेष्विति चिन्तयन्तः।
ये मानयन्तेऽखिलभूतवर्गं नमन्ति तेभ्यः सततं नमोऽस्तु॥९२८॥

यो भक्तियोगोऽथ निरोधयोगो याभ्यां परः पुरुषः प्राप्यतेऽद्धा।
ताभ्यां विहीनो निजकर्मबद्धः क्रोशामि दीनः पुरुषं पुराणम्।।९२९।।

परं प्रधानं पुरुषं कर्मदैवं विचेष्टितं यद्रूपभेदैरुपेतम्।
कालञ्च दिव्यं भूतमयस्य हेतुमहेतुमीशं शरणं संप्रपद्ये।।९३०।।

अयं वातो वाति यस्माद् विभीतः
सूर्यश्चायं यद्भयात्तातपीति।
काले काले यद्भयाद् वर्षतीन्द्र-
स्त्रस्यन् यस्माद् भगणो भाति नित्यम्।।९३१।।

वनस्पतीनधिरूढा लताश्च सहाधारैरौषधिपादपाश्च।
स्वे स्वे काले पुष्पफलानि सर्वे यतो भीताः सुवते तं नतोऽस्मि।।९३२।।

यतो भीताः सरितश्चैव सर्वाः स्रवन्ति नोत्सर्पति चैव वार्धिः।
अग्निः समिद्धः कुरुते स्वकार्यं सहाद्रिभिर्मज्जति नैव भूमिः।।९३३।।

नभः श्वसतां यद्भयात् संददाति प्रस्थानाय प्रान्तरं वर्त्म भीतम्।
महान् लोकं तनुते स्वस्य देहं विराड्रूपो जायते येन विश्वम्।।९३४।।

स वा अनन्तोऽन्तकरश्च काले ह्यनादिरात्माऽऽदिकरोऽविनाशी।
जनं कुर्वन् जनसंघेन नित्यं प्रमापयन् मृत्युना चैव जीवान्।।९३५।।

न यस्य कालस्य जनः पराक्रमं सङ्कल्यमानोऽपि हि वेद भीषणम्।
यद् यद् हि जीवः कुरुते प्रयत्नतो विनाशयत्येष तदैव तत्त्वरम्।।९३६।।

सर्वस्य च त्वं हृदि संनिविष्टस्त्वत्तः स्मृतिर्ज्ञानमपोहनञ्च।
त्वमेव वेदैः सकलैश्च वेद्यो वेदान्तकृद् वेदविदेव च त्वम्।।९३७।।

तस्योपसन्नमवितुं जगदिच्छयाऽऽत्तनानातनोर्भुवि चलच्चरणारविन्दम्।
सोऽहं व्रजामि शरणं ह्यकुतोभयं मे येनेदृशी गतिरदर्श्यसतोऽनुरूपा।।९३८।।

यस्त्वत्र बद्ध इव कर्मभिरावृतात्मा भूतेन्द्रियाशयमयीमवलम्ब्य मायाम्।
आस्ते विशुद्धमविकारमखण्डबोधमातप्यमानहृदयेऽवसितं नमामि।।९३९।।

यः पञ्चभूतरचिते रहितः[१] शरीरे
छन्नोऽयथेन्द्रियगुणार्थचिदात्मकोऽहम्।[२]
तेनाविकुण्ठमहिमानमृषिं तमेनं
[३]वन्दे परं प्रकृतिपूरुषयोः पुमांसम्॥९४०॥

यन्माययोरुगुणकर्मनिबन्धनेऽस्मिन्
सांसारिके पथि चरंस्तदभिश्रमेण।
नष्टस्मृतिः पुनरयं प्रवृणोति लोको
युक्त्या कयाऽपि महतां समनुग्रहेण॥९४१॥

ज्ञानं य एतददधात्पुरुषः पुराणः त्रैकालिकं स्थिरचरेष्वनुवर्तितांशः।
तं जीवकर्मपदवीमनुवर्तमानास्तापत्रयोपशमनाय वयं भजेम॥९४२॥

देह्यन्यदेहविवरे जठराग्निनाऽसृग्विण्मूत्रकूपपतितो भृशतप्तदेहः।
इच्छन्नितो विवसितुं गणयन् स्वमासान् प्रस्तौति यं तमरणं शरणं प्रपद्ये॥९४३॥

येनेदृशीं गतिमहं दशमास्य ईश संग्राहितः पुरुदयेन भवादृशेन।
स्वेनैव तुष्यतु कृतेन स दीननाथः को नाम तत्प्रतिकृतिं कृपणो हि कुर्यात्॥९४४॥

पश्यत्ययं धिषणया ननु सप्त[४]बध्निः शारीरके यमशीरर्थपरं स्वदेहे।
यत्सृष्ट्या वयु[५]नया तमहं पुमांसं पश्ये बहिर्हृदि च चै[६]त्यमिव प्रतीतम्॥९४५॥

सोऽहं वसन्नपि विभो बहुदुःखवासाद् गर्भान्न निर्जिगमिषामि बहिस्तमिस्रे।
यत्रोपयातमुपसर्पति देवमाया मिथ्यामतिर्यदनु[७]संसृतिचक्रमेतत्॥९४६॥

---

१. वस्तुतः शरीररहितः।
२. यथा प्राप्तेन्द्रियगुणार्थो न भवति यः स तथा।
३. तेन ज्ञातेन वन्दे।
४. बध्निः=बन्धनरज्जुः।
५. वेति प्रजनयति यया जीवो जीवान्तरम्, ईश्वरो वा जगद् यया सा वयुना माया, वेतेः प्रजननार्थकाद् औणादिक उनप्रत्ययः पारिभाषिको वा डित्थादिरिव मायायाम्।
६. चित्तं चित्तगोचरतामर्हति इति लाक्षणिकादर्हार्थे यत्।
७. यामनु इति लौकिकविग्रहे सुप्सुपेति समासः।

तस्मादहं विगतविप्लव उद्धरिष्य आत्मानमाशु तमसः सुहृदात्मनैव।
भूयो यथा व्यसनमेतदनेकरन्ध्रं नो मे भविष्यति [१]अमुष्माश्रितविष्णुपादः॥९४७॥

योगस्य पारं परमारुरुक्षोः सङ्गो न मे स्यात् प्रमदासु जातु।
यत्सेवया प्रतिनष्टा[२]त्मलाभो वदन्ति यां निरयद्वारमस्य[३]॥९४८॥

निःसङ्गा आप्तकामाः प्रशान्ता निवृत्तिनिष्ठा निर्ममाहं निवृत्ताः।
भित्वा सूर्यं प्रव्रजन्त्येव धीराः परात्परं पुरुषं त्वां विशोकाः॥९४९॥

अहं तु त्वां सर्वभूतान्तरस्थं कृतालयं हृत्कमलेषु तेषाम्।
श्रुतानुभावं शरणं यामि दीनो न यं गता विनिवृत्ता भवन्ति॥९५०॥

यं श्रद्धया परया चैव भक्त्या योगाभ्यासात् सर्वदा संयतात्मा।
विरक्तिपूतः सङ्गदोषैर्विमुक्तः प्रयाति तं पुरुषं सम्प्रपद्ये॥९५१॥

स्वाध्यायतस्तद्विमर्शप्रकर्षात् तपोभिरुग्रैः क्रतुभिर्भूरिदानैः।
यः प्राप्यते निर्निमित्तैः समेतैः सनातनं सगुणं तं प्रपद्ये॥९५२॥

आत्मेन्द्रियाणां विजयेन चैव संन्यासतः कर्मणां सर्वदैव।
योगेन नानाङ्गभिदावताऽयं पश्यन्ति तं निर्गुणं सम्प्रपद्ये॥९५३॥

अथाप्यजोऽन्तःसलिले शयानं भूतेन्द्रियार्थात्ममयं वपुस्ते।
गुणप्रवाहं सदशेषबीजं दध्यौ स्वयं यज्जठराब्जजातः॥९५४॥

स एव विश्वस्य भवान् विधत्ते गुणप्रवाहेण विभक्तवीर्यः।
सर्गाद्यनीहोऽवितथाभिसन्धिरात्मेश्वरोऽतर्क्यसहस्रशक्तिः॥९५५॥

स त्वं भृतो मे हृदयेन नाथ कथं नु यस्योदर एतदासीत्।
विश्वं युगान्ते वटपत्र एषः शेते स्म मायाशिशुरङ्घ्रिपानः॥९५६॥

त्वं देहतन्त्रः प्रशमाय पाप्मनां निदेशभाजां च विभो विभूतये।
यथावतारास्तव सूकरादयस्तथाऽयमध्यात्मपथोपलब्धये॥९५७॥

---

१. एतदहमर्थविशेषणम्; २. अभविष्यामि इति शेषः।
३. अस्येति-जीवस्येत्यर्थः।

यन्नामधेयश्रवणानुकीर्तनाद्यत्प्रह्वणाद्यत्स्मरणादपि क्वचित्।
श्वादोऽपि सद्यः पवनाय कल्पते कुतः पुनस्ते भगवन्नु दर्शनात्।।९५८।।

अहो बत श्वपचोऽतो गरीयान् यज्जिह्वाग्रे वर्तते तेऽभिधानम्।
तेपुस्तपस्ते जुहुवुः सानुरार्या ब्रह्मानूचुर्नाम गृणन्ति ये ते।।९५९।।

तं त्वामहं ब्रह्म परं पुमांसं प्रत्यक् स्रोतस्यात्मनि संविभाव्यम्।
स्वतेजसा ध्वस्तगुणप्रवाहं वन्दे विष्णुं कपिलं वेदगर्भम्।।९६०।।

तमहं देवं शरणं सम्प्रपद्ये य एव देवो जगतां सन्नियन्ता।
असौ तु मह्यं सुमतिं संददातु नावा यया भववार्धिं तरेयम्।।९६१।।

विश्वोद्भवस्थितिलयेषु विभज्यमानमायागुणैरनुयुगं विगृहीतदेहः।
निर्मासि पासि विनिहंसि च विश्वमेतत् स त्वं विभो दिश मतिं भवभेदिनीं नः।।९६२।।

एको मयेह तु भवान् विबुधप्रधानश्चित्तीकृतो भवजलोत्तरणाय नान्ये।
तानप्यहं त्वनुयुगं कृतकायभेदानेकात्मतामुपगतान् शरणं गतोऽस्मि।।९६३।।

यो मायया विरचितं निजयाऽऽत्मनीदं स्वे रूपभेदमिव तत्प्रतिचक्षणाय।
कायेन धर्मसदने ऋषिमूर्तिनेह प्रादुश्चकार पुरुषाय नमः परस्मै।।९६४।।

सोऽयं स्थितिव्यतिकरोपशमाय सृष्टान् सत्त्वेन भूसुरगणाननुमेयतत्त्वः।
दृश्याददभ्रकरुणेन विलोकनेन यच्छ्रीनिकेतममलं कमलं दुनोति।।९६५।।

त्वय्येतदाश्चर्यमजात्ममायया विनिर्मितं भाति गुणत्रयात्मकम्।
तथाप्यहं मूढमतिस्त्वतत्त्वविद् दीनो दिदृक्षामि भवत्कलेवरम्।।९६६।।

सत्त्वं विशुद्धं वसुदेवशब्दितं यद्गीयते तत्र पुमानपावृतः।
सत्त्वे च तस्मिन् भगवान् वासुदेवः परः पुमान् शिरसा मे नमस्यते।।९६७।।

न यस्य लोकेऽस्त्यतिशयानः प्रियस्तथाऽप्रियो देहभृतां प्रियात्मनः।
तस्मिन् समस्तात्मनि मुक्तवैरके हरौ हरे चापि रतिः सताऽस्तु मे।।९६८।।

यद्द्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसङ्गादघमाशु हन्ति तत्।
पवित्रकीर्तिं तमलङ्घ्यशासनं हरं हरिं भेदभिदं सदा भजे।।९६९।।

यत्पादपद्मं महतां मनोऽलिभिर्निषेवितं ब्रह्मरसासवार्थिभिः।
लोकस्य यद् वर्षति चाशिषोऽर्थिनस्तस्मै हरे द्वैतधराय ते नमः॥९७०॥

श्यामं हिरण्यरशनार्ककिरीटजुष्टं नीलालकभ्रमरमण्डितकुण्डलास्यम्।
कम्ब्वब्जचक्रशरचापगदासिचर्मव्यग्रैर्भुजैः परिचितं शरणं श्रयेऽहम्॥९७१॥

वक्षस्यधिश्रितरमं वनमाल्यवन्तं हासावलोककलयाऽऽश्रितभीतिभेदम्।
पार्श्वभ्रमद्व्यजनचामरराजहंसं श्वेतातपत्रशशिनोपरि सेव्य[1]मानम्॥९७२॥

शुद्धं स्वधाम्न्युपरताखिलबुद्ध्यवस्थं
चिन्मात्रमेकमभयं प्रतिषिध्य मायाम्।
तिष्ठन्तमीशमनया पुरुषत्वमेत्य
तस्यां वसन्तमनिशं शरणं प्रपद्ये॥९७३॥

तत्त्वं न ते वयमनञ्जनकामदग्धाः
कर्मण्यवग्रहधियो भगवन् प्रतीमः।
धर्मोपलक्षणमिदं त्रि[2]वृदध्वराख्यं
ज्ञातं यदर्थमधिदैवमदो व्यवस्थाः॥९७४॥

उत्पत्त्यध्वन्यशरण उरुकेशदुर्गेऽ-
न्तकोग्रव्यालाकीर्णे विषयमृगतृष्यात्मगेहोरुभारः।
द्वन्द्वश्वभ्रे खलमृग[3]मये शोकदावेऽज्ञसार्थः
पादौ कस्ते शरणद कदा यामि कामोपसृष्टः॥९७५॥

तव वरद वराङ्घ्रावाशिषेहाखिलार्थे
ह्यपि मुनिभिरसक्तैरादरेणार्हणीये।
यदि रचिधियं [4]माऽऽविद्यलोकोऽपविद्धं
जयति न गणये तत् त्वपरानुग्रहेण॥९७६॥

---

१. इदं पद्यं पूर्वपद्यान्वयि।
२. त्रिभिर्देवतामन्त्रैर्वर्तते प्रवर्तते इति त्रिवृत्।
३. प्राचुर्ये मयट्।
४. मा-माम्। माविद्य-अतिशयेन विदित्वा। अपविद्धम्-जनैस्त्यक्तम्। नयति-कर्णे कर्णे कथयति।

यन्मायया गहनयाऽपहृतात्मबोधा ब्रह्मादयस्तनुभृतस्तमसि स्वपन्तः।
नालाश्रितं तव विदन्त्यधुनाऽपि तत्त्वं सोऽयं प्रसीदतु भवान् प्रणतात्मबन्धुः॥९७७॥

नैतत्स्वरूपं भवतोऽसौ[१] पदार्थभेदग्रहैः पुरुषो यद् विपश्येत्।
ज्ञानस्य चार्थस्य गुणस्य चाश्रयो मायामयो व्यतिरिक्तो यतस्त्वम्॥९७८॥

इदमच्युतविश्वभावनं वपुरानन्दकरं मनोदृशाम्।
सुरविद्विट्क्षपणैरुदायुधैर्भुजदण्डैरुपपन्नमष्टभिः॥९७९॥

यज्ञोऽसौ तव जनाय केन सृष्टो विध्यतः कलिना तवैव कोपात्।
तं नस्त्वं जलशयनाद्यशान्तमेघं यज्ञात्मन् नलिनरुचा दृशा [२]प्रपश्ये॥९८०॥

अनन्वितं भगवन् विचेष्टितं यदाऽऽत्मना चरसि हि कर्म नालम्।
विभूतये यत उपसेदुरीश्वरीं न मन्यते चान्वयतीं च तं भवान्॥९८१॥

अयं त्वत्कथामृष्टपीयूषनद्यां मनो वारणः क्लेशदावाग्निदग्धः।
तृषार्तोऽवगाढो न सस्मार दावं न निष्क्रामति ब्रह्म संपन्नवक्त्रः॥९८२॥

स्वागतं ते प्रसीदेश तुभ्यं नमः श्रीनिवासश्रिया कान्तया पाहि नः।
त्वामृतेऽधीश नाङ्गैर्मखः शोभते शीर्षहीनः कबन्धो यथा पूरुषः॥९८३॥

दृष्टः किं नो[३] दृग्भिरसद्ग्रहैस्त्वं प्रत्यग् दृष्टा दृश्यते येन दृश्यम्।
माया ह्येषा भवदीया हि भूमन् यस्त्वं षष्ठः पञ्चभिर्भासि भूतैः॥९८४॥

प्रेयान्न तेऽन्योऽस्त्यमुतस्त्वयि प्रभो विश्वं न वीक्षेत पृथग् य आत्मनः।
अथापि भक्त्येशतयोपधावतामनन्यवृत्त्याऽनुगृहाण वत्सल॥९८५॥

जगदुद्भवस्थितिलयेषु दैवतो[४] बहुविद्यमानगुणयाऽऽत्ममायया।
रचितात्मभेदमतये स्वसंस्थया [५]विनिवर्तितभ्रमगुणात्मने नमः॥९८६॥

नमो नमस्ते श्रितसत्त्वभूमन् धर्मादि सूते भवते नमोऽस्तु।
काष्ठा न यस्यास्ति वयं न विद्मो यं तं पुराणं पुरुषं नमामः॥९८७॥

---

१. असाविति आश्रय इत्यनेन सम्बध्यते;　　२. प्रवर्तयन् पश्येत्यर्थः।
३. नः अस्माकम्;　　४. दैवतः–अदृष्टात्।
५. विनिवर्तितभ्रमा गुणाश्च येन स तथा, तदात्मने नमः।

यत्तेजसाऽग्निः सुसमिद्धतेजा हव्यं वहत्यध्वर आज्यसिक्तम्।
तं यज्ञियं पञ्चविधं च पञ्चभिः स्विष्टं यजुर्भिः प्रणतोऽस्मि यज्ञम्।।९८८।।

पुरा कल्पापाये स्वकृतमुदरीकृत्य विकृतं
त्वमेवाद्यस्तस्मिन् सलिल उरगेन्द्राधिशयने।
पुमान् शेषे सिद्धैर्हृदि विधृतपादाब्जयुगलः
प्रपन्नान् पाहीश त्वयि निहितसर्वेन्द्रियगणान्।।९८९।।

अंशांशास्ते देवमरीच्यादय एते ब्रह्मेन्द्राद्या देवगणा रुद्रपुरोगाः।
क्रीडाभाण्डं विश्वमिदं यस्य विभूमन् तस्मै नित्यं नाथ नमस्ते रचयामः।।९९०।।

त्वन्माययार्थमभिपद्य कलेवरेऽस्मिन्
कृत्वा ममाहमिति दुर्मतिरुत्पथैः स्वैः।
क्षिप्तोऽप्यसद् विषयलालस आत्ममोहं
युष्मत्कथामृतनिषेक [1]उद् व्युदस्येत्।।९९१।।

त्वं क्रतुस्त्वं हविस्त्वं हुताशः स्वयं
त्वं हि मन्त्रः समिद्दर्भपात्राणि च।
त्वं सदस्यर्त्विजो दम्पती देवता
अग्निहोत्रं स्वधा सोम आज्यं पशुः।।९९२।।

त्वं पुरा गां रसाया महासूकरो दंष्ट्रया पद्मिनीं वारणेन्द्रो यथा।
स्तूयमानो नदँल्लीलया योगिभिर्व्युज्जहर्थ त्रयीगात्र[2]यज्ञक्रतुः।।९९३।।

संप्रसीद त्वमस्माकमाकाङ्क्षतां दर्शनं ते परिभ्रष्टसत्कर्मणाम्।
कीर्त्यमाने नृभिर्नाम्नि यज्ञेश ते यज्ञविघ्नाः क्षयं यान्ति तस्मै नमः।।९९४।।

यस्याङ्घ्रिपद्मं परिचर्य विश्वविभावनाया[3]त्तगुणाभिपत्तेः।
अजोऽध्यतिष्ठत् खलु पारमेष्ठ्यं पदं तमीशं शरणं प्रपद्ये।।९९५।।

---

१. उदिति उपसर्गप्रतिरूपकमव्ययम्–अप्यर्थे, असद्विषयलालस इत्यनेनान्वेति।
२. इज्यते इति यज्ञो विष्णुः, स एव क्रतुरूपः।
३. इदं यस्येत्यस्य विशेषणम्।

तथा मनुर्यो भगवान् श्रितार्तिहा यमेकमत्या पुरुदक्षिणैर्मखैः।
इष्ट्वाऽभिपेदे दुरवापमन्यतो भौमं सुखं दिव्यमथापवर्ग्यम्।।९९६।।

तमाश्रयेऽहं खलु भृत्यवत्सलं मुमुक्षुभिर्मृग्यपदारविन्दम्।
अनन्यभावे निजधर्मभाविते मनस्यवस्थाप्य भजामि पूरुषम्।।९९७।।

नान्यं ततः पद्मपलाशलोचनाद् दुःखच्छिदं मे मृगयामि कञ्चन।
यो मृग्यते हस्तगृहीतपद्मया श्रियेतरैरङ्ग विमृग्यमाणया।।९९८।।

सदा प्रसादाभिमुखं प्रसन्नवक्त्रेक्षणं चारुकपोलपालितम्।
सुनासिकं सुभ्रुवमुन्नतांसकं सदाश्रयेऽहं सुरसुन्दरं हरिम्।।९९९।।

तारुण्यरम्याङ्गमुदारवीक्षणं सदारुणोष्ठेक्षणरक्तदच्छदम्।
नमज्जनानां परमाश्रयं सदा समाश्रयेऽहं सुरसुन्दरं हरिम्।।१०००।।

कम्रं शरण्यं करुणार्णवं श्रीवत्साङ्कमुद्यद्घनकान्तिकान्तम्।
परं पुमांसं वनमाल्यवन्तं शंखारिपद्मैगर्दया लसन्तम्।।१००१।।

किरीटिनं कुण्डलिनं सुवर्णकेयूरचञ्चद्वलयावनद्धम्।
श्रीकौस्तुभाभूषणभासिकण्ठं पीताम्बरं काञ्चिकया सुबद्धम्।।१००२।।

सौवर्णमञ्जीरपदं प्रशान्तं मनोदृशं वर्धनमीक्षणीयम्।
पद्भ्यां समर्चद् हृदयारविन्दमाक्रम्य तिष्ठन्तमहं स्मरामि।।१००३।।

मुग्धस्मितालोकविलोभिवक्त्रं सरागसम्प्रेक्षितरम्यरूपम्।
वराभये ददतं शङ्करेण करद्वयेनाशु हरिं श्रयेऽहम्।।१००४।।

इदं पवित्रं परमेशचेष्टितं यशस्यमायुष्यमघौघमर्षणम्।
यः शश्वदाकर्ण्य नरोऽनुचिन्तयेद् धुनोत्यघं माधवभक्तिभावतः।।१००५।।

।। इति श्रीब्रह्मीभूतकाशीनाथतनयसौभद्रेयरघुनाथकृतौ श्रीकृष्णस्तवे पद्यानां सहस्रं पञ्चाधिकं सम्पूर्णम् ।।

●

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचना-प्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञ-विचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।

५. प्रकाशितनिबन्धस्य प्रतिमुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्ग्लग्रन्थानां समालोचनाः प्रकाश्यन्ते। तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये।

७. **"वित्त अधिकारी, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी-२२१००२** (उ.प्र.)" इति सङ्केतेन ('बैङ्कड्राफ्ट' अथवा 'पोस्टल-आर्डर' इत्येतेनैव) मूल्यं प्रेषणीयम्।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः **"सम्पादक, सारस्वती सुषमा, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी-२२१००२** (उ.प्र.)" इति सङ्केतेन विधेयः।

रजिस्टर्ड न्यूजपेपर्स एक्ट के अन्तर्गत

## विज्ञप्ति

| | | |
|---|---|---|
| १. | प्रकाशन का नाम | सारस्वती सुषमा |
| २. | प्रकाशन की तिथि | त्रैमासिक |
| ३. | प्रकाशक का नाम | **प्रो. नरेन्द्रनाथ पाण्डेय** |
| | राष्ट्रियता | भारतीय |
| | पता | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |
| ४. | सम्पादक का नाम | **प्रो. नरेन्द्रनाथ पाण्डेय** |
| | राष्ट्रियता | भारतीय |
| | पता | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |
| ५. | मुद्रक का नाम | **श्री अनूप कुमार नागर** |
| | राष्ट्रियता | भारतीय |
| | पता | श्रीजी प्रिण्टर्स, नाटी इमली, वाराणसी |
| ६. | स्वामित्व | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |

मैं नरेन्द्रनाथ पाण्डेय घोषित करता हूँ कि उल्लिखित विज्ञप्ति मेरी जानकारी के अनुसार बिलकुल ठीक है।

हस्ताक्षर

**नरेन्द्रनाथ पाण्डेय**

निदेशक, अनुसन्धान-संस्थान
सम्पूर्णानन्द संस्कृत विश्वविद्यालय,
वाराणसी - २२१००२

